'युक्तमेव, एतन्नाश्चर्यम्' इत्याह— साधूना स्वधर्मवर्तिना समचित्तानामात्मविदां दर्शनात् पुसः संसारबन्धो न भवेत्, निवर्तते इत्यर्थः। मत्कृतात्मनां मय्यर्पितचित्ताना दर्शनात्तु सुतरा बन्धो न भवेत्, तेषा कृपातिरेकात्। तत्र दृष्टान्तमाह— सवितुः सूर्यस्य दर्शनाद्यथाऽक्ष्णोर्बन्धोऽन्धकारो निवर्तते, तथा पुंसोऽज्ञान निवर्तते इत्यर्थः ॥ ४१ ॥ प्राधान्यादेकमेव सम्बोधयति— हे नलकूबरेति। तस्मान्मद्भक्तनारदानुग्रहेणैव कृतार्थत्वात् मत्परमौ अहमेव परमः इष्टदेवतया चिन्तनीयो ययोस्तथाभूतौ सन्तौ सादनं स्वनिकेतन गच्छतम्। कृतार्थत्वमेव स्पष्टयति— सञ्जात इति। न भवः संसारो यस्मात् स अभवो यो मयि भावः प्रेमातिशयो वा युवयोरीप्सितोऽपेक्षितः स तु सम्यग्जात एव ॥ ४२ ॥ इत्येवं भगवता उक्तौ तौ नलकूबरमणिग्रीवौ बद्धमुलूखलं यस्मिंस्तं कृष्ण पुनःपुनः परिक्रम्य प्रणम्य आमन्त्र्य पृष्ट्वा च उत्तरा दिशं जग्मतुरित्यन्वयः॥ ४३ ॥ इति श्रीवल्लभाचार्य— वंश्यगोपाल-

साधूनां समचित्तानां सुतरां मत्कृतात्मनाम् ॥ दर्शनान्नो भवेद्बन्धः पुंसोऽक्ष्णोः सवितुर्यथा ॥ ४१ ॥ तद्गच्छतं मत्परमौ नलकूबर सादनम् ॥ सञ्जातो मयि भावो वामीप्सितः परमोऽभवः ॥ ४२ ॥ श्रीशुक उवाच ॥ इत्युक्तौ तौ परिक्रम्य प्रणम्य च पुनः पुनः ॥ बद्धोलूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम् ॥ ४३ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे तामसनिरोधनिरूपणप्रकरणे यमलार्जुनमुक्तिनिरूपणं नाम दशमोऽध्यायः ॥ १० ॥ श्रीशुक उवाच ॥ गोपा नन्दादयः श्रुत्वा द्रुमयोः पततो रवम् ॥ तत्राऽऽजग्मुः कुरुश्रेष्ठ निर्घातभयशङ्किताः ॥ १ ॥ ॥ छ ॥

सूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र तामसरोधवर्णने ॥ दशमो विवृतोऽध्यायः कृष्णबन्धनिरूपकः ॥ ३ ॥ ॥ छ ॥ बृहद्वनात् समागत्य वृन्दारण्यमेकादशे ॥ चारयन् वत्सकान् कृष्णोऽहनद्वत्सबकासुरौ ॥ १ ॥ 'यावत्तौ गुह्यकौ स्तुतिं कुर्वन्तौ स्थितौ तावत्तच्छब्दो न केनापि श्रुत' इत्यपि भगवच्चरितमाश्चर्यमेव, 'तत्त्वया विश्वसनीयम् महता तत्र विश्वास एव युक्त' इत्याशयेन सम्बोधयति— हे कुरुश्रेष्ठ इति। नन्दादयो गोपाः पततोः द्रुमयोः रवं शब्द श्रुत्वा निर्घातो वज्रपातस्तद्भयेन शङ्कितचित्तास्तत्र तयोः पतनस्थाने आजग्मुरित्यन्वयः ॥ १ ॥

१ निरोध सर्वभावेन वर्णनीयो हि गोकुले। स्त्रीणा स चोक्त पुसा च नन्दप्राधान्यभावत ॥ एकादशे ततोऽध्याये पूर्वावस्थामशोषत । त्याजयित्वा तु नन्दस्य कृष्णभावो निरूप्यते ॥ मोचन मुग्धलीला च स्थानान्तरपरिग्रह. । तत्र लीला वत्सबकौ ज्ञान चेति निरूप्यते ॥ षड्भिमि षोडशभिश्चतुर्भि षड्भिरेव च । नवभि पचभिश्चेति सप्तार्थो सगुणो हरि ॥ स्वार्थे तु भगवान् कार्यस्तथात्व ज्ञाप्यते पुन । सर्वस्व हरिरेवेति तदर्थं त्याग ईर्यते ॥ वृदावने स्थितौ हेतुर्भगवत्तोषत परम्। नास्तीति ज्ञापनायोक्ता प्रीतिलीलोपयोगिषु ॥ वत्सचारणदोषस्य निवृत्तिर्वत्समारणम्। गोपालदोषव्यावृत्त्यै वत्सस्यापि विनाशनम् ॥ स्थानत्यागे हरीच्छैव कारण न तु दुष्टता । तज्ज्ञापयितुमत्रापि बकवत्सौ विनाशितौ ॥ अतो विमशा गोपानामानन्दश्च निरूपित । तदर्थमेव च हरेर्बालभावो न चान्यथा ॥ सपन्ने तु ततस्तस्य परित्यागोऽपि वर्ण्यते " इति सुबोधिनीकारिका ।

आगताश्च तत्र भूम्या निपतितौ यमलार्जुनौ ददृशुः । दृष्ट्वा च तत्पतनस्य कारणं लक्ष्यं प्रत्यक्षतः सिद्धमप्यविज्ञाय " कस्य राक्षसादेरिदं वृक्षपातनं कर्म ? कुतो वा कारणादिद वृक्षपतनरूपमाश्चर्यं जातम् " इति वदन्तो 'अय देवदैत्यादिकृतो भाव्यनिष्टसूचकः कश्चिदुत्पात्' इति भयेन कातरा व्याकुलाः सन्तो बभ्रमुः, निश्चय न जग्मुरिति द्वयोरन्वयः । 'किं तत्कारणम्' इत्यपेक्षायामाह— उलूखल विकर्षन्तं बालकमिति । उलूखलविकर्षणे हेतुमाह— दाम्ना बद्धमिति ॥ २ ॥ ३ ॥ 'तिरश्चीन तिर्यक्पतितमुलूखल विकर्षता वृक्षयोर्मध्यगतेनानेन कृष्णेन वृक्षौ पातिताविति वयमचक्ष्महि दृष्टवन्तः । न केवलमेतावत्, किंतु वृक्षाभ्यां निर्गतौ दिव्यौ पुरुषावपि दृष्टवन्त इति नन्दादीन् प्रति बाला ऊचुः ' इत्यन्वयः ॥ ४ ॥ तत्र ये गोपाः केवल तर्क-निष्ठास्ते 'तस्य बालस्येदृशोस्तर्वोरुत्पाटन न घटेत' इति तर्केण तदुक्त तैर्बालैर्यदुक्त तन्न जगृहुः नाङ्गीकृतवन्तः । केचित्तु पूतनातृणावर्तादीना भङ्गस्य

**भूम्यां निपतितौ तत्र ददृशुर्यमलार्जुनौ ॥ बभ्रमुस्तदविज्ञाय लक्ष्यं पतनकारणम् ॥ २ ॥ उलूखल विकर्षन्तं दाम्ना बद्ध च बालकम् ॥ कस्येद कुत आश्चर्यमुत्पात इति कातराः ॥ ३ ॥ बाला ऊचुरनेनेति तिरश्चीनमुलूखलम् ॥ विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि ॥ ४ ॥ न ते तदुक्तं जगृहुर्न घटेतेति तस्य तत् ॥ बालस्योत्पाटनं तर्वोः केचित् सन्दिग्धचे-तसः ॥ ५ ॥ उलूखलं विकर्षन्तं दाम्ना बद्ध स्वमात्मजम् ॥ विलोक्य नन्द प्रहसद्वदनो विमुमोच ह ॥ ६ ॥**

दृष्टत्वात् 'इदमपि तस्यैव कर्म भवेद्वा न वा' इति सन्दिग्धं चेतो येषा तथाभूता बभूवुः ॥ ५ ॥ तत्र भगवत्कृपापात्रस्य स्नेहातिशययुक्तस्य नन्दस्य चरितमाह— उलूखलमिति । दाम्नोलूखले बद्धम्, अत एव उलूखलं विकर्षन्तं स्व स्वकीयमात्मजं पुत्र विलोक्य प्रहसद्वदनो नन्दस्त विशेषेण स्नेहप-रवशः शीघ्र मुमोचेत्यन्वयः । नच " तस्मिन् भयसमये कथ प्रहासः सम्भवति ? " इति शङ्क्यम् । तद्धौर्त्यस्मरणेन, कुशलीदर्शनेन वा, यदाकदाचिन्नन्दो भगवन्तं स्वसमीपमाह्वयति तदा यशोदाया स्नेहाधिक्यात् ता त्यक्त्वा नायाति, अधुना तु तया बद्ध इति 'यस्या त्व बहुस्नेह करोषि तयैव त्व बद्धोऽसि, अहमेव त्वा विमोचयामि' इत्युपालम्भाभिप्रायेण वा, भीत मत्वा भयनिवृत्त्यभिप्रायेण वा, प्रहाससम्भवात् । 'ह' इत्याश्चर्यम् । जगतो बन्ध-विमोचकस्यापि बन्धनं नन्देन विमोचितमित्याश्चर्यमेव ॥ ६ ॥



१ 'तिर्यग्गतम्' इतिपाठान्तरम् ।

यमलार्जुनभङ्गं दृष्ट्वाउत्पातशङ्कया व्याकुलचित्ताना तद्विस्मृत्यर्थमतीव बाल्यमनुकरोति स्म तदाह—गोपीभिरिति । स्तोभित ‘ अयमेव सम्यक् नृत्यं जानाति, नान्य ’ इत्येव तत्समक्ष परस्परमुक्त्वा ‘ हे कृष्ण ! त्व नृत्य कुरु, तुभ्य लड्डुकनवनीतादिक दास्याम ’ इत्येव वचनेन हस्ततालादिना च प्रोत्साहितो भगवान् ऐश्वर्यादिगुणपूर्णोऽपि तद्वशस्तासा प्रेमवशः सन् प्राकृतबालवत् क्वचिदनृत्यत् । तथैव गानार्थ गोपीभिः स्तोभितः क्वाचित् मुग्धवत् अज्ञवत् उद्गायति उच्चैः ‘ यथा तासा हास्यहर्षादिक स्यात्तथा ’ गायति स्म । तद्वशवर्तित्वे दृष्टान्तमाह—दारुयन्त्रवदिति । काष्ठनिर्मितपुत्तालिकावदित्यर्थः ॥ ७ ॥ लीलान्तरमाह—बिभर्तीति । क्वचिद्बलपरीक्षार्थ गोपीभिः ‘ पीठकमानय ’ इत्याज्ञप्तस्तदानेतुमसमर्थ इव केवल बिभर्ति हस्ताभ्या गृह्णाति, नतूत्थापयति । गुरुत्वादेतदानेतुमशक्तश्चेत्तदा, ततो लघु ‘ उन्मान तण्डुलादिमानपात्रमानय ’ इत्याज्ञप्तस्तदपि केवल बिभर्ति । तदा ततोऽपि लघु ‘ पादुकमानय ’ इत्याज्ञप्तस्तदपि केवल बिभर्ति । इत्येवमत्यन्तमसामर्थ्य प्रकटयति । किंच ‘ मया सह युद्धं कुरु ’ इत्युक्तो बाहुक्षेप बाहुविस्फोटनादिकं च कुरुते ।

गोपीभिः स्तोभितोऽनृत्यद्भगवान् बालवत् क्वचित् ॥ उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयन्त्रवत् ॥ ७ ॥
बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकम् ॥ बाहुक्षेप च कुरुते स्वानां च प्रीतिमावहन् ॥ ८ ॥
दर्शयंस्तद्विदां लोक आत्मनो भृत्यवश्यताम् ॥ व्रजस्योवाह वै हर्षं भगवान् बालचेष्टितै ॥ ९ ॥
क्रीणीहि भो फलानीति श्रुत्वा सत्वरमच्युत ॥ फलार्थी धान्यमादाय ययौ सर्वफलप्रद ॥ १० ॥

एवं लीलायाः प्रयोजनमाह—स्वानामिति । स्वाना व्रजभक्तानाम्, चकारादन्येषामपि द्रष्टृश्रोतृवक्तृणा प्रीतिमावहन् सम्पादयितुमित्यर्थ. ॥ ८ ॥ एव तत्प्रीतिसम्पादनप्रयोजनमाह— दर्शयन्निति । लोके ये तद्विदः फलसाराभिज्ञास्तेषा वै निश्चयार्थमात्मनो भृत्यवश्यता दर्शयन् भगवान् बालचेष्टितैर्व्रजस्य व्रजस्थजनस्य हर्षमुवाह अकरोत् ॥ ९ ॥ अत्र ‘ क्रीणीहि ’ इत्यत आरभ्य ‘ गोपवृद्धा ’ इत्यतः प्राक्तना एकादश श्लोकाः कैश्चिद्व्याख्याकृद्भिर्व्याख्याताः, कैश्चित्तु न व्याख्याताः । परंतु पुस्तकेषूपलभ्यमानत्वात् प्रकरणविरोधाभावाच्चास्माभिरपि व्याख्यायन्ते । ‘ भो लोक ! फलानि क्रीणीहि ’ इति फलविक्रयिण्या वचन श्रुत्वा अच्युतः ऐश्वर्यादिसर्वफलपरिपूर्णोऽपि भगवान् फलार्थी सन् धान्यमादाय सत्वर शीघ्र ययौ । एवं परिपूर्णस्यापि गमने प्रयोजनं सूचयन्नाह— सर्वफलप्रद इति । धर्मादिचतुर्विधसर्वफलप्रदत्वात्तस्या अपि किञ्चित् फलं प्रदातु गत इति भावः ॥ १० ॥

---

१ “ विद्योपजीविना सेवा येनैव च सुख भवेत् । राजसीं तामसीं लीला सात्विकी च चकार ह ” इति । २ चक्रवर्तिप्रभृतिभि । ३ श्रीवल्लभाचार्यश्रीधरस्वामिप्रभृतिभि ।

तस्य त्वरया बहिर्निर्गच्छतोऽच्युतस्य च्युतानि 'मार्गे एव पतितानि' धान्यानि यस्मा तथाभूतमपि करद्वय तत्सौन्दर्यादिविमोहिता फलविक्रयिणी फलै-रपूरयत् । तदाऽच्युतेनापि करस्थेनावशिष्टेन तद्भाण्डे प्रक्षिप्तेन धान्येन तस्या' फलभाण्ड रत्नैर्माणिक्यादिभिरपूरि पूरितम् ॥ ११ ॥ अथेति लीलान्तरे। भग्नावर्जुनौ येन तं कृष्णं राम च सरितो यमुनायास्तीर गत बालैः सह भृश क्रीडन्तं रोहिणी आह्वयत् आजुहाव । तस्याः सौभाग्यातिशय सूचय-न्नाह– देवीति ॥ १२ ॥ एवमाहूतावपि पुत्रकौ क्रीडायामासङ्गेन आसक्त्या यदा नोपेयाता स्वसमीप नागच्छता तदा तावानेतु रोहिणी यशोदा प्रेषयामास । 'तत्प्रेषणेऽपि किं स्यात्' इत्याशङ्क्याह– पुत्रवत्सलामिति । रोहिण्या· सकाशादपि तयोर्यशोदायाः स्नेहाधिक्यात्तयोरपि तस्या मानाधिक्या-त्तयाहूतावागमिष्यत इत्याशयः ॥ १३ ॥ सा यशोदा सहाग्रज बलभद्रसहित स्वसुतं कृष्णमजोहवीत् आजुहावेत्यन्वयः । तस्याः स्नेहातिशयं दर्शय-

फलविक्रयिणी तस्य च्युतधान्यकरद्वयम् ॥ फलैरपूरयद्रत्नैः फलभाण्डमपूरि च ॥ ११ ॥ सरित्तीरगतं कृष्णं भग्नार्जुनम-थाह्वयत् ॥ रामं च रोहिणी देवी क्रीडन्त बालकैर्भृशम् ॥ १२ ॥ नोपेयातां यदाहूतौ क्रीडासङ्गेन पुत्रकौ ॥ यशोदां प्रेषयामास रोहिणी पुत्रवत्सलाम् ॥ १३ ॥ क्रीडन्त सा सुतं बालैरतिवेलं सहाग्रजम् ॥ यशोदाऽजोहवीत् कृष्णं पुत्रस्ने-हस्नुतस्तनी ॥ १४ ॥ कृष्ण कृष्णारविन्दाक्ष तात एहि स्तन पिब ॥ अलं विहारैः क्षुत्क्षान्त क्रीडाश्रान्तोऽसि पुत्रक ॥ १५ ॥ हे रामागच्छ ताताऽऽशु सानुज· कुलनन्दन ॥ प्रातरेव कृताहारस्तद्भवान् भोक्तुमर्हति ॥ १६ ॥

न्नाह– पुत्रस्नेहेन स्नुतौ स्तनौ यस्या सा । आह्वाने हेतुमाह– अतिवेलमिति । भोजनादिवेलाऽतिक्रान्ता येन तमित्यर्थः । वेलातिक्रमे हेतुमाह– बालैः सह क्रीडन्तमिति ॥ १४॥ तदाह्वानप्रकारमाह– कृष्णकृष्णेति । वीप्सा दूराच्छ्रवणार्था । 'त्वद्दर्शनेनैव मम सन्तापहानिः परमानन्दश्च' इति सूच-यन्ती सम्बोधयति– अरविन्दाक्षेति । स्नेहाधिक्येनाह–हे पुत्रकेति । तत्रापि शीघ्रागमनार्थमाह–हे तातेति । एहि आगच्छ, स्तनं पिब । यतः क्षुधा क्षान्तोऽसि॥ विहारैरलं पूर्णम्, यतः क्रीडया श्रान्तोऽसि॥ १५॥ एवमाह्वानेऽपि कृष्णमनागच्छन्तं विलोक्य राममाह्वयति–हे रामेति। 'तव दर्शनेनैवास्माक-मानन्दो भवति' इत्याशयेन सम्बोधयति– कुलनन्दनेति । तत्र स्नेहातिशय सूचयन्त्याह– तातेति । सानुज' कृष्णेन सहितः तमपि गृहीत्वाऽऽशु आगच्छ । तत्र हेतुमाह–यस्माद्भवान् प्रात काल एव कृताहारस्तस्माद्भोक्तुमर्हतीति ॥ १६ ॥

शीघ्रमागमने हेत्वन्तरमप्याह—प्रतीक्षत इति । हे दाशार्हकुलोत्पन्न ! व्रजाधिपो नन्दो भोक्ष्यमाणो वा युवा प्रतीक्षते युवयोरागमन प्रतीक्षते । अत एहि । आवयोः प्रिय धेहि सुख सम्पादय । युवयोरागमनाद्बाललीलाविरमाद्बालका अपि स्वगृह यान्तु ॥ १७ ॥ एवमुक्तेऽपि अनागच्छतस्तस्य क्रीडोत्साह विरमयितु स्नानदानाद्युत्साहमुत्पादयति—धूलीति । हे तात ! यतस्त्वं धूलिधूसरिताङ्गः, अतो मज्जन यथावत् स्नानमावह कुरु । अद्यदिने भवतो जन्मर्क्ष जन्मनक्षत्रमस्तीति शुचिः सन् विप्रेभ्यो गा देहि ॥ १८ ॥ तदैव स्नानादि कृत्वाऽऽगतान् बालान् दर्शयित्वा मात्सर्यं जनयन्त्याह—पश्य पश्येति । मातृभिर्मृष्टाः स्नापनादिना निर्मलीकृताश्च ते सुष्ठु अलङ्कृताश्च तान् ते तव वयस्यान् सखीन् पश्य पश्य, अतस्त्वमपि स्नातः कृताहारः स्वलङ्कृतश्च सन् विहरस्वेत्यन्वयः ॥ १९ ॥ 'नेम विरिञ्चो न भव' इत्यादावुक्तमेव यशोदाया ब्रह्मादिदुर्लभभगवत्कृपापात्रत्वं पुनः सूचयन्नाह—इत्थमिति । इत्थं वदन्ती यशो-

प्रतीक्षते त्वां दाशार्ह भोक्ष्यमाणो व्रजाधिपः ॥ एह्यावयोः प्रिय धेहि स्वगृहान् यात बालकाः ॥ १७ ॥ धूलिधूसरिताङ्गस्त्वं पुत्र मज्जनमावह ॥ जन्मर्क्ष तेऽद्य भवति विप्रेभ्यो देहि गा· शुचि· ॥ १८ ॥ पश्य पश्य वयस्यांस्ते मातृमृष्टान् स्वलङ्कृतान् ॥ त्व च स्नातः कृताहारो विहरस्व स्वलङ्कृत· ॥ १९ ॥ इत्थं यशोदा तमशेषशेखरं मत्वा सुत स्नेहनिबद्धधीर्नृप ॥ हस्ते गृहीत्वा सहराममच्युत नीत्वा स्ववाट कृतवत्यथोदयम् ॥ २० ॥ गोपवृद्धा महोत्पाताननुभूय बृहद्वने ॥ नन्दादयः समागम्य व्रजकार्यममन्त्रयन् ॥ २१ ॥

दा शनैरुपसङ्गम्य तमशेषाणा सर्वेषा ब्रह्मादिस्तम्बपर्यन्ताना शेखरं चूडामणिं पूज्यमप्यच्युत श्रीकृष्ण सुत मत्वा हस्ते गृहीत्वा सहरामं रामेण सहित स्ववाटं स्वगृहं नीत्वा, अथानन्तर उदयं स्नपनभोजनालङ्कारादि मङ्गल कृतवती । तथाभूतस्यापि सुतत्वेनाभिमाने हेतुमाह—स्नेहनिबद्धधीरिति । पुत्रस्नेहेन तस्मिन्निबद्धा धीर्यस्याः सा, अतस्तथैव तस्यास्तत्राभिमानः । भगवानपि तथैवानुकरोति, 'ये यथा मा प्रपद्यते तांस्तथैव भजाम्यहम्' इति वचनात् । अशेषशेखरत्वे हेतुरच्युतपदेनैव सूचितः, यत एव क्रीडन्नपि स्वरूपतो गुणतश्चाच्युत एव । विश्वासार्थं नृपेति सम्बोधनम् ॥ २० ॥ एव बृहद्वने विहृत्येतोऽग्रे विहारार्थं वृन्दावन गन्तुमिच्छताऽन्तर्यामिणा कृष्णेन प्रेरिताना गोपानां सम्मन्त्रणमाह—गोपवृद्धा इति । नन्दादयो गोपवृद्धा बृहद्वने महोत्पातान् पूतनागमनादीननुभूय समागम्य एकत्र मिलित्वा व्रजकार्यं व्रजस्य हितममन्त्रयन् विचारितवन्तः ॥ २१ ॥

१ "उद्यमो मुख्यसम्पत्तिर्मंत्रो हेतुस्त्रिभिस्तत । निर्धारितपरित्याग स्थानान्तरगुणस्तत ॥ कृष्णाज्ञयेति कालस्य -पेक्षातो नवरणम् । पञ्चभिर्गमन चैव रतिस्तत्र हरे परा ॥ एव कलाभिर्भगवान् पूर्णो वृन्दावने बभौ" इति सुबोधिनीकारिका ।

तत्र तेषु मिलितगोपेषु मध्ये उपनन्दनामा गोप आह– तत्र "बहूनां परिभाषणे कोलाहलेन तत्त्वनिर्धारो न स्यात्, अत एकेन मुख्येन वक्तव्यम्" इति तस्य मुख्यता सूचयन् गुणानाह–उपनन्देति।'नाम्ना नन्दस्य प्रेमास्पद मुख्यो मन्त्री'इति ज्ञापितम्।'गोप' इत्यनेन तन्मध्यपातित्वेन तुल्येष्टानिष्टश्च ज्ञानेन वयसा चाधिकः।तत्र ज्ञानाधिक्य स्पष्टयति– देशेति। यस्मिन् देशे यस्मिन् काले योऽर्थः प्रयोजन यथा सिद्ध्यति तस्य तत्त्व निदान जानातीति तथा। 'एवभूतोऽपि यदि भगवति भक्तिमान्न स्यात् तदा सर्वं व्यर्थम्' अत आह– प्रियकृद्रामकृष्णयोरिति॥२२॥ तद्वाक्यान्येवाह– उत्थातव्यमित्यादिसप्तभिः। इतस्थानात्तु अस्माभिरुत्थातव्यम्, अन्यत्र गन्तव्यमित्यर्थ.। तत्र हेतुमाह– आयान्तीति। बालानाम् 'प्रजानाम्' इति पाठान्तरम्, नाशहेतवो महोत्पाता यतोऽत्रायान्ति।'अस्माकमेतदुपेक्षा च न युक्ता' इत्याशयेनाह–गोकुलस्य हितैषिभिरिति॥ २३॥ उत्पातानेव दर्शयति– मुक्त इति। राक्षस्या पूतनयाऽसौ बालकः कृष्ण कथचित् साक्षात्कारणस्यादर्शनात् केनाप्यनिर्वचनीयेनैव कारणेन मुक्तः। 'असौ' इत्यनेन स्वय तत्रागत-

> तत्रोपनन्दनामाह गोपो ज्ञानवयोधिक.॥ देशकालार्थतत्त्वज्ञ' प्रियकृद्रामकृष्णयोः॥ २२॥ उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभि.॥ आयान्त्यत्र महोत्पाता बालानां नाशहेतव.॥ २३॥ मुक्तः कथचिद्राक्षस्या बालघ्न्या बालको ह्यसौ॥ हरेरनुग्रहान्नूनमनश्चोपरि नापतत्॥ २४॥ चक्रवातेन नीतोऽयं दैत्येन विपदं वियत्॥ शिलायां पतितस्तत्र परित्रात. सुरेश्वरैः॥ २५॥ यन्न म्रियेत द्रुमयोरन्तरं प्राप्य बालकः॥ असावन्यतमो वाऽपि तदप्यच्युतरक्षणम्॥ २६॥ यावदौत्पातिकोऽरिष्टो व्रज नाभिभवेदितः॥ तावद्बालानुपादाय यास्यामोऽन्यत्र सानुगाः॥ २७॥

मङ्के स्थित प्रदर्शयति। राक्षस्यादिपदत्रयेण गोपैस्तस्या अप्रतीकारत्वं सूचयति। सर्वानुभवसिद्धत्वं सूचयति–हीति। नूनमिति निश्चयेन हरेरनुग्रहादेवास्योपरि अनः शकटश्च नापतत्॥ २४॥ चक्रवातस्वरूपेण दैत्येन तृणावर्तेन वीना पक्षिणां पद विहारस्थानं विगतप्रतिष्ठ वेति विपद वियत् आकाश प्रति नीतोऽसौ बालकः शिलाया पतितः, तत्रापि सुरेश्वरैरस्मत्संराधितैर्देवैरेव परित्रातः संरक्षितः॥ २५॥ द्रुमयोरन्तर प्राप्यासौ कृष्णोऽन्यतमो वापि कश्चिद्बालको यन्न म्रियेत न मृतस्तदप्यच्युतेनैव रक्षणमासीत॥ २६॥ एवमुत्पातबहुत्वस्य जातत्वादग्रेऽपि सम्भवाच्च यावदौत्पातिकः उत्पातजनित. अरिष्टः बालविनाशाद्यनर्थः व्रज नाभिभवेन्न स्पृशेत् तावत् ततः पूर्वमेव बालानुपादाय गृहीत्वा सानुगा गोधनभृत्यादिसहिता वयमितः स्थानादन्यत्र यास्याम इत्यन्वयः॥ २७॥

१ अलौकिकोऽरिष्टहेतुरुत्पात सर्वनाशक॥ महोत्पातो बुधैर्ज्ञेयो यत्र तत्त्यागमर्हति। २ 'प्रजानाम्' इति पाठान्तरम्।

‘एवं चेत्तर्हि स्थलान्तरं विचार्यताम्’ इत्यत्राह—वनमिति। वृन्दावनाख्य वनम् ‘अस्ति’ इति शेषः। तद्विशिनष्टि—गोपगोपीगवां सेव्यमिति। तत्र हेतुमाह—पशव्यमिति। पशुभ्यो हितम्। तत्र हेतुमाह— नवानि काननान्यवान्तरवनानि यस्मिस्तत्, तथा पुण्याः पवित्रा दर्शनस्पर्शादिना पुण्यजनका अद्र्यादयो यस्मिंस्तत् ॥ २८ ॥ यस्मात् सर्वसुखावह तत्तस्मात्तत्राद्यैव यास्यामः। शकटान् युङ्क्त बलीवर्दयुक्तान् कुरुत, मा चिर विलम्बो न कर्तव्यः। गोधनान्यग्रतो यान्तु। एवमुक्त्वाऽपि ‘प्रारब्धवशात् कदाचित्तत्रापि कश्चिदुत्पातः स्यात्’ इत्याशङ्क्याह—भवतां यदि तत्र गमनं रोचते, ‘तर्हि गन्तव्यम्’ इति शेषः ॥ २९ ॥ तदुपनन्दवचः श्रुत्वा एकधियः विप्रतिपत्तिरहिताः गोपा नन्दादयः स्वान् स्वान् व्रजान् शकटान् समायुज्य रूढाः शकटे आरोपिताः परिच्छदा उपकरणानि यैस्ते ययुः ॥ ३० ॥ एतदेव स्पष्टयति— वृद्धानिति। ‘राजगमनमिव तेषामपि गमनमभूत्’ इत्याशयेन सम्बो-

वनं वृन्दावनं नाम पशव्य नवकाननम् ॥ गोपगोपीगवां सेव्यं पुण्याद्रितृणवीरुधम् ॥ २८ ॥ तत्तत्राद्यैव यास्यामः शकटान् युङ्क्त मा चिरम् ॥ गोधनान्यग्रतो यान्तु भवतां यदि रोचते ॥ २९ ॥ तच्छ्रुत्वैकधियो गोपा· साधु साध्विति वादिनः ॥ व्रजान् स्वान् स्वान् समायुज्य ययू रूढपरिच्छदा· ॥ ३० ॥ वृद्धान् बालान् स्त्रियो राजन् सर्वोपकरणानि च ॥ अनस्स्वारोप्य गोपाला यत्ता आत्तशरासनाः ॥ ३१ ॥ गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वत· ॥ तूर्यघोषेण महता ययु· सहपुरोहिता· ॥ ३२ ॥ गोप्यो रूढरथा नूत्नकुचकुङ्कुमकान्तय· ॥ कृष्णलीलां जगु· प्रीता निष्ककण्ठ्य सुवाससः ॥ ३३ ॥ तथा यशोदारोहिण्यावेकं शकटमास्थिते ॥ रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके ॥ ३४ ॥

धयति—हे राजन्! यत्ताः कृतप्रयत्नाः आत्तानि गृहीतानि शरासनानि यैः ते गोपाला वृद्धादीन् अनस्स्वारोप्य ॥ ३१ ॥ गोधनानि पुरस्कृत्य अग्रतः कृत्वा सर्वतः शृङ्गाण्यापूर्य निर्गमनज्ञापनार्थं महान्त शृङ्गशब्दं कृत्वा महता तूर्यघोषेण सह महान्तं तूर्यशब्द कुर्वतः पुरोहितैर्ब्राह्मणैः सह ततो निर्ययुरित्यन्वय. ॥ ३२ ॥ रूढरथाः रथोपर्यारूढाः। नूतनैः कुचगतैः कुङ्कुमैः कान्तिर्यासां ताः, यद्वा नूत्नेषु कुचेषु यत् कुङ्कुमं तेन कान्तिर्यासा ताः। ‘निष्ककण्ठ्य’ इत्युपलक्षणम्, सर्वाभरणभूषिता इत्यर्थः। सुष्ठु वासासि यासां ताः। एवभूता गच्छन्त्यो गोप्यः कृष्णलीलां जगुः ॥ ३३ ॥ तथा तयोः कृष्णरामयोः कथाना श्रवणे उत्सुकमुत्साहो ययोस्ते यशोदारोहिण्यौ कृष्णरामाभ्यां सहैक शकटमास्थिते आरुह्य स्थिते रेजतुरित्यन्वयः ॥ ३४ ॥

एवं शकटैर्वृन्दावनं सम्प्रविश्य समागत्य गोपास्तत्र अर्धचन्द्रवत् अर्धचन्द्राकार व्रजावास गोकुलवसतिस्थान चक्रुरित्यन्वयः। वृन्दावनस्य सर्वोत्तमत्वमाह– सर्वेति। सर्वेषु ग्रीष्मादिष्वपि कालेषु सुखमेवावहति प्रापयतीति तथा तत् ॥ ३५ ॥ 'वृन्दावनस्योत्तमत्व सावधानतया बोधव्यम्' इत्याशयेन सम्बोधयति– नृपेति। योगिजनादिमनोरमत्वात् रामः, लक्ष्मीपतित्वात् माधवः कृष्णः, तयोरपि वृन्दावनादीनि वीक्ष्योत्तमा प्रीतिरासीत्। अन्यस्य तु का वार्ता? इति इदमेव मुख्यं विहारस्थानमित्याशयः ॥ ३६ ॥ वर्णिता बाललीलामुपसंहरति– एवमिति। एवमुक्तप्रकारेण बालचेष्टितैः कलवाक्यैर्मधुरभाषितैश्च व्रजौकसां प्रीति यच्छन्तौ कुर्वन्तौ रामकृष्णशक्तिरूपत्वात् स्वाधीनेन गच्छता कालेन वत्सपालौ च सञ्चारणयोग्यवयस्कौ बभूवतुः। ॥ ३७ ॥ कौमारलीला निरूपयति– अविदूरे इत्यादिना। व्रजभुवः अविदूरे नातिदूरे बाल्यात्, न चातिनिकटे तृणाभावात्, मध्ये मध्ये जनागमनेन

वृन्दावनं सम्प्रविश्य सर्वकालसुखावहम् ॥ तत्र चक्रुर्व्रजावासं शकटैरर्धचन्द्रवत् ॥ ३५ ॥ वृन्दावनं गोवर्धनं यमुनापुलिनानि च ॥ वीक्ष्याऽऽसीदुत्तमा प्रीती राममाधवयोर्नृप ॥ ३६ ॥ एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः ॥ कलवाक्यैः स्वकालेन वत्सपालौ बभूवतुः ॥ ३७ ॥ अविदूरे व्रजभुवः सह गोपालदारकैः ॥ चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ ॥ ३८ ॥ क्वचिद्वादयतो वेणून् क्षेपणैः क्षिपतः क्वचित् ॥ क्वचित् पादैः किङ्किणीभिः क्वचित् कृत्रिमगोवृषैः ॥ ३९ ॥ वृषायमाणौ नर्दन्तौ युयुधाते परस्परम् ॥ अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा ॥ ४० ॥

स्थानसङ्कोचेन च यथा सुख विहारासिद्धेश्च अतो व्रजजनाह्वानश्रवणयोग्ये विस्तृतप्रदेशे गोपालाना दारकैर्बालकैः सह नानाविधा वेणुवेत्रशृङ्गकन्दुकादयः क्रीडापरिच्छदाः क्रीडासाधनानि ययोस्तौ, तानि गृहीत्वा क्रीडन्तौ वत्साश्चारयामासतुरित्यन्वयः ॥ ३८ ॥ क्वचिद्वेणून् वादयतः इत्यादि। लटो द्विवचनम्। वेणुर्बहुच्छिद्रवंशविशेषः, तस्यावान्तरभेदा बहवः, इति बहुवचनम्। क्षेपणा रज्ज्वादिभिर्निर्मिता यन्त्रविशेषास्तैः तन्मध्ये लोष्टादि निधाय भ्रामयित्वा मत्प्रक्षिप्तमेतावद्दूरं गच्छतीति ज्ञापनाय क्वचित् क्षिपतः। क्वचित् किङ्किणीयुक्तैः 'पादैःनृत्यतः' इति शेषः। क्वचित् कृत्रिमगोवृषैः कम्बलादिभिः पिहितैर्बालकैरेव स्वीकृतवृषाकारैः सह ॥ ३९ ॥ स्वयमपि तथैव वृषायमाणौ नर्दन्तौ वृषजात्यनुकारिशब्दान् कुर्वाणौ परस्पर युयुधाते इत्यन्वयः। रुतैः तत्तज्जातिशब्दैर्जन्तून् हंसमयूरादीन् अनुकृत्य यथा प्राकृतौ बालकौ तथा चेरतुः विजह्रतुः ॥ ४० ॥

षष्ठाद्यय द्वितीयार्थे। कदाचिद्यमुनातीरे स्वकैः सखिभिः सह वत्सांश्चारयन्तौ कृष्णबलौ जिघांसुः हन्तुमिच्छुर्दैत्य आगमत् ॥ ४१ ॥ तं वत्सयूथगतं वत्सरूपिणं दैत्य वीक्ष्य बलदेवाय दर्शयन् भ्रूसञ्ज्ञया ज्ञापयन् मुग्ध इव अजानन्निव हरिः शनैरासदत् तत्समीपमागमदित्यर्थः ॥ ४२ ॥ अपरपादाभ्या सह तस्य लाङ्गूल गृहीत्वा भ्रामयित्वा च भ्रामणेनैव गतजीवितं निर्गतप्राण तं कपित्थाग्रे कपित्थवृक्षस्य उपरि प्राहिणोत् चिक्षेप। तत्र सामर्थ्यं द्योतयन्नाह— अच्युत इति। बलादिपूर्ण इत्यर्थः ॥ ४३ ॥ पात्यमानैः कपित्थैः कपित्थफलैः सह स दैत्योऽपि पपात। 'मरणसमये मायाया अपगमात् प्रकटितनिजरूपो बभूव इत्याशयेनाह— महाकाय इति। अयमेव कपित्थपातने हेतुर्ज्ञेयः। 'ह' इत्याश्चर्ये। एतादृशस्याप्येव भ्रामणेन बालेन मारणम-

कदाचिद्यमुनातीरे वत्सांश्चारयतोः स्वकैः ॥ वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत् ॥ ४१ ॥
तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः ॥ दर्शयन् बलदेवाय शनैर्मुग्ध इवाऽऽसदत् ॥ ४२ ॥
गृहीत्वाऽपरपादाभ्यां सह लाङ्गूलमच्युतः ॥ भ्रामयित्वा कपित्थाग्रे प्राहिणोद्गतजीवितम् ॥ ४३ ॥
स कपित्थैर्महाकायः पात्यमानैः पपात ह ॥ तं वीक्ष्य विस्मिता बालाः शशंसुः साधु साध्विति ॥ ४४ ॥
देवाश्च परिसन्तुष्टा बभूवुः पुष्पवर्षिणः ॥ वत्सासुरं हतं श्रुत्वा व्रजे गोप्यश्च विस्मिताः ॥ ४५ ॥
तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ ॥ सप्रातराशौ गोवत्सांश्चारयन्तौ विरेजतुः[3] ॥ ४६ ॥
स्वं स्वं वत्सकुलं सर्वे पाययिष्यन्त एकदा ॥ गत्वा जलाशयाभ्याश पाययित्वा पपुर्जलम् ॥ ४७ ॥

त्याश्चर्यमित्यर्थः। अत एव त पतित वीक्ष्य सर्वे बाला विस्मिताः सन्तः 'साधु कृतं साधु कृतम्' इत्येव कृष्ण शशंसुः ॥ ४४ ॥ देवानामपि भयङ्क-रत्वात्तद्वधे देवाश्च परिसन्तुष्टाः कृष्णस्योपरि पुष्पवर्षिणो बभूवुः ॥ ४५ ॥ सर्वेषा लोकानामेकौ मुख्यौ पालकावपि तौ रामकृष्णौ वत्सपालकौ भूत्वा प्रातराशः प्रातर्भोज्यमन्न तत्सहितौ तद्गृहीत्वा वत्सांश्चारयन्तौ वने विरेजतुः ॥ ४६ ॥ ते सर्वे रामकृष्णादयो गोपबाला एकदा स्व स्वं वत्सकुल वत्ससमूह पाययिष्यन्तस्तावज्जलाशयस्याभ्याशं समीपं गत्वा वत्सान् जल पाययित्वा स्वयमपि पपुः ॥ ४७ ॥

---

१ 'कृष्णबलयोर्जिघांसु' इत्यत्र 'न लोकाव्यय' इति कारकषष्ठ्या प्रतिषेधात् द्वितीयार्थे इत्याह। वस्तुतस्तु 'न लोकाव्यय०' इत्यनेन न शेषषष्ठ्या प्रतिषेध, तेनेयं शेषषष्ठी। २ यमुनाजलपानेन दोष सर्वो विनिर्गत। एकीभूतो बक प्रोक्तौ जलपानात् स दृश्यते ॥ अत पान दर्शन च तेनोपद्रव एव च। तत सर्वापराधश्च तद्वधोपाय एव च ॥ तद्वधश्च स्तुतिर्देवैर्गोपाना तोष एव च। तथैव गोकुलस्थाना नव प्राणा हि शोधिता ॥ ३ 'विचेरतु' इति पाठान्तरम्।

तेच बालास्तत्र जलाशयतीरे अवस्थितं महासत्त्वं स्थूलबकविशेष ददृशुः, दृष्ट्वा च तत्रसुः त्रासं जग्मुः। त्रासहेतुत्वेनोक्तमहत्त्वे दृष्टान्तमाह—वज्रेति। इन्द्रवज्रेण निर्भिन्नम, अत एव च्युत भूमौ पतित गिरेः शृङ्गमिवेत्यर्थः ॥ ४८ ॥ स वै बकरूपधृक् बको नाम महान् असुर' सहसा आशु चागत्य कृष्णमग्रसत्। तत्र सामर्थ्यमाह— तीक्ष्णतुण्डो बलीति ॥ ४९ ॥ त कृष्ण महाबकग्रस्त दृष्ट्वा रामादयोऽर्भकाः विचेतसो मूर्च्छिता बभूवुरित्यन्वयः। तत्र दृष्टान्तमाह— इन्द्रियाणीवेति। यथा प्राणैर्विना इन्द्रियाणा ज्ञानकर्मात्मकाना ज्ञाने कर्मणि च न सामर्थ्यम् स्थितिरपि दुर्लभा, तथा तेषामपि तदा ज्ञानादिसामर्थ्यं गत मूर्च्छा च जातेत्यर्थः ॥ ५० ॥ त गोपालसूनुं कृष्ण सद्य एव बकश्चच्छर्द। तत्र हेतुमाह—अग्निवत्तालुमूलं प्रदहन्तमिति। दाहे सामर्थ्यं सूचयन् विशिनष्टि—जगद्गुरोर्ब्रह्मणोऽपि पितरमिति। तदा यदि तच्छरणमागच्छेत्तदा शरणागतवत्सलो भगवास्त न हन्यात्। स तु तदुपायानभिज्ञोऽतस्तमक्षत व्रणरहितं दृष्ट्वाऽतिरुषा महता क्रोधेन पुनस्त तुण्डेन चञ्चुना हन्तुमभ्यपद्यत सम्मुखमाजगाम ॥ ५१ ॥ तमापतन्त वेगेनागच्छन्त बक स

ते तत्र ददृशुर्बाला महासत्त्वमवस्थितम् ॥ तत्रसुर्वज्रनिर्भिन्न गिरेः शृङ्गमिव च्युतम् ॥ ४८ ॥ स वै बको नाम महानसुरो बकरूपधृक् ॥ आगत्य सहसा कृष्णं तीक्ष्णतुण्डोऽग्रसद्बली ॥ ४९ ॥ कृष्ण महाबकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः ॥ बभूवुरिन्द्रियाणीव विनाप्राण विचेतस ॥ ५० ॥ तं तालुमूलं प्रदहन्तमग्निवद्गोपालसूनुं पितरं जगद्गुरोः ॥ चच्छर्द सद्योऽतिरुषाऽक्षतं बकस्तुण्डेन हन्तुं पुनरभ्यपद्यत ॥ ५१ ॥ तमापतन्तं स निगृह्य तुण्डयोर्दोर्भ्यां बक कंससख सतां पतिः ॥ पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद्दिवौकसाम् ॥ ५२ ॥ तदा बकारिं सुरलोकवासिन' समाकिरन्नन्दनमल्लिकादिभिः ॥ समीडिरे चानकशङ्खसंस्तवैस्तद्वीक्ष्य गोपालसुता विसिस्मिरे ॥ ५३ ॥

भगवान् कृष्णो दोर्भ्या भुजाभ्या तुण्डयोर्निगृह्य बालेषु पश्यत्सु सत्सु लीलया अनायासेनैव ददार। तत्र दृष्टान्तमाह—वीरणवदिति। वीरणमग्रन्थितृणविशेषः। स यथा अनायासेनैव विदार्यते तथेत्यर्थः 'बकस्य विदारणकर्मत्वं युक्तम्' इति सूचयस्त विशिनष्टि— कससखमिति। भगवतोऽपि तद्धननप्रयोजनं सूचयस्तं विशिनष्टि— दिवौकसा देवाना मुदमावहति प्रापयतीति तथा। तत्रापि हेतुमाह— सता पतिरिति। साधूना रक्षक इत्यर्थः। दुष्टनिग्रहं विना देवादिसाधूना रक्षणहर्षयोरसम्भवादित्याशयः ॥ ५२ ॥ तदा सुरलोकवासिनो देवादयो नन्दनवनोद्भूतैर्मल्लिकादिभिः पुष्पैर्बकारि श्रीकृष्णं समाकिरन् आच्छादितवन्त। तथा आनकै शङ्खैश्च वाद्यै' सहितै' सस्तवैः सम्यक् स्तुतिभि समीडिरे तुष्टुवु'। तत् देवै' कृत भगवत्पूजन वीक्ष्य गोपालसुता विसिस्मिरे आश्चर्य प्रापवन्तः ॥ ५३ ॥

श्रीकृष्णावयोगेन निश्चेष्टा रामादयो गोपदारका बकस्यास्यात् मुखात् मुक्तमुपलभ्य ततः स्वस्थानमागतं तं परिरभ्य समाश्लिष्य निर्वृताः स्वस्थाः सुखिनश्च जाता. । तत्र दृष्टान्तमाह— प्राणमिवेति । यथा प्राणविना ज्ञानक्रियात्मक इन्द्रियगणः स्वव्यापारे असमर्थो मूर्च्छितश्च सन् पुनः प्राण स्वस्थानमागत परिरभ्य स्वस्थः सव्यापारश्च भवति, तथेत्यर्थः । ततश्च सायङ्काले वत्सान् प्रणीय एकीकृत्य व्रजमेत्य आगत्य तत् बकवधादिक जगुः कथितवन्तः ॥ ५४ ॥ तत् गोपबालवर्णित श्रुत्वा गोपा गोप्यश्च विस्मिता आश्चर्याक्रान्ताः अतिप्रियेण प्रीत्या आदृता. सादराः तृषितानि अतृप्तानि अमृत पिबन्तीवेक्षणानि नेत्राणि येषा ते प्रेत्य परलोक प्राप्य पुनरागतमिवौत्सुक्यादैक्षत अपश्यन् ॥ ५५ ॥ तत्र गोपाना परस्परमाश्चर्योक्तिमाह— अहो बतेति । 'अहो बत' इत्यादिश्लोकत्रयस्य 'इति नन्दादयो' इति चतुर्थेनान्वयः । अहो इत्याश्चर्ये । बतेति खेदे । अस्य बालस्य कृष्णस्य बहवो मृत्यवो मृत्युहेतवोऽभवन्, अपि तथापि तेषामेव विप्रियमनिष्टमासीत् । यतस्तैः पूर्वमन्येषा भय कृतम् ॥ ५६ ॥ ननु 'अनेनैव बालकेन पूर्व कदाचित्तेषामसुराणा किञ्चि-

मुक्त बकास्यादुपलभ्य बालका रामादय प्राणमिवैन्द्रियो गणः ॥ स्थानागतं तं परिरभ्य निर्वृता· प्रणीय वत्सान् व्रजमेत्य तज्जगु· ॥ ५४ ॥ श्रुत्वा तद्विस्मिता गोपा गोप्यश्चातिप्रियादृता· ॥ प्रेत्यागतमिवौत्सुक्यादैक्षन्त तृषितेक्षणा· ॥ ५५ ॥ अहो बतास्य बालस्य बहवो मृत्यवोऽभवन् ॥ अप्यासीद्विप्रियं तेषां कृतं पूर्वं यतो भयम् ॥ ५६ ॥ अथाप्यभिभवन्त्येनं नैव ते घोरदर्शनाः ॥ जिघांसयैनमासाद्य नश्यन्त्यग्नौ पतङ्गवत् ॥ ५७ ॥ अहो ब्रह्मविदां वाचो नासत्याः सन्ति कर्हिचित् ॥ गर्गो यदाह भगवानन्वभावि तथैव तत् ॥ ५८ ॥

द्विप्रियं कृतम्, अत एवेदानीं ते एव तं हन्तुमायान्तीति कुतो न सम्भाव्यते ?' तत्राहुः— अथापीति । यद्यपि तयोरदर्शनाः भयङ्करस्वरूपा दर्शनमात्रेणापि प्राणहारकास्तथाप्येन बालमपि नाभिभवन्ति किञ्चिन्मात्रमप्यस्य पराभव कर्तुं न शक्नुवन्ति, प्रत्युत जिघासया हन्तुमिच्छया एनमासाद्य प्राप्य स्वयमेव नश्यन्तीत्यन्वयः । तत्र दृष्टान्तमाहुः— अग्नौ पतङ्गवदिति । यथाऽग्निं नाशयितुं तत्र पतिताः पतङ्गा. शलभाः स्वयमेव नश्यन्ति तथेत्यर्थः । तथाच नानेन तेषा किञ्चिद्विप्रिय कृतम्, यदि किञ्चिद्विप्रिय कृत स्यात्तदा त एवैनमभिभवेयु. । स्वय न नश्येयुरिति भावः ॥ ५७ ॥ भगवदुपासनाप्रभावस्याश्चर्यं द्योतयन्त आहुः— अहो इति । ब्रह्मविदा वेदोक्तपरमार्थज्ञाना भगवदुपासकाना वाच. कर्हिचिदपि असत्या न सन्ति न भवन्ति । 'कथमेवं निश्चय' इत्यत आह— गर्ग इति । भगवान् भगवदुपासकत्वेनाविर्भूतसर्वज्ञत्वादिगुणो गर्ग. "तस्मान्नन्दात्मजोऽय ते नारायणसमो गुणैः" इत्यादि यदाह उक्तवास्तत्तथैवान्वभावि अनुभूतम्, दृष्टमित्यर्थ ॥ ५८ ॥

इत्येवं नन्दादयो गोपा. कृष्णरामकथा कुर्वन्तस्ताभ्या सह रममाणाश्च मुदा तज्जनितपरमानन्देन निमित्तेन भववेदना दैहिकदैविकभौतिकससारतापं नाविन्दन् तदनुसन्धान न कृतवन्तः ॥ ५९ ॥ एवमुक्तप्रकारकैरन्यैश्च निलायनादिभि. कौमारै कुमारावस्थाया योग्यैर्विहारै. कृत्वा कौमार कुमारावस्था रामकृष्णौ व्रजे जहतुः त्यक्तवन्तौ। निलायन निलीय स्थितिः । सेतुबन्धः नद्यादिषु सेतुबन्धनम् । मर्कटवदुत्प्लवन शाखातः शाखान्तरगमनम् । आदि" पदेनानेकविधलीलान्तरग्रहणम् ॥ ६० ॥ इति श्रीवल्लभाचार्य–वंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र तामसरोधवर्णने ॥ एकादशो गतो वृत्तिं वत्सादिवधबोधकः ॥ ३ ॥ अत्र यद्यपि श्रीमदाचार्योः 'क्वचिद्वनाशाय मनो दधत्' इत्यारभ्याध्यायत्रय प्रक्षिप्तमित्याहु[1], तथात्रान्येषामपि केषा विप्रतिपत्ति[1], केषां च सम्मतिरस्ति तथापि व्याख्यातत्वाद्यथामति व्याख्यायन्ते॥ द्वादशे वनक्रीडायामहेर्वत्सादिमोचनम् ॥ अहेः ससारमोक्षश्च कृष्णेन विनिरूप्यते ॥ १ ॥ क्वचित्

इति नन्दादयो गोपा· कृष्णरामकथा मुदा ॥ कुर्वन्तो रममाणाश्च नाविन्दन् भववेदनाम् ॥ ५९ ॥ एवं विहारैः कौमारै· कौमारं जहतुर्व्रजे ॥ निलायनै· सेतुबन्धैर्मर्कटोत्प्लवनादिभि ॥ ६० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे तामसनिरोधनिरूपणप्रकरणे वत्सादिवधनिरूपणं नामैकादशोऽध्यायः ॥ ११ ॥ श्रीशुक उवाच ॥ क्वचिद्वनाशाय मनो दधद्व्रजात् प्रातः समुत्थाय वयस्यवत्सपान् ॥ प्रबोधयन् शृङ्गरवेण चारुणा विनिर्गतो वत्सपुरःसरो हरिः ॥ १ ॥ तेनैव साकं पृथुका· सहस्रश स्निग्धाः सुशिग्वेत्रविषाणवेणव· ॥ स्वान् स्वान् सहस्रोपरिसङ्ख्ययाऽन्वितान् वत्सान् पुरस्कृत्य विनिर्ययुर्मुदा ॥ २ ॥

कदाचिद्वनाशाय वन एव प्रथमं भोजनं कर्तु मनो दधत्। प्रातः समुत्थाय चारुणा मनोहरेण शृङ्गरवेण वयस्याश्च ते वत्सपाश्च तान् स्वसखीन् प्रबोधयन् "अह वन गच्छामि, यूयं सर्वे आगच्छत" इति ज्ञापयन् वत्साः पुरःसरा यस्य स हरिर्व्रजाद्विनिर्गत इत्यन्वयः॥ १ ॥ तदा तेन श्रीकृष्णेन साकमेव सहस्रशः पृथुकाः गोपबालाः सहस्रसङ्ख्यातः उपरि या सङ्ख्या तयाऽन्विताः स्वकान् स्वकान् वत्सान् पुरस्कृत्य अग्रत. कृत्वा मुदा हर्षेण विनिर्ययुर्विनिःसृता'। तत्र हेतुमाह– कृष्णे स्निग्धा इति। 'भगवत इव तेषामपि वनभोजनमनोरथ' इत्याह–सुशिगिति। सुष्ठु रम्याः शिग्वेत्रादयो येषां ते। शिक् शिक्यं दध्यादिपूर्णं भोजनार्थम्, वेत्रं गोचारणार्थम्, विषाणवेणू वादनार्थौ ॥ २ ॥

---

१ प्रक्षिप्ताध्यायेषु प्रथमाध्याये। "कथामात्र हरेर्वाच्य सर्वत्रेत्यत्र केचन । कथा वक्तु भागवतीं क्वचित् सिद्धामलौकिकीम् ॥ योजयित्वा चाधुनिका अध्यायत्रितय नगु । शब्दार्थसङ्गतीना हि स्पष्टा तत्र विरुद्धता ॥ लोकप्रसिद्धितश्चापि कथचिद्रूप्यते स्फुटम्" ॥ अत्रैवाग्रे–"तत्र तु प्रथमेऽध्याये लीलामाह सुविस्तराम् । अघासुरस्य च वध मुक्तिश्चापि स्वयुक्तिजः" इति सुबोधिनीकारिका ।

'पृथक्त्वे स्वच्छन्दलीला न स्यात्' इत्यसङ्ख्यातैः कृष्णवत्सैः सह स्ववत्सकान् यूथीकृत्य एकीकृत्य चारयन्तोऽर्भलीलाभिस्तत्र तत्र वने हर्षेण विजह्रुरित्यन्वयः ॥ ३ ॥ मातृभिः पूर्वं काचादिभिर्भूषिता अपि अत्यौत्सुक्येन पुन॰ फलादिभिरात्मानमभूषयन्नित्यन्वयः । प्रवालानि पत्राणि, स्तबकाः पुष्पगुच्छानि, सुमनस॰ केवलपुष्पाणि, पिच्छानि मयूरस्य, धातवो गैरिकादयस्तैः ॥ ४ ॥ अन्योन्यस्य शिक्यादीन् मुष्णन्तश्चोरयन्तः । ततः 'अनेन मदीयमपहृतम्' इति स्वामिना ज्ञातान् आराद्दूरादेव चिक्षिपुः प्रक्षिप्तवन्तः, तत्रत्या येषु शिक्यादयः पतितास्ते पुनस्तान् ततोऽपि दूराच्चिक्षिपुः। एवमनवस्थया स्ववस्त्वनुप्राप्नुवतो बालान् रुदन्मुखानवलोक्य हसन्तः पुनर्ददुः ॥ ५ ॥ यदि वनशोभादर्शनार्थं कृष्णो दूरगतो भवति, तर्हि ते बाला 'अह पूर्वं स्प्रक्ष्यामि अहं पूर्वं स्प्रक्ष्यामि' इति वदन्तोऽनुद्रुत्पत्त्य त संस्पृश्य आश्लिष्य रेमिरे॥ ६॥ केचित्'विजह्रुः' इति पञ्चमेनान्वयः। शृङ्गाणि

कृष्णवत्सैरसङ्ख्यातैर्यूथीकृत्य स्ववत्सकान् ॥ चारयन्तोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह ॥ ३ ॥
फलप्रवालस्तबकसुमनःपिच्छधातुभिः ॥ काचगुञ्जामणिस्वर्णभूषिता अप्यभूषयन् ॥ ४ ॥
मुष्णन्तोऽन्योन्यशिक्यादीन् ज्ञातानाराच्च चिक्षिपु॰॥ तत्रत्याश्च पुनर्दूराद्धसन्तश्च पुनर्ददुः॥ ५॥
यदि दूरं गतः कृष्णो वनशोभेक्षणायतम् ॥ अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे ॥ ६ ॥
केचिद्वेणून् वादयन्तो ध्मान्त॰ शृङ्गाणि केचन ॥ केचिद्भृङ्गैः प्रगायन्तः कूजन्तः कोकिलैः परे ॥ ७ ॥
विच्छायाभिः प्रधावन्तो गच्छन्तः साधुहंसकैः ॥ बकैरुपविशन्तश्च नृत्यन्तश्च कलापिभिः ॥ ८ ॥
विकर्षन्तः कीशवालानारोहन्तश्च तैर्द्रुमान् ॥ विकुर्वन्तश्च तैः साकं प्लवन्तश्च पलाशिषु ॥ ९ ॥
साकं भेकैर्विलङ्घन्तः सरित्प्रस्रवसम्प्लुताः ॥ विहसन्तः प्रतिच्छाया॰ शपन्तश्च प्रतिस्वनान् ॥ १० ॥

ध्मान्तः मुखवायुपूरणेन वादयन्तः, भृङ्गैर्भ्रमरैः सह प्रगायन्तः ॥ ७ ॥ उपरि गच्छता वीनां पक्षिणा छायाभिः सह प्रधावन्तः, हंसैः सह साधु यथा स्यात्तथा गच्छन्तः, बकैः सह तद्वज्जलतीरे उपविशन्तश्च, कलापिभिर्मयूरैः सह नृत्यन्तः ॥ ८ ॥ कीशानां वानराणां वालान् 'शाखासु लम्बमानानि लाङ्गूलानि' आकर्षयन्तः, लाङ्गूलममुञ्चन्त एव तैः सह द्रुमान् आरोहन्तश्च तैर्वानरै सह विकुर्वन्तो दन्तप्रदर्शनभ्रूविजृम्भादिविकारान् कुर्वन्तः, पलाशिषु वृक्षेषु प्लवन्तः, शाखायाः शाखान्तरमुद्गच्छन्तः ॥ ९ ॥ सरित्प्रस्रवे नदीतटात् परिस्रुतजले सम्प्लुता निमग्नाः सन्तो भेकैः मण्डूकैः साकं विलङ्घन्त॰, प्रतिच्छायाः प्रतिबिम्बानि हसन्तः, प्रतिस्वनान् सरोवरकूपादितरेषु स्वकृतशब्दसदृशान् शब्दान् शपन्तश्च ॥ १० ॥

१ क-पुस्तके 'कूजतश्च' इति पाठान्तरम् । 'शपत' इत्यस्यायमर्थ –' र रे कस्त्व चोरोसि!' इति ।

अतिविस्मित' सस्तेषा भाग्यमभिनन्दति— इत्थमिति द्वाभ्याम् । सतां तत्त्वज्ञानां ब्रह्म तद्रूपेण व्यापकं तत्सुखमानन्दश्च अनुभूति. चिद्रूपतया सच्चिदानन्दरूपेण प्रकाशमानेन । एव तेषामनुभवमात्रमेव, न त्वेव विहार इति सूचितम् । तथा दास्य गताना केवल मर्यादाभक्तिमता परदैवतेन इष्टदेवतया प्रकाशमानेन इति तेषामपि गौरवणैव तद्भजनम्, नत्वेवं विहारः । मायाश्रितानां भगवन्मायामोहितानां विषयसुखामिच्छता कर्मनिष्ठाना तु नरदारकेण प्राकृतमनुष्यबालवत् प्रतीयमानेन इति तेषां तु तत्सम्बन्धलेश एव नास्ति, कुतस्तेन सह व्यवहारः ? । एवभूतेन भगवता साक ये विजह्रुस्ते कृतानां स्वस्वनुष्ठितानां पुण्याना सत्कर्मोपासनादीना पुञ्जाः समूहाः येषा तथाभूता एव ॥ ११ ॥ 'तर्हि तैः कृताः पुण्यपुञ्जा वक्तव्या ' इत्यपेक्षायामाह— यत्पादेति । यस्य भगवत पादपासु' पादसम्बन्धिरजो बहुजन्मस्वनुष्ठितेन कृच्छ्रतस्तप समाध्यादिकष्टेन धृतो वशीकृत आत्मा इन्द्रियान्तःकरणसङ्घातो यैस्तैर्योगिभिरप्यलभ्यः । स एष येषा व्रजवासिना स्वय साक्षादेव दृग्विषयः सर्वेन्द्रियविषयः सन् स्थितस्तेषा दिष्टमह' पुरा महत्त्व किं

इत्थं सतां ब्रह्मसुखानुभूत्या दास्य गतानां परदैवतेन ॥ मायाश्रिताना नरदारकेण साकं विजह्रु कृतपुण्यपुञ्जाः ॥ ११ ॥
यत्पादपांसुर्बहुजन्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यलभ्यः ॥ स एष यद्दृग्विषय. स्वयं स्थितः किं वर्ण्यते दिष्टमहो व्रजौकसाम् ॥१२॥
अथाघनामाऽभ्यपतन्महासुरस्तेषां सुखक्रीडनवीक्षणाक्षमः ॥ नित्यं यदन्तर्निजजीवितेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्यते ॥ १३ ॥

वर्ण्यते ? तत्तु वाङ्मनसोरगोचरमित्यर्थ. ॥ १२ ॥ एव क्रीडायां मध्ये अघासुर आगतः, तस्य मुक्त्यन्ता कथामाह— अथेति एकविंशातिभिः । अथेत्यर्थान्तरे । वृन्दावनलीलाया लीलान्तर शृण्वित्यर्थः । अघनामा महासुरोऽभ्यपतत् अकस्मादेवाजगाम । 'किमर्थं' इत्याकाङ्क्षायां ' तेषा जिघासया ' इति सूचयन्नाह— तेषामिति । तेषां रामकृष्णादीनां यत् सुखेन क्रीडनं तस्य वीक्षणे नास्ति क्षमा सहनं यस्य सः । तस्य दुष्टत्व सूचयंश्चरित विशिनष्टि— नित्यमिति । यत्तेषां क्रीडनं पीतामृतैरपि निजजीवितेच्छुभिः 'न अमृतपानमात्रेण जीवन सफल भवति,किन्तु भगवल्लीलानुस्मरणेन इति कृत्वा स्वजीवसफलत्वेच्छुभिरमरैरन्तर्मनसि नित्य प्रतीक्ष्यते चिन्त्यते तद्दृष्ट्वाऽसहमान इत्यर्थः । यद्वा तस्य तुच्छत्वमाशङ्क्य प्रबलत्वमाह— नित्यमिति । यस्याघासुरस्यान्तः नाश. ' कथ कदावाऽय दुरात्मा मरिष्यति ' इति पीतामृतैर्देवैरपि निजजीवितेच्छुभिस्तत स्वमरणमाशङ्क्य तत्प्रतिहारार्थं प्रतीक्ष्यते चिन्त्यत इत्यर्थ. ॥ १३ ॥

१ ' अगम्य ' इति पाठान्तरम् । २ स एव ' इति पाठान्तरम् । ३ ' दिष्टमत ' इति पाठान्तरम् । ४ क—ख—पुस्तकयो ' वाङ्मनसयोरगोचरम् इति पाठान्तरं प्रमादात् ।

तेन रचितं तद्धननोपायं दर्शयति— दृष्ट्वेति त्रिभिः। सः अघासुरस्तदा कृष्णो मुखं प्रधानो येषां तानर्भकान् दृष्ट्वा इत्येव व्यवस्य निश्चित्याजगर वपुर्धृत्वा तेषा ग्रसनाशया पथि व्यशेतेति तृतीयश्लोकेनान्वयः। तेषा क्रीडादर्शनासहने कसवैर हेतुमाह— कसानुशिष्ट इति। कसेन कृष्णादिहननार्थं प्रेषित इत्यर्थः। तत्रैव स्ववैरमपि हेत्वन्तरमाह— बकीबकानुज इति। बकी पूतना। वैरमेव स्पष्टयरतद्व्यवसायमाह— अद्य त्विति सार्धेन तुशब्द एवकारार्थः, तेन कालकर्मादिव्यावृत्तिः। अद्य कृष्ण एव मे सोदरयोर्भ्रातृभगिन्योर्नाशकृत, अतो मम तयोर्द्वयोः सन्तोषार्थं सबल ससैन्य वत्सपालसहितमेन हनिष्यामि ॥ १४ ॥ ननु 'एतेषा मारणेऽपि व्रजस्थास्तु तावत् अवशिष्येरन्' इत्याशङ्क्याह— एते इति। एते बालवत्सा यदा मम सुहृदोः भ्रातृभगिन्योस्तिलापः कृता मृतयोस्तिलोदकवत्तृप्तिहेतवः कृतास्तदा व्रजौकसो नन्दादयः सर्वे नष्टसमा मृतप्राया एव। तत्र दृष्टान्तमाह— प्राणे इति। यथा प्राणे निर्गते वर्ष्मसु देहेषु चिन्ता नास्ति, देहा विनष्टप्राया एव, तद्विनाशार्थमुपायान्तरं न चिन्त्यते, तद्वदेतेषा विनाशोपायो न

> दृष्ट्वाऽर्भकान् कृष्णमुखानघासुरः कंसानुशिष्टः स बकीबकानुजः ॥ अद्य तु मे सोदरनाशकृत्तयोर्द्वयोर्ममैनं सबलं हनिष्ये ॥ १४ ॥ एते यदा मत्सुहृदोस्तिलापः कृतास्तदा नष्टसमा व्रजौकसः ॥ प्राणे गते वर्ष्मसु का नु चिन्ता प्रजाऽसवः प्राणभृतो हि ये ते ॥ १५ ॥ इति व्यवस्याजगरं बृहद्वपुः स योजनायाममहाद्रिपीवरम् ॥ धृत्वाऽद्भुतं व्यात्तगुहाननं तदा पथि व्यशेत ग्रसनाशया खलः ॥ १६ ॥ धराधरोष्ठो जलदोत्तरोष्ठो दर्याननान्तो गिरिशृङ्गदंष्ट्रः ॥ ध्वान्तान्तरास्यो वितताध्वजिह्वः परुषानिलश्वासदवेक्षणोष्णः ॥ १७ ॥

चिन्त्य इत्यर्थः। तत्र हेतुमाह— हि यस्मात् ये प्राणभृतस्ते सर्वेऽपि प्रजा अपत्यानि असवः प्राणाः प्राणतुल्या येषा तथाभूता इति ॥ १५ ॥ तद्वपुरेव विशिनष्टि— बृहदिति। एतदेव स्पष्टयति— स योजनायामेति। योजनप्रमाणेन आयामेन दैर्घ्येण युक्त च तन्महाद्रिवत् पीवर च तदित्यर्थः। व्यात्तं प्रसारितं गुहातुल्यमानन यस्मिंस्तत्। ननु "परमसुकुमारं बालं क्रीडन्तं दृष्ट्वाऽप्येन कृष्णमुद्दिश्य कथं तन्मारणे सङ्कल्पं कृतवान्?" तत्राह— खल इति। तस्यासुरत्वेन क्रूरस्वभावत्वाद्दयाभावेनैवं सङ्कल्पितवानित्यर्थः ॥ १६ ॥ अद्भुतमिति यदुक्तं तत्तदेव दर्शयन्नसुरं विशिनष्टि— धरायामधरोष्ठो यस्य सः। जलदेषु उत्तरोष्ठो यस्य सः। दर्याविवाननस्यान्तौ सृक्किणी यस्य सः। गिरेः शृङ्गाणीव दंष्ट्रा यस्य सः। ध्वान्तोऽन्धकारः, तद्युक्तमन्तरास्यं मुखमध्यं यस्य सः। वितताध्ववत् विस्तृतमार्गवत् जिह्वा यस्य सः। परुषानिलवच्छ्वासो यस्य सः। दववदीक्षणयोरुष्णः, दाहकदृष्टिरित्यर्थः। परुषानिलश्वासश्चासौ दवेक्षणोष्णश्च स तथा ॥ १७ ॥

---

१ श्रीधरीया टीकामनुवदतीय टीका।

त वस्तुतोऽसुरं तादृशं धृताजगरशरीरमेव ते सर्वे गोपा दृष्ट्वाऽपि भ्रान्त्या 'वृन्दावनस्य श्रीः सम्पदैवएषा' इति मत्वा व्यात्ताजगरतुण्डेन प्रसारित सर्पमुखसादृश्येन विशेषत उत्प्रेक्षितवन्तः। तत्र हेतुमाह– लीलयेति । लीलाविष्टचित्तत्वेनेत्याशयः ॥ १८ ॥ उत्प्रेक्षामेव प्रश्नोत्तराभ्यामाहुः– अहो इति । सम्मत्यर्थं सम्बोधयन्ति– मित्राणीति । अहो आश्चर्यं पुरःस्थितमिदं सत्त्वकूटं प्राण्याभासमिवास्ति, न वा तत्राप्यस्मत्सङ्ग्रसनाय व्यात्त विदारित यद्व्यालतुण्ड सर्पमुखं तद्वदाचरति न वा तद्वदत ॥ १९ ॥ एवं पृष्टाः केचिदाहुः– सत्यमिति । निश्चितं तथैवेत्यर्थः । एवमग्रेऽप्युत्तर बोध्यम् । अर्क-करैः सूर्यकिरणैः आरक्त घनमुत्तराहनुवदुपरितनोष्ठवत् पश्यत । तस्य रक्तघनस्य च्छायया अरुण रोधो नदीकूलमधरोष्ठवत् पश्यत । 'पश्यत' इति क्रियापदमपि सर्वत्रान्वेति ॥ २० ॥ सव्यासव्ये वामदक्षिणयोर्मध्ये वर्तमाने नगोदरे गिरिदर्यौ सृक्किभ्यामोष्ठप्रान्ताभ्या प्रतिस्पर्द्धेते तुल्यतया वर्तेते

दृष्ट्वा तं तादृशं सर्वे मत्वा वृन्दावनश्रियम् ॥ व्यात्ताजगरतुण्डेन ह्युत्प्रेक्षन्ते स्म लीलया ॥ १८ ॥ अहो मित्राणि गदत सत्त्वकूटं पुरःस्थितम् ॥ अस्मत्सङ्ग्रसनव्यात्तव्यालतुण्डायतेन वा ॥ १९ ॥ सत्यमर्ककरारक्तमुत्तराहनुवद्घनम् ॥ अधराहनुवद्रोधस्तत्प्रतिच्छाययाऽरुणम् ॥ २० ॥ प्रतिस्पर्धेते सृक्किभ्यां सव्यासव्ये नगोदरे ॥ तुङ्गशृङ्गालयोऽप्येतास्तद्दंष्ट्राभिश्च पश्यत ॥ २१ ॥ आस्तृतायाममार्गोऽयं रसनां प्रति गर्जति ॥ एषामन्तर्गतं ध्वान्तमेतदप्यन्तराननम् ॥ २२ ॥ दावोष्णखरवातोऽयं श्वासवद्भाति पश्यत ॥ तद्दग्धसत्त्वदुर्गन्धोऽप्यन्तरामिषगन्धवत् ॥ २३ ॥ अस्मान् किमत्र ग्रसिता निविष्टानयं तथा चेद्बकवद्विनङ्क्ष्यति ॥ क्षणादनेनेति बकार्युशन्मुखं वीक्ष्योद्धसन्तः करताडनैर्ययु. ॥ २४ ॥

इति पश्यत । एतास्तुङ्गाः शृङ्गालयोऽपि तस्याजगरस्य दंष्ट्राभि. स्पर्धमानाः पश्यत ॥ २१ ॥ अयमास्तृतायाममार्गः विस्तृतो दैर्घ्यवान् मार्गस्तस्य रसना प्रति गर्जति स्पर्धते । एषा शृङ्गाणामन्तर्गतमेतद्ध्वान्तमन्धकारमपि अन्तराननमाननमध्य प्रति गर्जति पश्यत ॥ २२ ॥ दावाग्निनोष्णः खरोऽय वातः श्वासवद्भाति पश्यत । तेन दावाग्निना दग्धाना सत्त्वाना योन्तर्गन्धः सोऽपि सर्पस्यान्तर्गतामिषगन्धवद्भाति पश्यत ॥ २३ ॥ एवमुक्तास्तेषु एव केचिद्विश्वस्ता आहुः– सत्यमय सर्पस्तथापि किमत्र निविष्टानस्मान् ग्रसिता ग्रसिष्यति चेत्तदा तेन श्रीकृष्णेन हन्त्रा 'अयमपि बकवत् क्षणादेव विनङ्क्ष्यति' इति परस्परमुक्त्वा बकारे श्रीकृष्णस्य उशत् अतिकमनीय मुखं वीक्ष्योच्चैर्हसन्तः करताडनैः सह निजनिर्भयत्ववीरत्वादिप्रकाशनाय बाहुस्फोट कुर्वन्त तत्रत्याश्चर्यं द्रष्टु ययुरित्यन्वय. । तान् धावतो वत्सा अपि पुच्छानुधम्यानुययुरित्यपि ज्ञातव्यम् ॥ २४ ॥

अतज्ज्ञानाम् ' अजगररूपराक्षसोऽयम् ' इति अजानता बालानामित्थमतथ्यमसत्य मिथो भाषितं श्रुत्वा यतोऽखिलभूतहृत्स्थितः सर्वप्राणिनां हृदये स्थितः साक्षी, अतस्तद्रक्षो विदित्वा अमृषा वस्तुतोऽजगररूपधृगसुर एवैषां मृषायते ' अजगरसदृशवृन्दावनश्रीतया प्रतीयते ' इति विचिन्त्य भगवान् यावत् स्वाना स्वकीयास्तान् निरोद्धु निवारयितु मनो दधे ॥ २५ ॥ तावत्ते सवत्साः शिशवः असुरोदरस्य अन्तरे मध्ये पर केवलं प्रविष्टा, नतु तेन रक्षसा गीर्णाः मुखसङ्कोचेन न गिलिताः न निरुद्धा इति द्वयोरन्वयः । ' जीर्णा ' इति पाठेऽपि स एवार्थ. । अगिलने हेतुगर्भविशेषणमाह— प्रतीक्षमाणेनेति । बकारेः श्रीकृष्णस्य वेशन प्रवेशन प्रतीक्षमाणेन । तत्प्रवेशप्रतीक्षायामपि हेतुं सूचयन् विशेषणान्तरमाह— हतेति । हतयोः स्वकीय योर्बकीबकयोरन्त स्मरतीति तथा तेन ॥ २६ ॥ श्रीकृष्णस्तान् वत्सान् बालकांश्च दिष्टकृतेन प्रारब्धकृतेन अघासुरमुखप्रवेशेन दीनान् दुःखितान् वीक्ष्य विस्मितः ' मया निरुद्ध्यमानानामपि प्रारब्धवशेनैव प्रवेश ' इत्याश्चर्ययुक्तः सन् ' अस्य खलस्य दुष्टस्याघस्य जीवनममीषा सतां मद्भक्ताना विहिंसन मरण च ' इति द्वयं

इत्थं मिथोऽतथ्यमतज्ज्ञभाषित श्रुत्वा विचिन्त्येत्य मृषामृषायते ॥ रक्षो विदित्वाऽखिलभूतहृत्स्थित. स्वानां निरोद्धुं भगवान् मनो दधे ॥ २५ ॥ तावत् प्रविष्टास्त्वसुरोदरान्तरं पर न गीर्णाः[1] शिशव. सवत्सा. ॥ प्रतीक्षमाणेन बकारिवेशन हतस्वकान्तस्मरणेन रक्षसा ॥ २६ ॥ तान् वीक्ष्य कृष्ण' सकलाभयप्रदो ह्यनन्यनाथान् स्वकरादवच्युतान् ॥ दीनांश्च मृत्योर्जठराग्निघासान् घृणार्दितो दिष्टकृतेन विस्मित. ॥ २७ ॥ कृत्य किमत्रास्य खलस्य जीवनं न वा अमीषां च सतां विहिंसनम् ॥ द्वय कथं स्यादिति संविचिन्त्य ज्ञात्वाऽविशत्तुण्डमशेषदृग्घरिः ॥ २८ ॥

वै निश्चितं कथं न स्यात् मया चात्र किं कृत्यं कि कर्तव्यमिति संविचिन्त्य तत् तदुपाय ज्ञात्वा तस्य तुण्ड मुखमविशदिति द्वयोरन्वयः । एव प्रवेशे हेतुमाह— घृणार्दित इति । कृपया पीडित इत्यर्थः । कृपापात्रत्वेन तान् विशिनष्टि— अनन्यनाथानिति । नान्यः स्वव्यतिरिक्तो नाथो रक्षको येषां तान् । स्वकरात् अवच्युतान् विनिःसृतान् । तत्र हेतुः—मृत्योरघस्य जठराग्नेर्घासान् तृणतुल्यान् । तेषु कृपाया कैमुत्यन्यायमाह— हीति । हि यस्मात् सकलस्य सदाचारनिष्ठस्याभयप्रदः, अतो निजभक्तकृपायां किं वक्तव्यम् ? । तत्र हेतुमाह— हारिरिति । आश्रितार्तिहरणशील इत्यर्थः । उपायज्ञाने हेतुमाह— अशेषदृगिति । सर्वज्ञ इत्यर्थः । यदि बहिस्थित एवाघासुर हन्यात्तदा बाला अपि तेन सह मृताः स्यु., तथा च व्रजे महद्दु.खमापतेत् । बालान्तरनिर्माण कृत्वा व्रजे नयने कृतेऽपि पूर्वे तु मृता एव, अतस्तद्रक्षार्थ तन्मुखमेव प्राविशदिति भाव. ॥ २७ ॥ ॥ २८ ॥

१ ' न जीर्णा ' इति पाठ' ।

तदा भगवतोऽघमुखप्रवेशकाले तद्भयात् घनच्छदा मेघान्तरिता देवास्तस्यापि मुखप्रवेश दृष्ट्वा मोहेन विस्मृततत्प्रभावास्तस्यापि ततो मरणमाशङ्क्य, अघस्य मरणे निराशा. सन्तो हाहेति चुक्रुशु. । कस आदिर्मुख्यो नियन्ता येषा ते कौणपाः कुणपाशिनो राक्षसास्तु जहृषुरित्यन्वयः । हर्षे हेत्वन्तरमपि सूचयन्नाह– अघबान्धवा इति । चारै. सद्य एव गत्वा कथनात् कसादीनामपि तज्ज्ञानमिति ज्ञेयम् ॥ २९ ॥ तत् 'हाहा' इत्याक्रोश श्रुत्वा तु श्रीकृष्णः सार्भकवत्सक बालवत्ससहित आत्मान मुखसवरणमात्रपरिवर्तनादिना चूर्णीचिकीर्षोस्तस्य गले आदावेव तरसा वेगेन झटिति ववृधे इत्यन्वयः । 'तस्य तु मरणभय नास्त्येव' इत्याह– अव्यय इति । अपक्षयशून्य इत्यर्थः । तत्र हेतुमाह– भगवानिति । ऐश्वर्यादिषड्गुणपूर्ण इत्यर्थः । तस्य स्वरूपतो गुणतो वा क्षये भगवत्त्वमेव न स्यादिति भावः ॥ ३० ॥ ततो हि तस्माद्वर्धनादेव निरुद्धमार्गिणो निरुद्धैः प्राणमार्ग' कण्ठो यस्यास्ति तस्य अत एव उद्गीर्णदृष्टेर्बहिर्निर्गतलोचनस्य । तस्य व्याकुलता सूचयन्नाह– इतस्ततो भ्रमतो देह चालयतः । तत्प्राणस्य महत्त्व सूचयन्नाह– अतिकायस्येति ।

तदा घनच्छदा देवा भयाद्धाहेति चुक्रुशुः ॥ जहृषुर्ये च कंसाद्या. कौणपास्त्वघबान्धवा. ॥ २९ ॥ तच्छ्रुत्वा भगवान् कृष्णस्त्वव्यय' सार्भवत्सकम् ॥ चूर्णीचिकीर्षोरात्मानं तरसा ववृधे गले ॥ ३० ॥ ततोऽतिकायस्य निरुद्धमार्गिणो ह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्तत. ॥ पूर्णोऽन्तरङ्गे पवनो निरुद्धो मूर्धन् विनिष्पाट्य विनिर्गतो बहि. ॥ ३१ ॥ तेनैव सर्वेषु बहिर्गतेषु प्राणेषु वत्सान् सुहृद. परेतान् ॥ दृष्ट्या स्वयोत्थाप्य तदन्वित पुनर्वक्त्रान्मुकुन्दो भगवान् विनिर्ययौ ॥ ३२ ॥ पीनाहिभोगोत्थितमद्भुतं महज्ज्योतिः स्वधाम्ना ज्वलयद्दिशो दश ॥ प्रतीक्ष्य खेऽवस्थितमीशनिर्गमं विवेश तस्मिन् मिषतां दिवौकसाम् ॥ ३३ ॥

स्थूलशरीरस्याघस्यान्तरङ्गे देहमध्ये निरुद्धः, अतएव पूर्णः पवनः प्राणवायुर्मूर्धन् मूर्धनि स्थित ब्रह्मरन्ध्र विनिष्पाट्य विनिर्भिद्य बहिर्विनिर्गतः । तुशब्द' सन्देहनिरासार्थ. ॥ ३१ ॥ तेनैव मार्गेण सर्वेषु प्राणेषु इन्द्रियेषु बहिर्गतेषु सत्सु परेतान् स्ववियोगात् तज्जाठराग्निज्वालातश्च मूर्च्छितान् वत्सान् सुहृदो बालाश्च स्वयाऽमृतवर्षिण्या दृष्ट्या चेतनान् कृत्वोत्थाप्य तदन्वितस्तैः सहितो मुकुन्दो वत्सादीनामघात्, तस्य च ससारात् मोचको भगवान् पुनस्तस्य वक्त्राद्विनिर्ययौ ॥ ३२ ॥ तदा च पीनः स्थूलो योऽहेर्भोगो देहस्तस्मादुत्थित निःसृत महत् प्रकाशबहुल ज्योति स्वधाम्ना स्वप्रकाशेन दश दिश. ज्वलयत् प्रकाशयत् खेऽवस्थित सत् ईशस्य श्रीकृष्णस्य ततो निर्गम प्रतीक्ष्य निर्गते तस्मिन् विवेश। 'अद्भुत ज्योतिर्दिवौकसा पश्यताम्' इति पदैर्लोके तन्मुक्तिप्रसिद्ध्यर्थं भगवदिच्छया तद्दर्शनं जातमिति ज्ञेयम अन्यथा जीवस्य...

ततोऽघासुरवधादतिहृष्टाः सुरादयः स्वकृतः 'तत्कार्यं कृतवत' : श्रीकृष्णस्यार्हणं सत्कारमकृत अकुर्वन्। तत्र सुरा देवाः पुष्पैरर्हणम् 'अकृत' इति सर्वत्रान्वयः। अप्सरसश्च नर्तनैः। सुष्ठु गायन्तीति सुगाः गन्धर्वादयो गीतैः। वाद्यधरा विद्याधरादयो वाद्यकैः। विप्रा वसिष्ठादयो ऋषयः स्तवैः। गणा' पार्षदा. भक्तजनाश्च जयशब्दै' ॥ ३४ ॥ किञ्च येषा देवादीनामद्भुतस्तोत्राणि च सुवाद्यानि च गीतिकाः सुकुमारा गीतयश्च जयो जयशब्द आदिर्येषा ते, तान् येनैकोत्सवान् नृत्याद्यनेकोत्सवेन जातान् मङ्गलस्वनान् हस्तकिङ्किण्यादिशब्दान् स्वधाम्नः सत्यलोकस्यान्ति समीपे श्रुत्वा अजो ब्रम्हा अलक्षित एवाचिरात् शीघ्रमागतः सन् ईश्वरस्य श्रीकृष्णस्य महिमानमघासुरस्यापि मोक्षप्रदान, मुखप्रवेशेन ततो बालादीना विमोचन च दृष्ट्वा विस्मयं जगामेत्यन्वयः। नच ब्रह्मलोकपर्यन्तशब्दगमनासम्भवो आशङ्कनीय., स्वमाहात्म्यप्रदर्शनार्थं भगवदिच्छया तत्सम्भवात् ॥३५॥ 'आश्चर्यान्तर शृणु' इत्याशयेन सम्बोधयति— राजन्निति। तदद्भुतमाजगर चर्म वृन्दावने शुष्क सत् व्रजौकसा बहुतिथ बहुकालमाक्रीडगव्हर क्रीडार्थे महाबिल बभूवेत्यन्वयः ॥ ३६ ॥ अग्रिमकथाप्रश्नमुत्थापयन् अन्यदप्याश्चर्यमाह— एतदिति। " कौमार पञ्चमाब्दान्त पौगण्डं दशमावधि। कैशोरमापञ्चदशाद्यौवन तु ततः परम् ' इति वचनात् एतत् मृत्योरात्माहिमोक्षण तत्रात्मना बालादीनां प्रसिद्धात् मृत्योर्मोक्षणमहेरघासुरस्य ज्योतिषः कृष्णे प्रवेशस्य दृष्टत्वात् संसारलक्षणात् मृत्योर्मोक्षण हरेः कौमारज पञ्चमाब्दकृतं कर्म तदैव दृष्ट्वा पौगण्डके षष्ठेऽब्देऽद्यैव तत् वृत्तम् इति विस्मिता' सन्तो बाला व्रजे उचु. ॥३७॥ 'अहो! दुष्टस्याप्येवं मुक्तिः' इत्याश्चर्यं कुर्वन्त प्रत्याह— नैतद्विचित्रमिति द्वाभ्याम्। मनुजार्भमायिनः स्वेच्छया स्वीकृतमनुष्यबालभावस्य, वस्तुतस्तु परमस्य परमेश्वरस्य। तत्र हेतुमाह— परे ब्रह्मादय', अवरे स्थावरादय.। तेषा वेधस. स्रष्टुर्भगवतः स्पर्शनेन धौतपातको निवृत्तकर्मबन्धनः सन् अघोऽप्य-

ततोऽतिहृष्टा' स्वकृतोऽकृतार्हणं पुष्पै' सुरा अप्सरसश्च नर्तनै' ॥ गीतै. सुगा वाद्यधराश्च वाद्यकैः स्तवैश्च विप्रा जयनि.स्वनैर्गणा. ॥ ३४ ॥ तदद्भुतस्तोत्रसुवाद्यगीतिकाजयादिनैकोत्सवमङ्गलस्वनान् ॥ श्रुत्वा स्वधाम्नोऽन्त्यज आगतोऽचिराद्दृष्ट्वा महीशस्य जगाम विस्मयम् ॥ ३५ ॥ राजन्नाजगरं चर्म शुष्क वृन्दावनेऽद्भुतम् ॥ व्रजौकसां बहुतिथं बभूवाक्रीडगह्वरम् ॥ ३६ ॥ एतत् कौमारजं कर्म हरेरात्माहिमोक्षणम् ॥ मृत्योः पौगण्डके बाला दृष्ट्वोचुर्विस्मिता व्रजे ॥ ३७ ॥ नैतद्विचित्रं मनुजार्भमायिनः परावराणा परमस्य वेधस. ॥ अघोऽपि यत्स्पर्शनधौतपातक' प्रापाऽऽत्मसाम्यं त्वसतां सुदुर्लभम् ॥ ३८ ॥

सता विषयाविष्टचित्ताना भगवद्विमुखाना सुदुर्लभमपि आत्मसात्म्यं भगवत्समानरूपता यत् प्राप तदेतच्चित्रमाश्चर्यं न भवति । अनेन प्रथम लोके मुक्तिख्यापनाय भगवदिच्छया सायुज्य प्राप्तस्यापि शिशुपालादिवत् पुन. सारूप्यप्राप्तिर्बोध्या ॥ ३८ ॥ एतदेव कैमुत्यन्यायेन द्रढयति– सकृदिति । 'अङ्ग' इति सम्बोधन स्नेहसूचकम् । यस्याङ्ग मूर्तिस्तस्य प्रतिकृतिः साऽपि मनोमयी मनसा चिन्तिता, तत्रापि बलादन्तर्हिता हृदये स्थापिता सती प्रह्लादादिभक्तेभ्यो भागवतीं गति मुक्तिं ददौ, स एव परमो भगवान् स्वयं साक्षादेव यस्यान्तर्गतस्तस्य मुक्तौ किं पुन'? किमाश्चर्यमित्यर्थ' । तस्य परमेश्वरत्वमेव स्पष्टयति–नित्या चासावात्मसुखानुभूतिश्च तया, नित्यस्वानन्दानुभवेनाभिव्युदस्ता दूरतोऽपसारिता माया येन इति ॥ ३९ ॥ हे द्विजाः यादवदेवेन श्रीकृष्णेन दत्त' 'रातो वोऽनुग्रहार्थाय' इति प्रथमोक्ते' गर्भे रक्षा कृत्वा युधिष्ठिरादिभ्यो दत्तः परीक्षित् स्वरातुः स्वदातुः स्वरक्षकस्य विचित्र-

सकृद्यदङ्गप्रतिमाऽन्तराहिता मनोमयी भागवतीं ददौ गतिम् ॥ स एव नित्यात्मसुखानुभूत्यभि-व्युदस्तमायोऽन्तर्गतो हि कि पुन' ॥ ३९ ॥ सूत उवाच ॥ इत्थ द्विजा यादवदेवदत्त. श्रुत्वा स्वरातुश्चरित विचित्रम् ॥ पप्रच्छ भूयोऽपि तदेव पुण्यं वैयासकि यन्निगृहीतचेता. ॥ ४० ॥ राजोवाच ॥ ब्रह्मन् कालान्तरकृतं तत्कालीनं कथ भवेत् ॥ यत् कौमारे हरिकृत जगुः पौगण्डकेऽर्भकाः ॥४१॥ तद्ब्रूहि मे महायोगिन्न परं कौतूहलं गुरो ॥ नूनमेतद्धरेरेव माया भवति नान्यथा ॥४२॥

मघमोक्षादिचरितमित्थं श्रुत्वा भूय पुनरपि तदेव श्रीकृष्णचरित वैयासकि शुक प्रति पप्रच्छेत्यन्वयः । प्रश्ने हेतुमाह– यदिति । येन श्रीकृष्णचरितेन नितरां गृहीतं वशीकृत चेतो यस्य सः । वशीकारेऽपि हेतुमाह– पुण्यमिति । परमपुण्यजनकं सर्वदुरितनिवर्तकम् ॥४०॥ शास्त्ररहस्यज्ञत्व सूचयन् सम्बोधयति– ब्रह्मन्निति । 'यत् आत्माहिमोक्षलक्षण कर्म कौमारावस्थाया हरिणा कृत, तत् अर्भका बालाः पौगण्डावस्थाया व्रजे जगुः' इति यद्भवतोक्तं तत् कालान्तरे कौमारे कृतं तत्कालीन पौगण्डकालीन कथ भवेत् ? ॥ ४१ ॥ 'उत्तरदाने त्व योग्योऽसि' इति सूचयन् सम्बोधयति–गुरो इति । तत्र सर्वज्ञत्वहेतु सूचयन् पुन' सम्बोधयति– महायोगिन्निति । नूनं निश्चितमेव वैपरीत्यकथनस्य कारण हरेर्मायैव भवति, अन्यथा प्रकारान्तरेण तु न घटते, इति यद्यपि सामान्यतो जानामि, तथापि विशेषतस्तत्कारण ब्रूहीत्यन्वय । एतच्छ्रोतुं मम परं कौतूहलं महानुत्साहो वर्तते इति ॥ ४२ ॥

महता कृपापात्रत्वेन भगवत्कथामृतपानेन च आत्मनः कृतार्थतामाविष्करोति— वयमिति । महत्त्वं सूचयन् सम्बोधयति— हे गुरो इति । ' राज्ञा कुल ब्रह्मणा पादशौचादरात् विसृष्टम् ' इति यत् हीनत्वमुक्त तदेव पुनः सूचयन् आह— क्षअबन्धवोऽपि वय लोके धन्यतमाः कृतार्थाः, यद्यस्मात् पुण्य मोक्षप्रतिबन्धकदुरितनिवर्तक श्रीकृष्णस्य सदानन्दस्वरूपस्य कथारूपममृतं जन्ममरणादिनिवर्तकं त्वत्तः परमकृपालोर्मुहुः वारवार पिबामः ॥ ॥ ४३ ॥ ' स्म ' इत्यवधारणे । इत्थमेव पृष्टः, अतस्तेन प्रश्नेन स्मारितो योऽनन्तः कृष्णस्तेन हृतान्यखिलानि इन्द्रियाणि यस्य सः तदेकाकारचित्तत्वेन निवृत्तसर्वेन्द्रियवृत्तिः कृच्छ्रात् करतालदुन्दुभिशङ्खादिवाद्ययुतस्तोत्रादिप्रयासात् पुनः शनैर्लब्धा बहिर्दृशिः दृष्टिः येन स तु बादरायणिः शुकः हे भागवतोत्तमोत्तम शौनक[1] त राजानं प्रति भगवच्चरितमाह । द्वितीयान्तपाठे तु त भागवताना मध्ये ये उत्तमास्तेष्वप्युत्तम राजानं प्रत्याह ।

वयं धन्यतमा लोके गुरोऽपि क्षत्रबन्धवः ॥ यत् पिबामो मुहुस्त्वत्त' पुण्यं कृष्णकथाऽमृतम् ॥ ४३ ॥ सूत उवाच ॥ इत्थं स्म पृष्टः स तु बादरायणिस्तत्स्मारितानन्तहृताखिलेन्द्रिय· ॥ कृच्छ्रात् पुनर्लब्धबहिर्दृशिः शनै' प्रत्याहत भागवतोत्तमोत्तम ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे तामसनिरोधनिरूपणप्रकरणे अघासुरमोक्षनिरूपण नाम द्वादशोऽध्याय· ॥ १२ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ साधु पृष्टं महाभाग त्वया भागवतोत्तम ॥ यन्नूतनयसीशस्य शृण्वन्नपि कथां मुहुः ॥ १ ॥

॥४४॥ इति श्रीवल्लभाचार्य—वंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र तामसरोधवर्णने ॥ विवृतो द्वादशोऽध्यायो ह्यघमोक्षनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥ त्रयोदशे सरित्तीरे भोजनादि हरेस्तथा ॥ वत्सादिहरणं ब्रह्ममोहनादि निरूप्यते ॥ १ ॥ राज्ञो भगवत्कथाश्रवणादरातिशयं दृष्ट्वा तस्य भाग्यादिकमभिनन्दति— साध्विति द्वाभ्याम् । हे महाभाग ' हे भागवतोत्तम ' त्वया साधु पृष्टम् । तत्र महाभागवत्त्वे ज्ञापक भागवतोत्तमत्वम् । अनेकजन्मसञ्चितपुण्य विना भक्तेरसम्भवात् भक्तेर्ज्ञापकः साधुप्रश्नः, भक्तिविना तदनुपपत्तेः । प्रश्नस्य साधुत्वे हेतुमाह— यदिति । यत् यस्मात् त्वमीशस्य कथां मुहुः शृण्वन्नपि नूतनयसि प्रश्नेन नव्यामिव करोषि ॥ १ ॥

[1] " द्वितीये वत्सहरण बालैर्ब्रह्माभ्र मस्तथा ॥ स्तोत्रस्योपक्रमश्चैव भोजनादि निरूप्यते " इति सुबोधिन्याम् ।

तमासुरीमसुरसञ्चारविशिष्टा वेलामविज्ञाय अननुसन्धाय "मुहूर्तार्धावशिष्टाया द्वादश्या पारणा प्रति । निशीथात् सम्यगुत्थाय क्रिया' कुर्याद्यथोचितम् ॥ अग्निहोत्रादिकर्माणि तथा नैमित्तिकानि च । आमध्याह्ना' क्रियाः सर्वाः कर्तव्याः शम्भुशासनात् " इत्यादिशास्त्रानुसारेण निशि अर्धरात्रिसमये उदकं प्रविष्ट नन्द गृहीत्वा वरुणस्य भृत्यो रात्रौ जलरक्षापरः वरुणस्यान्तिक समीपमनयत् । ननु 'नन्दस्तु शास्त्रानुसारेण रात्रौ स्नातु प्रवृत्तः, तस्य कोऽपराधो येन स गृहीतवान् ?' इत्याशङ्क्याह– असुर इति । भगवद्धर्मानभिज्ञत्वादित्याशयः। अत एव वरुणो वक्ष्यति– अजानता मामकेनेति ॥ २ ॥ ततः प्रभाते त नन्दमपश्यन्तो गोपका' 'हे कृष्ण' हे राम' स्नातु गतो नन्दो न मिलति' इति चुक्रुशुः । भगवान् सर्वज्ञः कृष्णस्तदाक्रोशमुपश्रुत्य पितर नन्द च वरुणेनाहृत ज्ञात्वा तस्य वरुणस्यान्तिक गतः। तस्य तत्र गमने हेतुमाह– स्वानां स्वभक्तानामभयद इति । तत्र सामर्थ्यमाह– विभुरिति। 'राजधर्म ईदृश एव, यत्स्वसेवका अनुपेक्षणीया' इति सूचयन् सम्बोधयति– राजन्निति ॥ ३ ॥ स्वान्तिक प्राप्त हृषीकाणामीशं नियन्तार

तं गृहीत्वाऽनयद्भृत्यो वरुणस्यासुरोऽन्तिकम् ॥ अविज्ञायाऽऽसुरीं वेलां प्रविष्टमुदकं निशि ॥ २ ॥ चुक्रुशुस्तमपश्यन्त कृष्ण रामेति गोपका ॥ भगवांस्तदुपश्रुत्य पितर वरुणाहृतम् ॥ तदन्तिकं गतो राजन् स्वानामभयदो विभु ॥ ३ ॥ प्राप्त वीक्ष्य हृषीकेश लोकपाल सपर्यया ॥ महत्या पूजयित्वाऽऽह तद्दर्शनमहोत्सव ॥ ४ ॥ वरुण उवाच ॥ अद्य मे निभृतो देहोऽद्यैवार्थोऽधिगत प्रभो ॥ त्वत्पादभाजो भगवन्नवापु. पारमध्वन. ॥ ५ ॥ नमस्तुभ्य भगवते ब्रह्मणे परमात्मने ॥ न यत्र श्रूयते माया लोकसृष्टिविकल्पना ॥ ६ ॥

कृष्ण वीक्ष्य तस्य दर्शनेन महानुत्सवो यस्य स लोकपालो वरुणो महत्या सपर्यया पूजासाधनेन पूजयित्वा आहेत्यन्वयः ॥ ४ ॥ वरुणकृता स्तुतिमाह– अद्येति चतुर्भि. । प्रभो हे स्वामिन्! अद्य अधुना मे मया देहो निभृतः धृतः, त्वद्दर्शनादिना मम जन्मसाफल्य जातमित्यर्थ. । अद्यैवार्थः परम फलमधिगतः प्राप्तः, सर्वरत्नाकरपतिनापि मयेतः पूर्वं नैवविधोऽर्थ प्राप्त', तवैव परमार्थत्वादित्यर्थः । 'ससारोऽपि त्वद्दर्शनादिना निवृत्तप्राय एव' इत्याशयेनाह– त्वत्पादेति । त्वच्चरणभक्ता अध्वनः जन्ममरणादिलक्षणस्य ससारमार्गस्य पार त्वामवापु प्रापु' ॥ ५ ॥ एव स्वकृतार्थतामाविष्कृत्य, अथ स्वापराध क्षमापयितुकामो भगवत. सर्वशास्त्रसिद्धान्तसिद्धफलरूपत्व वर्णयन् नमस्करोति– नम इति । भगवते वैष्णवे सिद्धान्तसिद्धाय, ब्रह्मणे श्रुतिसिद्धान्तसिद्धाय, परमात्मने स्मृतिसिद्धान्तसिद्धाय, तुभ्य प्रत्यक्षप्रमासिद्धाय नमः । ननु 'ममापि सर्वजनसाधारणतया प्रत्य-

क्षत्वात् कथं सर्वशास्त्रसिद्धफलरूपत्वम् ? ' इत्याशङ्क्याह— नेति । यत्र भवद्विग्रहे लोकानां जनानां सृष्टिं देवमनुष्यादिशरीरं विकल्पयति या माया प्रकृतिः सा नियामकतया कस्मिन्नपि शास्त्रे न श्रूयते, अतो न सर्वजनसाधारणत्वशङ्का युक्ता ॥ ६ ॥ अथ स्वापराधं निवेदयन् क्षमापयति— अजानतेति । मामकेन मद्भृत्येन अयं तव पिता आनीत इति यत् तत् मद्भृत्यकृतत्वान्मदपराधं क्षन्तुमर्हसि । ' तर्हि किमित्यानीत ' इत्याशङ्क्याह— अकार्यवेदिनेति । कार्यं कर्तव्यमजानता । तत्र हेतुमाह— अजानतेति । त्वद्धर्मं त्वत्प्रभावं चाजानतेत्यर्थः ॥ तदज्ञाने हेतुमाह— मूढेनेति, अविद्यामोहितेनेत्यर्थः ॥ ७ ॥ ' प्राप्तकामधेन्वाद्यैश्वर्यस्य तव न काचिदपेक्षा ' इत्याशयेन सम्बोधयति— गोविन्देति । एष ते पिता त्वया नीयताम् । ' महांश्चायमपराध ' इति सूचयन् सम्बोधयति— पितृवत्सल इति । ' तथापि सदानन्दरूपस्य तव अनुग्रह एव युक्त ' इत्याशयेन सम्बोधयति— कृष्णेति । ममाप्यनुग्रहं कर्तुमर्हसि । कोऽसावनुग्रहोऽपेक्षित ' इत्यपेक्षायां ' तं त्वमेव जानासि, सर्वसाक्षित्वात् ' इत्याशयेनाह— अशेषदृगिति ॥ ८ ॥ एवं वरुणेन प्रसादितः प्रसन्नी-

अजानता मामकेन मूढेनाकार्यवेदिना ॥ आनीतोऽयं तव पिता तद्भवान् क्षन्तुमर्हति ॥ ७ ॥
ममाप्यनुग्रहं कृष्ण कर्तुमर्हस्यशेषदृक् ॥ गोविन्द नीयतामेष पिता ते पितृवत्सल ॥ ८ ॥

॥ श्रीशुक उवाच ॥

एवं प्रसादितः कृष्णो भगवानीश्वरेश्वरः ॥ आदायागात् स्वपितरं बन्धूनां चावहन् मुदम् ॥ ९ ॥
नन्दस्त्वतीन्द्रियं दृष्ट्वा लोकपालमहोदयम् ॥ कृष्णे च सन्नतिं तेषां ज्ञातिभ्यो विस्मितोऽब्रवीत् ॥ १० ॥
ते त्वौत्सुक्यधियो राजन् मत्वा गोपास्तमीश्वरम् ॥ अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः ॥ ११ ॥

कृतो भगवान् कृष्णः स्वपितरं नन्दमादाय बन्धूनां व्रजवासिनां मुदं हर्षमावहन् व्रजमगात् । ' वरुणेऽपि तत्प्रार्थितमनुग्रहं कृतवान् ' इति सूचयन्नाह— ईश्वरेश्वर इति । ईश्वराणां वरुणादीनामपीश्वर इत्यर्थः ॥ ९ ॥ नन्दस्त्वतीन्द्रियमदृष्टपूर्वं लोकपालस्य वरुणस्य महोदयमैश्वर्यं दृष्ट्वा तेषां वरुणादीनां कृष्णे सन्नतिं नम्रतां भृत्यतां च दृष्ट्वा अतीव विस्मितः सन् ज्ञातिभ्यः उपनन्दादिभ्यस्तदब्रवीत् अवर्णयत् ॥ १० ॥ ततस्ते तु गोपाः कृष्णमीश्वरं मत्वा तद्वैभवदर्शनाय औत्सुक्ययुक्ता धीर्येषां तथाभूताः सन्तः अयमधीश्वरः अपि किं सूक्ष्मामदृष्टपूर्वां स्वगतिं स्वविभूतिं नोऽस्माकमुपाधास्यत् दर्शयिष्यतीति मनोरथं कृतवन्तः ॥ ११ ॥

इत्येवं स्वाना भक्तानामभिप्राय स्वयमेव विज्ञाय तेषा सङ्कल्पस्य मनोरथस्य सिद्धये वक्ष्यमाणमाचिन्तयदित्यन्वयः। 'कथ तैरकथित ज्ञातवान्?' तत्राह— अखिलदृगिति। सर्वसाक्षीत्यर्थः। 'तन्मनोरथपूरणचिन्तया तस्य किं प्रयोजनम्?' इत्याशङ्क्याह— कृपयेति ॥ १२ ॥ तच्चिन्तामेवाह— जन इति। 'वै' इति निश्चयेन। एतस्मिल्लोके ससारे जनः अविद्या स्वरूपाज्ञानं, ततः कामः शब्दादिविषयभोगाभिलाषः, ततश्च तत्प्राप्त्यनुगुणकर्माणि। तैरुच्चावचासु उत्कृष्टापकृष्टासु गतिषु देवतिर्यङ्मनुष्यादियोनिषु भ्रमन् गच्छन्नपि स्वा गति स्वपरमार्थभूतं मत्स्वरूप न वेद न जानाति, अतः एतेषा व्रजवासिना स्वसाधनवशात् ममालौकिकस्वरूपवैभवदर्शन सुदुर्लभमेव। तथापि परमभक्तत्वादेतेषा मनोरथानुरोधेन मया प्रदर्शनीयमिति शेषः ॥ १३ ॥ इत्येव सञ्चिन्त्य भगवान् सर्वथा सर्वकरणे समर्थः श्रीकृष्णः गोपाना लोकव्यापिवैकुण्ठाख्य तथा स्व स्वरूप च दर्शयामासेत्यन्वयः। तदुभय विशिनष्टि— तमसः परमिति। प्राकृतप्रपञ्चातीतमित्यर्थ.। 'तत्प्रदर्शने केवल कृपैव हेतुः, न तेषा तद्दर्शनानुरूप साधनमस्ति' इत्याह— महाकारुणिक

इति स्वाना स भगवान् विज्ञायाखिलदृक् स्वयम् ॥ सङ्कल्पसिद्धये तेषां कृपयैतदचिन्तयत् ॥ १२ ॥
जनो वै लोक एतस्मिन्नविद्याकामकर्मभि· ॥ उच्चावचासु गतिषु न वेद स्वां गतिं भ्रमन् ॥ १३ ॥
इति सञ्चिन्त्य भगवान् महाकारुणिको हरि ॥ दर्शयामास लोक स्वं गोपानां तमस· परम् ॥ १४ ॥
सत्य ज्ञानमनन्तं यद्ब्रह्म ज्योति· सनातनम् ॥ यद्धिपश्यन्ति मुनयो गुणापाये समाहिता· ॥ १५ ॥
ते तु ब्रह्महृदं नीता मग्ना· कृष्णेन चोद्धृता· ॥ ददृशुर्ब्रह्मणो लोक यत्राक्रूरोऽध्यगात् पुरा ॥ १६ ॥

इति। कृपायामपि तच्छीलमेव हेतुमाह— हरिरिति। आश्रितजनदुःखहरणशील इत्यर्थः ॥ १४ ॥ प्रकृतेः पर वेदप्रतिपाद्य स्वरूपमेव वर्णयति—सत्यमिति। सत्य परमार्थभूतम्, ज्ञान चैतन्यरूपम्, अनन्त देशकालपरिच्छेदरहितम्, ज्योतिः स्वप्रकाशम्, सनातन शश्वत्सिद्ध गुणापाये गुणाना निरासे सति समाहिताः सावधाना मुनयः मननशीला ज्ञानिनो यत् पश्यन्ति यच्च वेदप्रसिद्ध ब्रह्म तत्स्वरूप दर्शयामासेत्यन्वयः ॥ १५ ॥ प्रदर्शनप्रकार प्रदर्शयन्नुक्तमेव स्पष्टयति—ते त्विति द्वयेन। ते तु गोपा ब्रह्महृद नीताः प्रापितास्तस्मिन्निमग्नाश्च सन्तो ब्रह्मणस्तस्यैव लोकं वैकुण्ठाख्य ददृशुरित्यन्वयः। 'कोऽसौ ब्रह्महृद' इत्यपेक्षायामाह-यत्रेति। यत्र यमुनाहृदे अक्रूरोऽध्यगात् वैकुण्ठादिक दृष्टवास्तस्यैव ब्रह्महृद इति नाम। शुकपरीक्षित्सवादात् प्राक्तनत्वात् पुरेति भूतनिर्देश· ॥ १६ ॥

१ ब्रह्मानदान्महानन्दो भजने वर्तते स्फुटम् ॥ तारतम्य ज्ञापयितु प्रदर्श्योद्धृतवास्तत ॥ १ ॥

नन्दादयो गोपास्तु त लोक दृष्ट्वा तथा तत्र लोके छन्दोभि मूर्तिमद्भिर्वेदै स्तूयमान श्रीकृष्ण च दृष्ट्वा परमानन्देन निर्वृता पूर्णा अभवन्। ततश्च पुन श्रीकृष्णेन उद्धृताः समाधेरिवोत्थापिताः पूर्ववत्त दृष्ट्वा विस्मिता बभूवुरिति व्यवहितेनान्वयः ॥ १७ ॥ इति श्रीवल्लभाचार्य-वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र तामसरोधवर्णने ॥ अष्टाविंशो गतो वृत्तिं लोकदर्शनबोधकः ॥ ३ ॥ पतिर्ब्रह्मादीना सकलजगता यः कलयिता वनेऽनृत्यद्गोपी-जनगणगतः प्रेमवशगः ॥ सदा पूज्यो देवैरपि मुनिगणैश्चिन्तितपदः स वा ईशः कुर्यान्मम सकलवाछागतफलम् ॥ १ ॥ अथ पञ्चभिरध्यायै रास-

नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृता ॥ कृष्ण च तत्र छन्दोभिः स्तूयमान सुविस्मिता ॥ १७ ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे तामसनिरोधनिरूपणप्रकरणे वैकुण्ठप्रदर्शन नामाष्टाविंश-तितमोऽध्याय ॥ २८ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ ❀ भगवानपि ता रात्री शरदोत्फुल्लमल्लिका ॥
वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रित ॥ १ ॥

क्रीडामहोत्सव. ॥ वर्ण्यते मुनिना कृष्णसद्गुणाकृष्टचेतसा ॥ २ ॥ ऊनत्रिंशे व्रजस्त्रीणामागम तु वनेऽन्तिकम् ॥ तासा गर्वेण कृष्णस्य चान्तर्धान निरूप्यते ॥ ३ ॥ एव सप्तवर्षवयस्कस्य भगवत इन्द्रादिगर्वनिवृत्त्यर्था गोवर्धनपूजादिलीलाऽनुवर्णिता । अथ "सोऽपि कैशोरक वयो मानयन् मधु-सूदनः । रेमे ताभिरमेयात्मा क्षपासु क्षपिताहित" इति विष्णुपुराणवचनात् प्रकटितकैशोरवयस्कस्य तस्य ब्रह्मादिविजयेन सरूढगर्वस्य कामदेवस्य

१ "ब्रह्मानदात् समुद्धृत्य भजनानदयोजने ॥ लीला या युज्यते सम्यक् सा तुर्ये विनिरूप्यते ॥ १ ॥ लौकिकस्त्रीषु ससिद्धस्तद्द्वारा पुरुषो भवेत् ॥ स्वानदानुभवार्थं हि योग्यतापि निरूपिता ॥ २ ॥ अतो हि भजनानद स्त्रीषु सम्यग्विधार्यते ॥ तद्द्वारा पुरुषाणा च भविष्यति न चान्यथा ॥ ३ ॥ स्त्रिय एव हि त पातुं शक्तास्तासु तत पुमान् ॥ अतो हि भगवान् कृष्ण स्त्रीषु रेमे ह्यहर्निशम् ॥ ४ ॥ बाह्याभ्यतरभेदेन आतरं तु पर फलम् ॥ तत शब्दात्मिका लीला निर्दुष्टा सा निरूप्यते ॥ ५ ॥ ततो रूपप्रप[illegible]स्य पचधा रमण मतम् ॥ आत्मना प्रथमा लीला म[illegible] तु तत परा ॥ ६ ॥ वाक्प्राणैस्तु तृतीया स्यादिंद्रियैस्तु तत परा ॥ शारीरी पचमी वाच्या ततो रूप प्रतिष्ठितम् ॥ ७ ॥ षड्विंशे तु हरि पूर्वं जीवानानदयत् स्वयम् ॥ ते चेत्समर्पितात्मा-नस्तत्रोपायश्च रूप्यते ॥ ८ ॥ आत्मा यावत्प्रपन्नोऽभूत्तावद्धै रमते हरि ॥ सोऽन्त करणसबधी तिरोधत्ते हरिश्च स" ॥९॥ इति सुबोधिनीकारिका । ❀ अथैतस्याध्यायस्य व्याख्यान स[illegible]मपि सुबोधिनीस्थमनूदितमित्याकलनीय सुधीभि । प्रथम भजनानद निरूपयितु स्त्रीषु स्वानद स्थापनीय इति तासु रत्यर्थमिच्छा कृतवानित्याह—भगवानपीति । 'मयेमा रस्यथ क्षपा' इति या रात्रयो वरत्वेन दत्ता स्त्रीणा रमणार्था ता रात्रीर्भगवान् परिगृह्य सर्वास्वेव रात्रिषु ता अधिदैविकीरारोप्य पूर्णत्वात्तासा पूर्णतारूपा कृत्वा ऋतमपि शरदमेव कृत्वा तस्यापि कार्यं पुष्पाणे[illegible] कृत्वा रसोद्दीपकत्वेन सर्वा सामग्रीं विधाय पश्चाद्रमणार्थं स्वानदप्रकाशक कामपितामह मन उत्पादितवान । तत्र सर्वासु स[illegible] स्वधर्मिष्वपि बोधनीय । तत्र वेणुरपि सहायता प्राप्स्यति ।

गर्वनिवृत्त्यर्थां रासलीला निरूपयति—भगवानपीति । भगवानपि या "यातावला व्रज सिद्धा मयेमा रस्यथ क्षपाः" इति रमणार्थं प्रतिश्रुतास्ता रात्रीर्वीक्ष्य रन्तु मनश्चक्रे इत्यर्थ. । "अपिशब्दात्, गोपीना तु भगवता सह रमणेच्छा सदैवास्ति, तदर्थमेव कात्यायन्यर्चनादिप्रयत्नस्य कृतत्वात् । इदानीं तु भगवान् वैराग्यादिगुणपूर्णोऽपि स्वभक्ताना तासा मनोरथपूरणार्थं ताभिः सह रन्तु मनश्चक्रे" इति सूचितम् । ननु "तासा बह्वीना मनोरथ स एक. पूरयितु कथ शक्तः?" इत्याशङ्क्याह—योगमायामुपाश्रित इति । युज्यते कार्यार्थं नियुज्यते सा योगा एवभूता या माया अघटितघटनापटीयसी स्वाचिन्त्या शक्तिस्ता विधेयतयोपाश्रित, अतस्तस्य न किमपि दुर्घटम् । तासु रात्रिषु रमणयोग्यतामाह शरदेति । शरदा हेतुना उत्फुल्ला मल्लिका यासु ताः। यद्यपि शरदि न मल्लिकाकुसुमानि प्रफुल्लानि भवन्ति,तथापि भगवत्प्रभावात् वृन्दावने तथा नियमो नास्ति। निदाघोऽपि 'वसन्त इव लक्षित' इत्युक्तत्वात् ॥ 'रात्रीः' इत्यनेन शृङ्गाररसस्य रात्रिष्वेव प्रौढत्वाद्दिवसे तन्निषेधाच्च तास्वेव रमणसमय इति सूचितम् । बहुवचनेन बह्वीषु रात्रिष्वेव रमण सूचितम् ॥ १ ॥ यदैवं भगवान् रन्तु मनश्चक्रे तदा तन्मनसः उत्पन्नः स प्रसिद्ध. उडुराजश्चन्द्र' सर्वनक्षत्राधिपतिश्चन्द्रः अरुणेन उदयरागेण प्राच्या.

**तदोडुराज. ककुभः करैर्मुख प्राच्या विलिम्पन्नरुणेन शन्तमै ॥ स चर्षणीनामुदगाच्छुचो मृजन् प्रिय प्रियाया इव दीर्घदर्शन' ॥२॥**

तत कामवर्णनम् । अत तादृश मन कृतवान् । यद्यपि एत्प्रणालिकान्यतिरेकेणापि स्वानद तत्र स्थापयितु शक्त तथापि मर्यादा तिष्ठत्विति भगवानपि मनश्चक्रे । ननु एव सति स्वानद स्थानत्यागात् अन्यथा भवेत् । तत स्वरूपादपि प्रच्युत स्यादित्याशक्याह योगमायामुपाश्रित इति । योगमाया हि यथास्थितमेवान्यत्र स्थापयति । यथा सकर्षण लीलार्थं सापि पूर्वं परिगृहीतेति नापूर्वं किंचित् । यथा प्रमाणे रक्षाया च बलभद्रोपयोग एव कार्ये योगमायाया । तत्राप्यतरग योगमाया अन्यत्र स्थित प्रमाणमन्यत्रापि योजयति अन्यत्र स्थित चानदमन्यत्र । प्रमाणातिरिक्तमार्गो भक्तिमार्गश्चाग्रे विततौ भविष्यत । याश्च रात्रयो रमणार्थमेव निर्मिता ता एव परिगृहीता । अन्यथा साधारणीपरिग्रहे सर्वत्रैवानद स्यात् । शरदि ऋतावुत्फुल्ला मल्लिका यासु ता दृष्ट्वा रमणार्थं मन कृतवान् । योगमाया च समीप एवाश्रित्य स्थित ॥ १ ॥ इति सुबोधिन्याम् ॥

१ नूतने तस्मिन् मनसि देवता नास्तीति अनधिष्ठित च कार्यं न साधयिष्यतीति तदधिष्ठातृ दैव चन्द्र च ससृज इत्याह—तदोडुराज इति । यदैव मन कृतवान् तदैव तस्याधिदैवतमुडुराज उदगात् उदीतो जात । यद्यप्येकदा रात्रयो दृष्टा तथापि क्रमेणैव तासा स्थिति भगवन्मनश्चन्द्रस्याधिदैविकत्वात् पूर्ण एव स निष्कलकश्च मनस्येवाविर्भूते तस्याविर्भाव । क्रीडायामुपरतायामुपरति मध्याकाशपर्यंतमेव गमन नास्तमय । कदाचिदपि सोपि चन्द्र स्त्रीणा मनासि उडुस्थानानीति तेषामपि रक्षक । इद प्रथमतया जात इति पूर्वस्यामेव दिशि तस्योदय उच्यते । सा दिग्देवानामिति तस्या दिश इन्द्रो देवता अधिपतिश्च इदानीं भगवानेवेन्द्र इति तस्य रेतोरूप' तस्यामुद्गत अत प्राच्या ककुभ मुख मध्यभाग स्वकरै स्वकिरणै विलिंपन् उदगात् । तस्या मुखे न राग स्थित प्रतिस्पर्धिन्या सूर्यसबधेन रागसभवात् । अत अस्यापि मुख कुकुमसदृशै करैरारक्त क्रियते । यदि चन्द्र स्वदिशो मुख

ककुभो दिश. मुख विलिम्पन् तथा शन्तमैः सुखतमै. करै किरणै. चर्षणीना स्थावरजङ्गमात्मकप्राणिना शुचस्तापान् ग्लानीर्मृजन् अपनयन् उदगात् उदितो जात इत्यन्वयः। तत्र दृष्टान्तमाह– प्रिय इति। दीर्घकालेन दर्शन यस्य स प्रोष्यागतः प्रियो भर्ता यथा प्रियाया भार्याया मुखमरुणेन कुङ्कुमेन विलिम्पन्नागच्छति तथेत्यर्थः ॥ २ ॥ कुमुत् कुमुदं विकसनीयतया विद्यते यस्य तम्, यद्वा कौ पृथिव्या मुत् अस्यास्तीति त भूमेरानन्दकरम्। तत्र हेतुमाह– अखण्ड सम्पूर्ण मण्डल यस्य तम्। रमाया लक्ष्म्या आननस्य आभा इव आभा यस्य तम्। अय च लक्ष्मीमुखदृष्टान्तः ' तद्विवाहादिसमये कुङ्कुमयुक्तमुखा-

**दृष्ट्वा कुमुद्वन्तमखण्डमण्डल रमाननाभ नवकुङ्कुमारुणम् ॥ वनं च तत्कोमलगोभिरञ्जितं × जगौ कलं वामदृशा मनोहरम् ॥ ३ ॥**
**निशम्य गीतं तदनङ्गवर्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः ॥ आजग्मुरन्योन्यमलक्षितोद्यमा· स यत्र कान्तो जवलोलकुण्डला·॥४॥**

वस्थायाम्' इति सूचयति–नवकुङ्कुमवदरुणमिति। एवविध चन्द्र दृष्ट्वा तथा तस्य कोमलैः स्वल्पप्रकाशैः गोभि अभितो रञ्जित रमणीय कृत वन च दृष्ट्वा वामा मनोहृग शोभा यासा तासा मनोहर मनसः आकर्षण यथा स्यात्तथा कल मधुर जगौ वेणुनाद कृतवानित्यर्थ·। 'कोमलगोभिः' × इति तृतीयान्त-पाठस्वीकारे दीर्घाभाव आर्ष.। ' आञ्जितम्' * इति वा पदच्छेद· ॥ ३ ॥ अनङ्गस्य कामस्य वर्धनमुद्दीपक तस्य गीत व्रजे स्थिताः स्त्रियो निशम्य यत्र

---

न रञ्जयेत् तदा भगवन्मनोऽपि स्त्रीणा हृदय न रञ्जयेत्। करा शतमा शीतलत्वात् तापहारका। किच अरुणेन गुणेन कृत्वाऽत्यत कल्याणरूपा। अरुणो हि रागप्रधान पुरुषोपि दृद्य नुरागेण स्पृशति तदा सुख भवति। ननु " अस्य चद्रस्य यदि अधिष्ठातृत्वमात्र तदा मनस्येव उदयो भवेत्। यद्यधकारनिवृत्ति प्रयोजन तदा भगवतैव अधकारो निवर्तेत। यदि वा उद्दीपकत्व तदापि भगवतैव तत्सभव अतोऽस्यासाधारण कार्य वक्तव्यम् " इति चेदत आह– सचर्षणीना शुचो हरन्निति। चर्षण्य सर्वत्र परिभ्रमणशक्त्य ता सर्वत्र परिभ्रान्ता अपि न क्वापि परमानदसबधिन्यो जाता। यदि वा कश्चिन्मुच्येत तथापि ता न प्रवेश लभते, तत पूर्वमेव ता निवृत्ता भवति। अतस्तासा शोकस्तिष्ठत्येव ॥ चर्षणीसहिताना जीवाना वा तासा शोक इदानीमेव निवृत्त, शक्तिसहितानामेव परमानदानुभवस्य वक्तव्यत्वात्। प्रायेण तदानींतना जीवा तादृशशक्तियुक्ता। तस्मिन्नुदिते परमानदानुभवोऽवश्यभावीति। तथा सति प्रयोजनत्रय दिग्देवताया मुख समार्जन चर्षणीना शोकदूरीकरणमधकारनिवृत्त्यादिश्च कठोक्त द्वयमपि तदेकसाध्यमिति वक्तु दृष्टातमाह– प्रिय प्रियाया इति। दीर्घकालेन दर्शन यस्य। महता कालेनागतो भर्ता प्रिय प्रियाया पतिव्रताया शोक दूरीकृत्य मुखसमार्जन च करोति। न चैतत्कार्यमन्यथा सिद्ध्यति ॥ २ ॥

१ एव मनस उत्पत्तिमुक्त्वा तद्देवतायाश्च तत सकरूपोत्पत्त्यर्थ तच्छब्दयोनित्व निरूपयन् तद्दर्शनेन वेणुनाद उत्पन्न इत्याह– दृष्ट्वेति। कुमुद्वाश्चन्द्र पृथिव्या सर्वत्रैव मुद कृत वानिति। तथाकरणे सामर्थ्य– ' अखडमडलम् ' इति। न खड मडल यस्य ॥ एतस्य रसोत्पादनविभावत्वमप्यस्तीति ज्ञापयितु ' रमाननाभम् ' इति उक्तम्। लक्ष्म्या अय भ्राता भवतीति रमाया आननवत् आभा यस्य तथोक्त। किं च नवकुकुमवदरुणवर्णमपि तेन विवाहसमये यथा लक्ष्मीमुख तथा अय वर्तते। अतो नूतनकामजनक ॥ किं च वनमपि रसपोषक तस्य कोमलगोभिरल्पकिरणै अभितो रञ्जितमारक्तयुक्तम्। किरणाना रसदोग्धृत्व वन एव पाल्यमानत्व च ज्ञापयितु गोपदम्। रमाननाभत्वेन पूर्वं निरूपणाद्यथा तन्नूतनकटाक्षाभावोदयहेतवस्तथैतेऽपीति ज्ञापनाय च। गोपदमिन्द्रियस्यापि वाचकमिति तथा। अधुना भायोत्पत्तिरेव, तत्पोषस्तु स्वामिन्यागमनादिनाऽग्रे भावीति ज्ञापयितु कोमलपदम्। यत्र तेन वनमपि रज्यते तत्र यदर्थमागत तद्राग कथं न कुर्यात्? तत सकल्पद्वारा कामजनने सर्वं कार्यं भविष्यतीति कल यथा भवति तथा जगौ गान कृतवान्। तच्च गान वामदृशा सुदरदृष्टीना स्त्रीणा मनोहरमिति। तस्माद्वायत स्त्रिय कामायत इति श्रुते ॥ अर्थाद्धर्तेन सर्वा समाहूता इति। यदि व्यक्तमधुर गीत कुर्यात् तदा गीतमेव शृण्वत्य तत्रैव स्थिता भवेयु। यासा पुनर्दृष्टिर्नोत्तमा तास्तु नाकारिता एव ॥ ३ ॥

× गोभि रञ्जितमित्यत्र ' ढ्लोप ' इति पूर्वसवर्णदीर्घ प्राप्त। * इद तु समाधानमक्लिष्टम्। २ तत सर्वा स्त्रिय समागता इत्याह– निशम्येति। यद्यपि भगवता कुमारिक

स्थाने वने स कान्तः कमनीयतया पतित्वेन स्वीकृतः कृष्णोऽस्ति तत्र जग्मुरित्यन्वयः । असापत्न्याय अन्योन्यमलक्षितो न ज्ञापितो गमनोद्यमो याभिस्ताः । तासा गमने त्वरा सूचयन्नाह— जवेन वेगेन लोलानि चञ्चलानि कुण्डलानि यासा ताः । एवगमने हेतुमाह— कृष्णेन स्वसौन्दर्यसौस्वर्यादिभिर्गृहीतानि आकृष्टानि मानसानि देहेन्द्रियादिप्रवर्तकानि मनासि यासा ता इति ॥ ४ ॥ " कृष्णप्राप्तिमिच्छद्भिस्त्रैवर्गिक कर्मोपेक्ष्य तत्प्रवणैकचित्ततया तत्प्राप्तये प्रयतितव्यम्, अन्यथा तत्प्राप्तिः सुदुर्लभा " इति सूचयन्नर्धावसितत्रैवर्णिककर्मत्यागपूर्वकं गोपीनामागमनप्रकारमाह— दुहन्त्य इति त्रिभिः । व्रजे गवा बहुत्वेन काश्चिद्गोप्यो गा दुहन्त्यो दोहमर्धदुग्धपूर्णपात्र हित्वा अभिययुः कृष्णाभिमुखं ययुः । तत्र हेतुमाह— समुत्सुका इति । तत्समये वेणुनादश्रवणेन तत्प्राप्तौ सम्यगुत्साहयुक्ता इत्यर्थः । सर्वासा गमनेऽयमेव हेतुर्बोध्यः । दोहनसमये च गोवत्सौ बद्धौ भवतस्तथैव तत्त्यागे धर्मोपेक्षा दुग्धत्यागेऽर्थोपेक्षा च बोध्या ॥ काश्चित्तु स्थालीस्थ पयोऽधिश्रित्य चुल्ल्यामारोप्य त्यक्त्वा एतत्क्वाथमप्रतीक्षमाणा अभिययुः । अनेनाप्यर्थोपेक्षा ॥

दुहन्त्योऽभिययु॰ काश्चिद्दोह हित्वा समुत्सुका॰ ॥ पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययु॰ ॥ ५ ॥
परिवेषयन्त्यस्तद्धित्वा पाययन्त्य॰ शिशून् पय॰ ॥ शुश्रूषन्त्य॰ पतीन् काश्चिदश्नन्त्योऽपास्य भोजनम् ॥ ६ ॥

अवरास्तु सयावं गुडघृतमिश्रित गोधूमकण पक्व स्थूलीति प्रसिद्धम् । यद्वा पयसि पच्यमानाः गोधूमकणा एव सयावमनुद्वास्य चुल्ल्या अनवतार्य अभिययुः । इयमप्यर्थोपेक्षा ॥ ५ ॥ काश्चित्तु परिवेषयन्त्यः पत्यपत्यादीन् भोजनार्थं निवेश्य अन्नादिक पात्रेषु ददत्यः तत्परिवेषण हित्वा,

---

एवाहूता तथापि आह्वान सदृशमिति निरोधोऽपि कर्तव्य इति सर्वा एव समागता । किच यद्भगवता गीत तदनगमेव वर्धयति, अग तु नाशयत्येव । अतो नूतन उत्पन्न काम ता आनीतवान् किं च व्रजस्य स्त्रिय पूर्वमपि भगवदीया, अत कृष्णेनैव गृहीत मनो यासाम् । अत शीघ्रमेव यत्र कात तत्र गता । अनेन आकारिता एव प्रथमागता इत्युक्तम् । तासा मुख्य कात इति, अत एव अन्योन्यमलक्षित उद्यमो यासाम् । ता हि प्रत्येकमेव भगवत पतित्वेन स्वीकृतवत्य । स पूर्वमुपात्तो य कान्तस्तासा शरीरविचारेऽपि दृष्टिर्न जातेति वक्तु जवेन लोले कुडले यासामिति कर्णपीडाननुसधान प्रदर्शितम् । ता स्त्रियो गौडदेशस्था तत एव । कुमारिका समागता इति पूर्वं मथुरादेशस्थितानामपि अनागरीणा कुडले एव ताटकयोरेव वा कुडलत्वम् ॥ ४ ॥

१ प्रसगादन्यासामप्यागमनमाह— दुहत्य इति । तासा वा क्रियापराणा तत्र काश्चन षोडशसहस्रव्यतिरिक्ता नवविधा समागता दशविधा वा । गुणाना त्रैविध्यात् नवविधत्वम्, निर्गुणाश्चैकविधा । जातिकुललोकधर्मपरा तिस्रस्तिस्र उदीरिता । तत्र गोपजातीया दुग्धपरा तत्र दुग्धस्योत्पत्तिस्थितिप्रलयान् कुर्वंति तास्तिस्र प्रथममुदीरिता । एवविधा अपि गणश इति वक्तु सर्वत्र बहुवचनम् । काश्चित् दुहत्य एव दोह दोहनलक्षण कर्म मध्ये त्यक्त्वा भगवदाभिमुख्येन ययु । गौर्वत्सश्च बद्धौ दोहनपात्र च अर्धदुग्ध य समय सर्वथा त्यक्तुमशक्य तस्मिन् समये समागता । तथा समागमने हेतु —समुत्सुका इति । सम्यगुत्सुका को वेद क्षणान्तरे भगवान् क गमिष्यतीति ॥ अन्या पुन पय अधिश्रित्य तथैव ययु । भोजनार्थं पयसि पच्यमाना गोधूमकणा सयावशब्देनोच्यन्ते । तेषा दाहे सर्वनाश इति पक्वदशैव सयावशब्देनोच्यते । अतस्तदप्यनुद्वास्य काश्चन अभिययु । अपरा इति सर्वत्र गुणैर्भिन्नस्वभावत्वम् ॥ ५ ॥

२ एव तिस्रो राजस्य । सात्त्विकीराह— परिवेषयत्य इति । भर्तुरपत्यस्यापि सेवा स्त्रीधर्म । तत्र भर्तुर्भोजने शयने च सेवा स्वधर्म, अतिबालकाना पुत्राणा स्तनदान च । परिवेषण च सृष्टिरिव रेतस उत्पादकत्वात् । स्तनदान पालनम्, शिष्टमन्यत् सर्वत्र तत्तद्धित्वेति ज्ञेयम् । अन्या इत्यपि तामसीराह— अश्नत्योपास्य भोजनमित्यादि ॥ ६ ॥

तथा काश्चित् पय· शिशून् पाययन्त्यस्तद्धित्वा, तथा काश्चित् पतीन् शुश्रूषन्त्यः सेवमानास्ता शुश्रूषा हित्वा अभिययु.। एतैस्तु धर्मोपेक्षा दर्शिता ॥ काश्चिच्चाश्नन्त्यो भोजनमपास्य त्यक्त्वाऽभिययुः। अनेन कामोपेक्षा सूचिता ॥ ६ ॥ अन्यास्तु लिम्पन्त्य शरीरे चन्दनादिलेपन कुर्वत्यो लेपन हित्वा कृष्णान्तिकं ययुः । तथाऽन्याः प्रमृजन्त्यः अङ्गोद्वर्तनादिक कुर्वत्यः तद्धित्वा ययुः । काश्चित् लोचने अञ्जन्त्यः अञ्जन हित्वा ययुः। एतेनापि कामोपेक्षा ॥ 'श्रीकृष्णासक्तमनसा तत्तुष्ट्यर्थमन्यथाकृतमपि कर्म फलत्येव' इति द्योतयन्नाह— व्यत्यस्तेति । व्यत्यस्तानि स्थानत· स्वरूपतश्च ऊर्ध्वाधोधारणेन विपर्यय प्राप्तानि

**लिम्पन्त्यं· प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने ॥ व्यत्यस्तवस्त्राभरणा· काश्चित् कृष्णान्तिक ययु· ॥ ७ ॥**
**ता वार्यमाणा· पतिभि· पितृभिर्भ्रातृबन्धुभिः ॥ गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिताः ॥ ८ ॥**

वस्त्राणि आभरणानिच यासा ताः काश्चित् कृष्णस्यान्तिक ययुः ॥ ७ ॥ 'पत्यादिभिरतासा प्रतिबन्ध· कुतो न कृतः ?' इत्यपेक्षायामाह— ता इति "रक्षेत् कन्या पिता विन्ना पतिः पुत्रस्तु वार्द्धके । अभावे ज्ञातयस्तेषा न स्वातन्त्र्य क्वचित् स्त्रियः" इति शास्त्रानुसारेण यथायथ ता गच्छन्त्यः स्त्रिय पत्यादिभिर्वार्यमाणा अपि न न्यवर्तन्त, किन्तु कृष्णान्तिक ययुरेवेत्यन्वयः। ननु 'तासा लोकभय परलोकनाशभय वा कुतो न जातम्?' इत्याशङ्क्याह—

---

१ लिम्पन्त्य शरीरानुलेपन कुर्वत्य । प्रमृजन्त्य उद्वर्तनादिक कुर्वत्य । गृह वा लिम्पन्त्य, प्रमृजन्त्य आभरणानि भाण्डानि वा प्रमृजन्त्य ॥ अत्रापि पूर्ववदेव क्रम । शरीरसेवात गोसेवा मुख्या, तत पतिसेवेति । अञ्जत्य काश्च लोचने इति गुणातीता । अत काश्चनेति दुर्लभाधिकार सूचित । ज्ञानमार्गशोधिका इति निर्गुणत्वम् । तासामागमने दैहिकविचारोऽपि न जात, किं पुनस्तद्धर्माणामिति वक्तु वस्त्राभरणयोर्व्यत्यासमाह— व्यत्यस्तेति । व्यत्यस्तानि विपरीतानि वस्त्राण्याभरणानि च यासाम् । एवमुद्यम सर्वासामेव साधारणो निरूपित । व्यत्यासो मार्गगताविति केचित् । तन्मध्येपि काश्चित् कृष्णान्तिक ययु, काश्चित् न । या पुन शब्दपरा जाता ता उद्युक्ता अपि नागता । या पुन शब्दापेक्षा त्यक्तवत्यस्ता सर्वतो निरपेक्षा विपरीतावश्यकदेहधर्मा भगवदन्तिकमागता ॥ ७ ॥

२ सर्वासामनागमने हेतुमाह— ता वार्यमाणा इति । "रक्षेत्कन्या पिता विन्ना पति पुत्रस्तु वार्धके । अभावे ज्ञातयस्तेषा न स्वातन्त्र्य क्वचित् स्त्रिय" इति चत्वारो रक्षका । अतो यथायथ पतिभिर्वार्यमाणा जाता । काश्चन पितृभिस्तथैव पुत्रै बन्धुभिश्च । ते हि निरुद्धा अपि फलरसानभिज्ञा न साधनप्रवणा स्वद्वारैव क्षीणा भजन मन्यन्ते । नतु स्वातन्त्र्येण । तथापि गोविन्देनापि हृत आत्मा अत करण यासाम् । निवारण हि श्रौत्रम्, प्रवर्तकश्च भगवान्, अत करणारूढाश्च पुरुषा । नहि नौका प्रवाहवेगाद्गच्छती तिष्ठ तिष्ठेत्युक्ता तिष्ठति । अथ स्वधर्मो वा तासा नास्तीत्याह—मोहिता इति । यदि ता कृष्णान्तिक न गच्छेयुस्तदा मूर्छिता इव प्राणास्त्यजेयु । सर्वात्मभावज्ञापनायैवाधुना व्रजस्थानामेतदागमनज्ञान कारितवानिति ज्ञेयम् । अन्यथाग्रे "मन्यमाना स्वपार्श्वस्थान्" इति वाक्याद्यथा वनस्थित्यज्ञान सपादितवान् एव पूर्वमेवागमनाज्ञानमेव कथ न सपादयेत्? । "प्रक्षालनाद्धि पकस्य दूरादस्पर्शन वरम्" इति न्यायेन तज्ज्ञान सपाद्य तत्सभावितदोषाभावसपादनात्तदसपादनस्यैव वरीयस्त्वादिति ॥ ८ ॥

मोहिता इति । तत्र हेतुमाह— गोविन्देति । गो इन्द्रियाणि नियम्यतया विन्दत इति गोविन्दः सर्वेन्द्रियनियन्ता श्रीकृष्णस्तेनापहृत. आत्मा अन्तःकरणं यासां ताः । अन्त.करणारूढा जीवाः, अन्त करणप्रवर्तकश्च भगवान्, अतः कथं तासा वाङ्मात्रेण निवारण स्यात्? नहि प्रवाहवेगेन गच्छन्ती नौका तिष्ठ तिष्ठेत्युक्ता तिष्ठतीति भावः ॥ ८ ॥ 'कथचिन्निरुद्धाना तु सद्य एव भगवत्सायुज्य जातम्' इत्याह— अन्तरिति त्रिभिः । काश्चिद्गोप्यो गृहान्तर्गता. गृहमध्य एव स्थिता., अतः पत्यादिभिर्द्वारपिधानादिना न लब्धो विशेषो भगवदभिसरणयोग्यो निर्गमो याभिस्ता', दुखेन मीलिते लोचने याभिस्ताः कृष्ण दध्यु । तत्र हेतुमाह— पूर्वत एव तद्भावनायुक्ता इति ॥ ९ ॥ ततश्च जारबुद्ध्याऽपि तमेव सङ्गता तस्मिन्नेव सायुज्य प्राप्ता इत्यन्वय' । तत्सायुज्यस्य मुक्तिरू-

अन्तर्गृहगता· काश्चिद्गोप्योऽलब्धविनिर्गमा· ॥ कृष्ण तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥ ९ ॥
दु[२]·सहप्रेष्ठविरह–तीव्रतापधुताशुभा· ॥ ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गला· ॥ १० ॥

पत्वादुर्लभत्व सूचयन्नाह— परमात्मानमिति । अपिशब्दाद्यद्यपि जारबुद्धिः ससारहेतुरेव, तथापि भगवद्विषयकत्वान्मोक्षहेतुर्जातेति सूचितम् । ननु 'प्राकृतदेहसत्त्वे कथ मोक्षः?' तत्राह— जहुगुर्णमय देहमिति । ननु 'प्रारब्धकर्मबन्धसत्त्वात कथ देहत्यागः?' इत्याशङ्क्याह— सद्य इति । सद्य एव प्रकर्षेण सहवासत क्षीण बन्धन यासा ता. । ननु "नाभुक्त क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्य कृत कर्म शुभाशुभम्" इति शास्त्रसिद्धान्तात् 'अनेकजन्मभोगेन क्षययोग्याना कर्मणा कथं सद्य एव क्षय.?' इत्याशङ्क्याह— दु·सहेति । दुःखेनापि सोढुमशक्यो दु.सहो यः प्रेष्ठस्य कृष्णस्य विरहरूपोऽग्नि तस्य यस्तीव्रस्तापः अनेकजन्मस्वनेकविधनरकादिभोग्य दु खं तेन धुतानि विनष्टानि अशुभानि पापानि यासा ताः, तथा ध्यानेन प्राप्तो य.

१ एव दशाविधाना भगवत्समीपगतिमुक्त्वा यासा काल प्रतिबन्धक पूर्वमेव भक्तियुक्त ता भजनानदमननुभूयैव प्रतिबद्धा एव भगवत्सायुज्य प्राप्तवत्य इत्याह—अन्तर्गृहगता इति त्रिभि । दैवगत्या काश्चिद्गृहमध्ये स्थिता गोपभार्या चातुर्यानभिज्ञा अप्रौढा पतिसहिता पातिभिरेव सरक्षिता अलब्धविनिर्गमा जाता । तत प्रतिबन्धनिवृत्त्यर्थं कृष्णमेव ध्यातवत्य । पर तद्भावनायुक्ता भगवान् जार स्वयमभिसारिका इति । अन्यथा प्रतिबन्धो न स्यात्तादृश्योऽपि मीलितलोचना सत्यो भगवत दध्यु ध्यातवत्य । ततो मुक्ता जाता ॥ ९ ॥

२ ननु "तत्र ज्ञानाभावात् विहितभक्त्यभावात् भगवतोऽपि सान्निध्याभावात् कथ मुक्ता" इति आशक्य 'कर्मक्षयात् मुक्ता' इति वक्तु कर्मक्षयप्रकारमाह— दु सहेति । दु सहो य प्रेष्ठविरह स एव महानग्नि तस्य य तीव्रस्ताप तेन धुतानि निर्धूतानि ज्वालितानि भस्मसात्कृतानि अशुभानि यासाम् । फलभोगे कर्म क्षीयत इत्यविवादम् । कोटिब्रह्मकल्पेषु कुम्भीपाकादिनरकेषु यावद्दु ख भवेत्तावद्दु ख भगवद्विरहे क्षणमात्रेण जातम् । तत सर्वपापफलभोग समाप्त । पुण्यक्षयप्रकारमाह— ध्यानप्राप्तेति । सर्वपापक्षये भगवान्ध्याने प्राप्त अच्युत परमात्मा, न तु समागतोपि जारत्वेन, अन्यथा ततोपि कर्मशेष स्यात् । तस्य योऽयमाश्लेष तेन या निर्वृति तया क्षीण मगल पुण्य यासाम् । कोटिब्रह्मकल्पेषु स्वर्गादिलोकेषु यावत्सुखमनुभूयते तावद्भगवदाश्लेषे क्षणमात्रेणैवानुभूतम् । अत पुण्यक्षयोऽपि जातस्ततो मुक्ता जाता इत्याह ॥ १० ॥

अच्युतस्याश्लेषस्तेन या निर्वृति आनदस्तया क्षीणानि मङ्गलानि अनेकजन्मसु साम्राज्यादिसुखजनकानि पुण्यानि यासा ता । एव तत्कालती-व्रसुखदु खभोगेन निःशेषकर्मक्षयात् युक्त एव तदधीनदेहत्यागेन मोक्ष इति भाव ॥ १० ॥ ११ ॥ अत्र राजा श्रुतिविरोधमाशङ्कते—कृष्णमिति । ' मननशीलत्वादेतन्निर्णये तव सामर्थ्यमस्ति ' इति सूचयन् सम्बोधयति—मुने इति । " तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय " इति मर्यादा-मार्गे श्रुतौ ज्ञाममेव मोक्षसाधनत्वेनोक्तम्, तथा " भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् । स एव मुक्तिदाता च भक्तिस्तत्रैव कारणम् " इति पुष्टिमार्गे भक्तिरपि तत्साधनत्वेनोक्ता, सापि " ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः । द्वयोरप्येक एवार्थो भगवच्छेब्दलक्षणः " इत्यत्र निर्गुणेति निर्णीतम् ।

**[२]तमेव परमात्मानं जारबुद्ध्याऽपि सङ्गता ॥ जहुर्गुणमय देहं सद्य प्रक्षीणबन्धना ॥ ११ ॥**

**॥ राजोवाच ॥**

**[३]कृष्णं विदु· परं कान्त न तु ब्रह्मतया मुने ॥ गुणप्रवाहोपरमस्तासां गुणधियां कथम् ॥ १२ ॥**

तत्रापि सा ज्ञानद्वारा मुक्तिसाधनम्, "भक्त्या मामभिजानाति" इत्यादौ तथा निर्णयात् ॥ एतास्तु कृष्ण पर केवल कान्त जारबुद्ध्या कमनीयमेव विदुः, निर्गुणब्रह्मतया तु न विदु. । अतस्तासा भगवति स्वस्मिश्च सौन्दर्यादिगुणबुद्धिरेव ॥ गुणबुद्धिश्च गुणप्रवाहस्य जन्ममरणादिलक्षणससारस्य मूलमेव, अन्यथा गुणबुद्धिनिवारकाणि सर्वाणि शास्त्राणि व्यर्थान्येव स्यु. । अतस्तासां गुणधियां गुणप्रवाहस्योपरमो निवृत्तिः कथ घटते ? ॥ १२ ॥

---

१ ' भगवच्छक्तिलक्षण ' इति पाठ ।

२ तमेव परमात्मानामिति सुखभोगार्थमेव भगवान् पूर्वमाश्लिष्ट । भोगे जातेपि वियोजकपापाभावात् न वियुक्ता । अत सगता एव स्थिता । शरीर तु प्रारब्धकर्मनिर्वाणमपतत् । यद्याश्लिष्टो भगवान्न भवेत्तदा तत्र प्रविष्टास्तद्गत धर्माधर्मफल बुभुजु । भगवति प्रविष्टत्वान्मुक्ता एव जाता ॥ तदाह—तमेव परमात्मानमिति । पूर्वं सबधसमये यद्यपि जारबुद्ध्यापि सगता एव, तत कर्मबधस्य प्रक्षीणत्वात् गुणमयदेह जहु । तदा अज्ञानमन्यथाज्ञान वा त्रिक्षणावस्थायीति न तयो प्रतिबन्धकत्वम्, वियोजकाभावात् शरीरान्तरोत्पादकाभावाच्च । अविद्या पर तिष्ठति सा भगवच्छक्ति भगवत्सगत न व्यामोहयतीति सापि निवृत्ता । तत मुक्ता जाता इत्यर्थ ॥ ११ ॥

३ अत्र राजा श्रुतिविरोधमाशकते—कृष्णमिति । " तमेव विदित्वाऽतिमृत्युमेति नान्य पथा विद्यतेऽयनाय " इति श्रुतौ ज्ञानमेव साधनत्वेनोक्तम् , तत्रैव पुन " भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् । स एव मुक्तिदाता च भक्तिस्तत्रैव कारणम् " ॥ उभयोश्च निर्णय —" ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षण । द्वयोरप्येक एवार्थो भगवच्छब्दलक्षण " इति । ' भक्त्या मामभिजानाति ' इत्यपि भगवतोक्तम् ॥ ततो मर्यादाया ज्ञानेनैव मुक्ति पुष्टौ भक्त्या ज्ञानेन वा एतासा तु न द्वय भक्तिरपि सगुणज्ञानमपि सगुणमुभय च तामसम् । अत कथ मुक्तिरिति ॥ तदाह—ता कृष्ण कान्त पर विदु । कान्त पतिर्जारो वा, नतु ब्रह्मतया विदु । मुने इति सबोधनम् अत्र निर्णयपरिज्ञानार्थम् । विरोधस्तु स्पष्ट । तासा भगवति स्वस्मिंश्च गुणबुद्धिरेव गुणप्रवाहस्य मूलम्, अन्यथा गुणबुद्धिवारकाणि सर्वाण्येव शास्त्राणि व्यर्थानि भवेयु । वैदिकपक्षस्त्वसभावित एव । अतो गुणधिया गुणबुद्धियुक्ताना गुणप्रवाहोपरम कथम् ॥ १२ ॥

एवं पृष्टः शुको "निर्गुणज्ञानभक्त्योर्भगवत्प्रादुर्भाव एवोपयोगः। तत्र ज्ञानेन भक्त्या स्वेच्छया वा यदि भगवान् प्रादुर्बभूव तदा तत्सम्बन्धमात्रेणैव मोक्षज्ञानादेरावश्यकत्वम्। नहि वस्तुशक्तिर्ज्ञानादिकमपेक्षते, अन्यथा बुद्ध्याग्निस्पर्शेऽपि दाहदर्शनात्" इत्याशयेनोत्तरमाह—उक्तमिति। यदत्रोत्तर वक्तव्य तदेतत्ते तुभ्यं पुरस्तात् सप्तमस्कन्ध एवोक्तम् "गोप्यः कामाद्भयात् कसः" इत्यादिना। उक्तमेव कैमुत्यन्यायेन द्रढयति—चैद्य इति। यदि हृषीकेशमिन्द्रियादिनियन्तार कृष्ण द्विषन्नपि चैद्यः शिशुपालो यथा यथावत् सिद्धि भगवत्सायुज्य गतः प्राप्तस्तदा अधोक्षजस्य तत्कृपांविना अतीन्द्रियस्य प्रियाः प्रीतिविषया गोप्यः सायुज्य गतास्तत्र किमुत किमाश्चर्यमित्यर्थः ॥ १३ ॥ भगवदवतारप्रयोजनमाह—नृणामिति। 'तवाप्येतत् सम्मतम्' इति सूचयन् सम्बोधयति—नृपेति। नृणा निःश्रेयसार्थाय मोक्षार्थमेव भगवतो व्यक्तिः प्राकट्यम्। 'साप्यभिव्यक्तिः स्वेच्छयैव, न कर्माधीना' इत्याशयेनाह—अव्ययस्येति। विकारशून्यस्येत्यर्थः। तत्र हेतुमाह—निर्गुणस्येति, गुणपारतन्त्र्यरहितस्येत्यर्थः। अतएव अप्रमेयस्य, बुद्ध्यगोचरस्येत्यर्थ। 'भूभारहरणादि

॥ श्रीशुक उवाच ॥

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ॥ द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥ १३ ॥

नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ॥ अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥ १४ ॥

१ तत्रोत्तरमाह—उक्तमिति चतुर्भि। एतत् सप्तमस्कध एवोक्त शिशुपालमुक्तौ। यथा शास्त्रद्वय भक्तिज्ञानप्रतिपादक साधन तथा भगवत्स्वरूपमपि। भगवान् हि मुक्तिदानार्थमेवावतीर्ण सच्चिदानदरूपेण प्रकट। अतो य कश्चन येन केनाप्युपायेन भगवति सबधं प्राप्नोति स एव मुच्यते। ज्ञानभक्त्योस्त्वाविर्भावार्थमुपयोग। आविर्भावश्चेदन्यथा सिद्ध तदा न ज्ञानभक्त्योरुपयोग। अत्र तु भगवान् स्वत एवाविर्भूत मुक्तिदानार्थम्, सर्वसाधारण्येन ईश्वरेच्छाया अनियमत्वात्। अत आविर्भावस्वेच्छया भक्त्या ज्ञानेन वा भगवदवतारातिरिक्तकाले द्वयमेव हेतुः। अवतारदशाया तु न तयो प्रयोजकत्वम्। वर्षाकाले जल सर्वत्रसुलभमिति न कूपनदीनामनुपयोग शकनीय। तदाह—पुरस्तात्सप्तमस्कधे यथा चैद्य शिशुपाल सिद्धि भगवत्सायुज्य गत द्विषन्नपि द्वेष कुर्वन्नपि यद्यपि द्वेषकृतो दोष प्रतिबन्धको भवति तथापि स्मरणेन तदघ हत्वा तत्र सायुज्य प्राप्त। किंच नापि तस्य दोषोस्ति कश्चन। द्वेषादयोपि भगवतैवोत्पादिता। तदाह—हृषीकेशमिति। इद्रियप्रेरकोऽय यथासुख भावानुत्पादयति। यत्र द्वेषस्यापि मोक्षसाधकत्व तत्र अधोक्षजप्रिया किमु वक्तव्या मुक्तिं गच्छतीति ॥ १३ ॥

२ अत्र मुख्यामुपपत्तिमाह—नृणा नि श्रेयसार्थायेति। प्राणिमात्रस्य मोक्षदानार्थमेव भगवान् अभिव्यक्त। अत इयमभिव्यक्ति नि श्रेयसार्थैव। अन्यथा न भवेत्। असाधारणप्रयोजनाभावात् ॥ भूभारहरणादिक च अन्यथापि भवति। अतो नि श्रेयसार्थमेव भगवतोऽभिव्यक्ति प्राकट्यम्। नृपेति सबोधन कदाचिद्राजा कथचिद्गच्छति तद्वदिति ज्ञापयितुम्। प्रकारान्तरेण तादृशस्य नाभिव्यक्ति सभवतीति वक्तु भगवत विशिनष्टि—आदौ भगवान् सर्वैश्वर्यसपन्न अपराधीन कालकर्मस्वभावाना नियामक सर्वनिरपेक्ष किमर्थमागच्छेत्, किंच स्वार्थे गमनाभावेपि परार्थ वा स्यात्। तदपि नास्तीत्याह—अव्ययस्येत्यादिचतुर्भि पदै। अन्येषा कृतिसाध्य ज्ञानसाध्य वा यद्भवति तदुपयुज्यते। भगवास्तु अव्ययत्वात् अविकृतत्वात् न कृतिसाध्य, अप्रमेयत्वात् ज्ञानसाध्योऽपि न। देहादिभजनद्वारा भजनीयो भविष्यतीत्यपि न। यतो निर्गुण निर्गता गुणा यस्मात्। गुणेषु विद्यमानेष्वेवान्यस्य प्रतिपत्ति तत्र भवति ॥ यथा क्षुधि सत्यामन्नदान, कामे सति स्त्र्युपयोग, इन्द्रियेषु सत्सु तद्विषयाणाम्। अतो भगवत सेवकपूरणीयाश कोपि नास्तीति भजनीयोपि न भवति। किं च लीलार्थं यद्यपेक्षेतापि तथापि सर्वे तस्यैव, यत सर्वगुणाना स एवात्मा। अत साधनप्रकारेण नान्यस्याप्युपयोग। अत स्वपरप्रोजनाभावात् यदि साधननिरपेक्षा मुक्तिं न प्रयच्छेत् तदाऽभिव्यक्ति प्रयोजनरहितैव स्यात् ॥ १४ ॥

कार्यं तु सङ्केतमात्रेणापि कर्तुं शक्त ' इत्याशयेनाह— गुणात्मन इति । सत्त्वादिगुणनियामकस्येत्यर्थः ॥ १४ ॥ अत गोप्य इव कामम्, शिशुपालादिवत् क्रोध वा, कसादिवद्भय वा, यशोदादिवत्स्नेह वा ऐक्य पाण्डवादिवत् सम्बन्ध वा ज्ञानिवदभेद वा, सौहृद नारदादिवद्भक्ति वा, नित्य निर-

काम क्रोध भय स्नेहमैक्यं सौहृदमेव च ॥ नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥ १५ ॥
न चैव विस्मय· कार्यो भवता भगवत्यजे ॥ योगेश्वरेश्वरे कृष्णे यत एतद्विमुच्यते ॥ १६ ॥ ॥

न्तर ये हरौ विदधत. कुर्वाणाः भवन्ति ते हि तन्मयता यान्ति तत्सायुज्य प्राप्नुवन्त्येव। प्रत्ययान्तरस्य प्रतिबन्धकत्वमाशङ्क्य नित्यमित्युक्तम् ॥ १५ ॥ अन्ये विस्मय कुर्वन्तु, भवता तु गर्भे एव प्रभावस्य दृष्टत्वाद्भगवति कृष्णे एव मोक्षदाने असम्भावनारूपो विस्मयो नैव कार्य इत्यन्वयः । तत्र

---

१ एव सति येन केनाप्युपायेन य एव सबध्यते तस्यैव मुक्तिर्भवतीत्याह—काममिति । कामादय षट् साधनानि भगवत्सबधे । तत्र काम स्त्रीणामेव । क्रोध शत्रूणामेव । भय वध्यानामेव । स्नेह सबधिनामेव । ऐक्य ज्ञानिनामेव । सौहृद भक्तानामेव । सख्य तेष्वेव सिद्ध्यतीति पूर्वसिद्धज्ञानभक्त्यो नात्रोपयोग । तेषा मर्यादया स्वतत्राविर्भावस्य नियतत्वात् ॥ एकस्य तभयत्वे सयोगपृथक्त्वन्यायेन निर्णय । चेत्यनादरे । अन्यो वा कश्चनोपायो भवेत् पर सर्वदा कर्तव्य । अन्यथा अते या मति सा गतिरिति अन्यशेषतामापद्येत । कर्मवशाच्च नाते भगवत स्मरणमन्यस्येव प्रपचविरोधित्वात् भगवत । अतो नित्य ये विदधते ते तन्मयतामेव प्राप्नुवति । ननु " कामादिषु क्रियमाणेषु दु खातराभिभवे कथ नित्य करण समवति ? " तत्राह—हराविति । स हि सर्वदु खहर्ता। नित्य तद्भावनाया जगदेव तदात्मक स्फुरति दृष्टि कामेनानुरक्तेति किं पुन स्वात्मा । अत तदात्मका एव भवति सर्वत्र भगवदावेशात् ॥ " जीवेऽन्त करणे चैव प्राणेष्विन्द्रियदेहयो । विषयेषु गृहेऽर्थे च पुत्रादिषु हरिर्यत " ॥ " तादृशीं भावना कुर्यात् कामक्रोधादिभिर्यथा । पूर्वप्रपचविलयो यथा ज्ञाने तथा यत " ॥ १५ ॥

२ किंच आदावेव गोप्यो मुक्ता , किमाश्चर्यं बहव एवाग्रे मुक्ता भविष्यतीति तदाह—न चैवमिति । एवमसभावनारूपो विस्मयो न कार्य , असभावितबुद्धीनामन्यथास्फुरणनियमात् । यतो भगवान् यत्किंचिन्मोक्षे ज्ञानादिकमुपयुज्यते एतत्सर्वं भगवत्येवास्ति । यदि ज्ञानव्यतिरेकेण मोक्षो न भवेदिति ज्ञास्यति तदा सिद्धत्वात् ज्ञानम्य तदपि दास्यति । किच अन्य सदेह कुर्यादपि भगवतो माहात्म्य न दृष्टमिति भवता तु न कार्य गर्भ एव माहात्म्यदर्शनात् । किंच निर्दुष्टे सर्व सभवति । तत्र दोषाणा मूल जन्म तदभावे दोषाभाव इति तेन अजत्वात् निर्दुष्ट अन्ये सर्वे हि जायते न तैस्तेषा मुक्ति संभवति तुल्यत्वात् । किंच यो हि साधनपर स मुच्यते तत्र साधन मन सर्वतो निवृत्त तथा योगेन भवति तस्य योगस्य च नियामको भगवानेव । यद्यन्यस्यापि मोक्षो भवेत् भगवदिच्छयैव भवेत् । योगादिसाधनाना तन्नियम्यत्वात् । किच सदानन्दो भगवान् फलात्मा य कश्चिन्मुच्यते स एतमेव प्राप्स्यति अत साधनैरप्ययमेव प्राप्य । सोऽत्र स्वयमेव सबध्यत इति न किंचिदनुपपन्नम् । किंच एतत्परिदृश्यमान सर्वमेव जगद्यतो विमुक्तिं यास्यति । भावनया गोकुले स्थित आह ज्ञानदृष्ट्या वा साक्षात्परपरया वा सर्वानेव मोचयिष्यतीति तदग्रे वक्ष्यति स्वमूर्त्येति श्लोकद्वयेन । यद्वा कृष्णमिति । एता कृष्ण कान्त पर विदु , न तु ब्रह्मतया । अतो गुणप्रवाहोपरम कथ सगच्छत इति । अत्राय भाव —ब्रह्मत्वेन विज्ञान हि शास्त्रीयम् । तच्च सात्त्विक भवितु मर्हति, " सत्वात् सजायते ज्ञानम् " इति वाक्यात् ॥ एतास्तु गुणातीतस्यानदमात्रकरप दमुखोदरादे प्रकटस्यानतगुणपूर्णस्य सौदर्यादिगुणेषु परिनिष्ठितधिय । अतो निर्गुणत्वात् गुणप्रवाहोपरम · कथ सगच्छते ? उपरमस्याभावरूपत्वेन प्रतियोगिसापेक्षत्वादत्र च प्रतियोगिन एवाभावादिति । मुने इति सबोधन शुद्धसत्त्व विर्भावे ज्ञानोदयस्यानुभवसिद्धत्वेन सवादार्थम् । अत्रोत्तरमाह—उक्तमिति । पुरस्तात् सप्तमस्कधे ' गोप्य कामात् ' इत्यादिना । अत्रायमर्थ —यथा भगवति गुणातीत एवापरिनिष्ठितबुद्धित्वेऽपि द्वेषस्य तत्र प्रयोजकत्वात् चैद्यादीना तामसत्व तथैतासामपि निर्गुण एव परिनिष्ठितबुद्धित्वेपि जारत्वबुद्ध तत्र प्रयोजकत्वात् सगुणत्वमेवेति लक्ष्यते । अथ च रा सर्वभावप्रपत्त्यैकलभ्य । नहि जारत्वबुद्धौ सर्वभावप्रपत्ति , कामपूरकत्वेनैव तत्सभवनियमात् । अत्र च सगुणत्वस्य प्रतिबधकत्वात् । यथा चैद्यादीना स्वाधिकारानुसारेण तादृशशरीरनाशे तत्पदप्राप्ति स्वाधिकारानुसारेण तथैतासामपि । स्वाधिकारानुसारेण तथात्वे सगुणत्वोपरमेण

हेत्वन्तरमाह– यतः कृष्णात् एतत्कृपापात्रं स्थावरजङ्गमप्राणिमात्र विमुच्यते । मोक्षदाने सामर्थ्यमाह– योगेश्वरेश्वर इति । तत्र हेतुमाह– अज इति । कर्माधीनजन्मरहित इत्यर्थः । तत्र हेतुः– भगवतीति ॥ १६ ॥

सर्वभावप्रपत्त्यैव ततो निजपतिभजनमिति सर्वमवदातम् । अन्यथा "ये यथा मा प्रपद्यते" इति मर्यादा भज्येत । एतदेव मनसि कृत्वाह–उक्त पुरस्तादेतत्ते इति । ननु "तथापि तादृशप्रपत्तेरेव मूलत्वात् कथ सर्वभावप्रपत्तिसाध्य फल भविष्यति ?" इत्यत आह–द्विषन्नपीति । अयमर्थ –मोक्षसुखानभीप्सु तद्विरुद्धद्वेषकर्ता च चैद्य तस्मै यथा ज्ञानिनामपि दुर्लभा मुक्ति दत्तवान् एव तादृक्प्रपत्तिमूलानामप्येतासा तादृश फल दत्तवानिति । एतेन यथा द्वेषमुक्त्योस्तारतम्य तथाऽन्यशेषभजनैतद्रसयोरपीति सूचितम् । ननु "गोकुलस्य भगवत्क्रीडोपयोगित्वेन सर्वथाङ्गीकृतस्य सर्वस्यैव निर्गुणत्वे कथमेतासा सगुणत्वमुच्यते । किंच अग्रेपि यदि सर्वभावप्रपत्तिलभ्यमेव फल दित्सित भगवतस्तदा पूर्वमेव स एव भाव किमिति नोत्पादित ?" इति चेत् अत्र वदाम । यासा साक्षात् भगवत्सबध तासा सर्वासामेव रासमडलमडनाना शरीरमपि गुणातीतमेवेति ज्ञापयितु भगवानेव कतिपय गोपी सगुणदेहा स्थापयित्वा पूर्वोक्ताना भावोपि निर्गुण इति ज्ञापयितुमासा सगुण भावमुत्पाद्यैतन्निवर्तकोपि स्वयमेव नान्य इत्यपि ज्ञापयितु तन्निवृत्ति विधायाग्रे भाविस्वविरहजदु खस्वसगमजसुखयो कर्माजन्यत्वमपि ज्ञापयितु कर्मक्षयप्रकारेण स्वप्राप्तिं विधाय मत्स्वाम्येव सर्वमिद कृतवानिति निगर्व । अत्र पुष्टिमार्गीयाङ्गीकारात् मर्यादामार्गीयानुपपत्तयोऽनवसरपराहता इति सर्वमनवद्यम् । अत एव श्रीशुकोपि 'जहुर्गुणमय देहम्' इति सगुण देहत्यागमेवोक्तवान् । अग्रे गुणातीततत्प्रपत्त्यभिप्रायेण गोप्यत्वात् स्पष्ट नोक्तवान् । अन्यथा गुणमयपदवैयर्थ्य स्यात् ॥ ननु 'पूर्वोक्तज्ञापनायैवेद कृतवानिति कथ ज्ञेयम् ? उपपत्त्यभावात्' इत्याशक्योपपत्तिमाह– नृणामिति । अयमाशय – लीलाया तत्स्थितभक्तेषु च सुतरा रासस्थासु या साधारणत्ववृद्धि सा सदोषत्वारोपापरपर्याया तासामगुणत्वात्तस्या दोषरूपत्वात् भगवत्स्वरूपे लीलाया च सगुणत्वप्रसञ्जकत्वाच्च ॥ एव सत्येतल्लीलाया मुक्तिबधकत्वमेव स्यात्, नतु तद्धेतुत्वम् । तथा सत्यवतारप्रयोजन विरुध्येतेत्यन्यथानुपपत्त्यैव तथोच्यत इति ज्ञापन प्रयोजनमपीदमेवेति ज्ञेयम् । व्याख्यान तु पूर्ववत् । ननु 'इयदवधिसगुणास्वेतासु कृताया लीलाया पूर्वोक्तदोषप्रसञ्जकत्व दुर्वारम् इत्याशक्य पूर्वलीलाकृतितात्पर्यमाह– काममिति । इद हि साधारण्येनोच्यते । य एव नित्य विदधते ते तन्मयता यान्तीति । न त्वेतदेतद्गोपभार्याविषयकमेव, अत एव क्रोधाद्युक्तिरपि । अन्यथाप्रस्तावे नात्र तन्निरूपणमयुक्त स्यात् । तथा च सगुणेनापि भावेन भजते भगवान् स्वानुरूपमेव फल ददातीति ज्ञापनाय पूर्वलीलेत्यर्थ । अन्यथा मुख्याधिकारिणामेव भगवत्प्राप्तिरिति ज्ञानेऽन्येषामप्रवृत्त्या मुक्त्युच्छेद स्यात् । एव शास्त्रमप्रयोजनक च स्यात् । मुख्याधिकारिणा स्वत एव प्रवृत्ते स्वरूपलीलयोस्तु न कदाचित्सगुणत्व लीलाविषयाणा सगुणानामपि निर्गुणत्वापादकत्वात् । नहि दोषनिवर्तकमौषध रोगिसबन्ध सत्तद्वद्भवति तथा सति तदनिवर्तकत्वापत्ते । लीलाया विषयसाजात्यनियमे सगुणनिर्गुणभक्त्योरेकया वेणुवादनादिलीलया निरोधो नोपपद्येत । क्रोधादिवत् कामोपाधिकभावस्यापि जघन्यत्वज्ञापनायाविक्रोधादिनिरूपण ज्ञेयम् । तन्मयता निर्गुणतामित्यर्थ । ननु साक्षादगसगित्वेऽपि सगुणत्वस्थितिं वस्तुशक्ति कथ सहते वह्निसबध इव तूलस्थितिमित्येको विस्मय । लौकिकरीत्या कामभाववतीष्व लौकिकस्य रमण द्वितीय । क्रोधाविर्भाववता तत्फल अननुभूयैव भगवत्प्राप्तिश्चापर स्नेहवत्समानफलत्व च । यशोदानन्देहिता भावत्त्य , तस्य च वनस्थितस्यैव तद्ध्यानप्राप्तिश्चान्य । एतासा तदैव निर्गुणदेहप्राप्तिर्विनैव तत्साधनमिति चेतर । सर्वोत्तमभाववतामेव करिष्यमाणलीलाया अनुभव । अन्यस्यास्तु तद्रहितानामपीत्यनेकविस्मयाविष्ट राजान ज्ञात्वा तन्निवारक क्रमेण वदन् पूर्वश्लोकोक्तभाववता भगवत्प्राप्तौ हेतूनप्याह– न चैवमिति । आद्यविस्मयाभावार्थमाह– भवतेति । अत्राय भाव – पूर्वमनिवर्त्य ब्रह्मास्त्रतोपि गर्भोपि रक्षितवान् भवन्त प्रयोजनमस्तीति । अधुना तु सद्भावात् बालवाक्यादपि न रक्षतीति भवतैवानुभूयते न त्वेतावतास्तु शक्तौ काचिन्न्यूनता इच्छाशक्त्यधीनत्वात् । सर्वासा शक्तीना तस्या सर्वतोधिकत्वात् ॥ नहि मन्त्रप्रतिबन्धदशायामग्नेरदाहकत्वमिति तच्छक्त्यपगम एवेति वक्तुयुक्तम् प्रकृतेऽपि यासा साक्षादित्यादिनोक्तप्रयोजनार्थं भगवता तथा कृतमिति ज्ञात्वा भवता तु विस्मयो न कार्य । अनुभावाननुभवेनान्य कुर्यादपीति द्वितीयतृतीयादिक परिहरति– भगवतीति । तत्रेश्वरो हि सर्वरसभोक्ता भवति 'सर्वरस' इति श्रुते । कामरसो हि तादृशभाववतीषु विशिष्टो न भूतो भवति कामशास्त्रे तथैव निरूपणात् । तथाचैश्वर्यवत्त्वाय विस्मयो न कार्य । तथा भगवद्वीर्यस्येतरसाधनासाध्यसाधकत्वेनात्युग्रत्वात् क्रोधादिदोषमत्यातिनिवर्त्यमपि स वीर्येण हरिर्निवारयितु समर्थ इति । तादृशो स विस्मयो न कार्य । यशो ह्यसाधारणमसाधारणे कर्मणि सति भवति । यदि स्नेहवत्स्वेव मुक्तिं दद्यान्न द्विट्सु तदान्यसाधारण्येनासाधारण यशो न स्यात् । भयद्वेषादिमत्स्वपि स्नेहादिमत्समानफलदाने

एव प्रासङ्गिक राजप्रश्नोत्तरमुक्त्वा प्रस्तुतमाह– ता इति । ता वेणुनादश्रवणेन निजान्तिकमायाता व्रजयोषितो दृष्ट्वा वाच.पेशैर्वाग्विलासै.

**तां दृष्ट्वाऽन्तिकमायाता भगवान् व्रजयोषितः ॥ अवदद्वदतां श्रेष्ठो वाचःपेशैर्विमोहयन् ॥ १७ ॥**

ह्यसाधारणत्वेनासाधारण यश स्यात् । तथाचैतादृशयशस सहजत्वेन तज्ज्ञापकधर्मा अपि हरौ सहजा एवेति नाय विस्मय कार्य । श्रीर्लक्ष्मी सा चैतादृशस्नेहवती यद्व क्षसि स्थिति प्राप्यापि चरणरज कामयते प्रत्यवतार चावतरति सदा तद्वत्त्वेन हरि स्नेहरसाभिज्ञ इति तद्वत्सु स्वरूपदान युक्तम् । ऐक्य हि ज्ञानमार्गे हरेश्च ज्ञानवत्त्वेन तेषु तथात्व युक्तम् । सौहार्दं हि सख्ये सति भवति, तच्च समानशीलव्यसनेष्वेव । " नाहमात्मानमाशासे मद्भक्तै साधुभिर्विना ॥ श्रिय चात्यतिकीं ब्रह्मन्येषा गतिरह परा ॥ साधवो हृदय मह्य साधूना हृदय त्वहम् । मदन्य ते न जानति नाह तेभ्यो मनागपि " इत्यादिवाक्यैर्यथा भगवतो भक्तातिरिक्ते रागाभावो भक्तेष्वेव च राग इति वैराग्यवत्त्व तथा भक्तानामपि भगवतीति सौहार्दयोग्येषु सौहार्दं ददातीति पूर्वोक्तवैराग्यवत्त्वात् तेषु तथा करण युक्तमिति भाव । ' यशोदानदन ' इत्यादिनोक्तविस्मयाभावार्थमाह– अज इति । यदि भगवतो जीववत् कुत्रापि जन्म स्यात्तदाऽन्यत्र बहि स्थितोत्रातरहृदि कथमागतस्तत्र स नैवेति शका स्यात्तदभावात्स्वेच्छया यथा मायाजवनिका दूरीकृत्य यशोदागृहे प्रकटस्तथा वने तथैवान्तर्हृद्यपीत्यजेनाय विस्मय कार्य । अग्रिमोक्ततदभावार्थमाह– योगेश्वरेति । योगिनो हि योगबलेन भोगार्थमनेकानि शरीराणि युगपत् क्षणमात्रेण सृजति तेषा च योग आगतुको धर्म । भगवाश्च तादृक्धर्मसपादक फलदाता चेति तेषामपीश्वर इति सहजानदशक्तिमानिति तास्वलौकिकदेहसपादनमात्र न विस्मयहेतुर्भवितुमर्हति । अग्रिमतदभावायाह– कृष्ण इति । ' कृषिर्भूवाचक ' इतिवाक्यात्सदानद स्वरूपो भगवान् निर्दोषपूर्णगुण इति यावत् । तेन कृष्णातिरिक्तस्य वस्तुमात्रस्यैव सदोषत्वात्, तत्रापि स्वास्थ्यहेतुत्व जानत सदोषत्वमेवेति निश्चय । इय च लीला स्वरूपानदरूपा तादृश्येवेति सर्वात्मभावरहितेष्वेतदनुभवायोग्यत्वान्नाय विस्मय कार्य इत्यर्थ । किच एतासा तु स्नेह पूर्वोक्त साधनत्वेनासीत् गोकुल त्वदव्यापृत निशि शयानमिति वाक्यात्सर्वसाधनविमुख सदपि प्रतिक्षण स्वरूपे लीयते । अग्रिमाग्रिमलीलारसानुभवार्थ भगवान् पर पुन पुन पृथक्कृत्य तामनुभावयतीत्यार्चितानतशक्तिमिति न किचिदाश्चर्यमित्याशयेनाह– यत एतादिति । शुकस्त्व धुना लीलेतराननुसधानात् भावनया तत्रैव स्थित इत्येतदित्युक्तवान् वर्त्तमानप्रयोग च कृतवान् तामेव लीलामनुभवतीति सर्वमनवद्यम् । ननु " एतद्वैपरीत्यमपि सुवचम् । तथाहि– एता अपि पूर्वोक्तमध्यपातिन्य एव । अत एव पूर्वश्लोके तासामनिवृत्तिमुक्त्वा तादृशी सा लोकेत्यसभावितेति सा कथमुपपाद्यते " इत्याशकानिरासायाह– अतर्गृहेत्यादि । अत्राय भाव – पूर्वं हि वच नेन निवर्तनम् । तथा सति निवृत्तिर्हि विपरीतस्वक्रियया भवति, सा चातिदूरे, यतस्तत्सजातीया काश्चिद्भर्त्रादिकृते क्रियया प्रतिबन्धे तत्प्रतिबन्ध्य देहमपि त्यक्त्वा भगवत्सगता जाता । तथा चैतादृश पूर्वोक्ता सर्वा इति युक्तैर्वा निवृत्ति । किं च तदभावना युक्ता इति यदेतच्छब्दस्य पूर्वपरामर्शित्वेन पूर्वं च पूर्वोक्तानामेव भावस्योक्तत्वादेतद्भावसजातीयभाववत्त्व पूर्वोक्तानामपीति गम्यते । तेनैतन्निष्ठाशेषधर्मवत्त्व तत्रापि सिद्ध्यति । एतासा मुक्तिर्देत्तेति तन्निवृत्ति विना न सेति तथोक्तम् । " तासा न तथेति न तथोक्तम् " इति चेत् अहो शकाढ्यमानिनो मौढ्यदार्ढ्य तव यस्मादालोचनलोचनराहित्येन बहिर्मौर्ख्यासत्सख्यगिरिगर्त्तोद्घातपातविवशाशय परोक्तमपि नानुसधत्से । तथाहि–यच्छकानिरासायैतत्कथाऽवतारिता तद्भावश्च त्वया वर्णितस्तत्र त्वा पृच्छामस्तदर्थमिय कथा कल्पिता तत्सिद्धैवानूदिता ? अत्य एव समतश्चेत्तत्रापि त्वा पृच्छाम एतासा प्रतिबधे को हेतुरिति । स्वप्रियास्वपि सगुणत्व ख्यापयितुमेतासा प्रतिबन्धो हरिणैव कृत इति चेद्ब्रवीषि, हतैव विचारकस्य तव शतधा हृदय नास्फुटत्कुतस्तन्न जानीम । यतो मर्यादाभक्तिमार्गीयसेवाविषयकश्रद्धाया अपि निर्गुणत्व तत्साक्षादगसगिनीषु सगुणत्व ब्रवीषि । किंच " ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिका " इत्यादिना प्रभुणैव, " एता पर तनुभृत " इत्यादिनोद्धवेन, 'नोद्धवोण्वमन्यून' इत्यादिना भगवता स्तुतेनापि चरणरेणुप्रार्थनापूर्वक स्तुता इति क तद्गधशकापि । ननु "कामोपाधिस्नेहवत्त्वेन तथोच्यत" इति चेत्, न । तथा स्नेहे भगवतोपि विषयान्तरतुल्यत्वेन ' संत्यज्य सर्वविषयान् ' इति कथनानुपपत्ते । विषयार्थमेवागमनान्न च भगवतो विषयत्वेपि तदतिरिक्तविषयाणा त्यागोनूद्यत इति वाच्यम्, ' तव पादमूल प्राप्ता ' इत्युक्तिविरोधात् । नहि कामिन्य एव वदति किन्तु भक्ता एव । किंच अतितोके पूतनासु पय पानानन्तर रक्षाकरणे श्रीशुकेन हेतुरुक्त इति प्रणयबद्धाभिर्गोपीभिरिति । नहि तादृशो कामोपाधिक स्नेह सभवति । न वा तादृशीनामजनादित्याग सभवति । प्रत्युत तदादि सर्व प्रसाध्यागमन कुर्यु । तदनतर यद्रमण तत्तु ' रसो वै स ' इति श्रुते स्वरूपस्य रसात्मकत्वाद्रसरीत्या स्वरूपानददानमेव " सात्त्विक सुखमात्मोत्थ विषयोत्थ तु राजसम् । तामस मोहदैन्योत्थ निर्गुण मदपाश्रयम् " इति भगवद्वाक्याद्भगवत्सबधिसुखस्यापि गुणातीतत्वमेव ॥ १६ ॥

१ एव प्रासगिक परिहृत्य प्रस्तुतमाह–ता दृष्ट्वातिकमिति । यास्तु समाहूता समागता, ता न निवार्यते । या पुन सगुणा

विमोहयन् स्वविषयक भाव दृढीकर्तु भगवान् 'स्वागतम्' इत्यादि वक्ष्यमाणमवददित्यन्वयः। ननु 'वाग्विलासमात्रेण कथं मोहनं स्यात्?' तत्राह– वदता चतुर्मुखादिकवीना श्रेष्ठ इति ॥ १७ ॥ 'मयि स्नेहवतामेव भाग्यस्य महत्त्वम्, स्वस्य परस्य च सुखहेतुत्वात्' इति सूचयन् सम्बोधयति– महाभागा इति। वो युष्माकं स्वागतमागमन शोभनम्। 'स्वस्थाने आगताना सत्कारः कर्तव्य' इति सदाचार दर्शयन्नाह– वो युष्माक किं प्रिय

॥ श्रीभगवानुवाच ॥

**स्वागतं वो महाभागा प्रियं किं करवाणि वः ॥ व्रजस्यानामयं कच्चिद्ब्रूताऽऽगमनकारणम् ॥ १८ ॥**
**रजन्येषा घोररूपा घोरसत्त्वनिषेविता ॥ प्रतियात व्रजं नेह स्थेयं स्त्रीभि' सुमध्यमा· ॥ १९ ॥**

करवाणीति। सर्वा· ससम्भ्रममागता विलोक्य स्वयमपि सभयमिवाह– व्रजस्येति। कच्चित् मदिष्टव्रजस्यानामयं मङ्गलमस्ति चेत्तर्ह्यागमनस्य कारण ब्रूत ॥ १८ ॥ 'अत्र स्थित्यर्थमेवागमनम्' इति चेत्तत्राह– रजनीति। 'भवत्यो यदि वृद्धाः स्युस्तदापि न तादृशी चिन्ता' इति सूचयन् सम्बोधयति– सुमध्यमेति,

---

समागता अन्यसबधिन्य ता शब्दश्रवणात् समागता इति। शब्देन निवारणीया अन्यशेषतया भजनमयुक्तामिति करिष्यमाणलीला तु सर्वभावप्रतिपत्तिसाध्या, अतो निवारणार्थं यत्नमाह– ता दुहत्य इत्याद्या। अतिकमायाता दृष्ट्वा स्वार्थमेवागता इति निश्चित्य भगवान् सर्वज्ञ सर्वसमर्थोऽपि ता अपि व्रजयोषित अपावृता स्वकीयाश्च। अत सर्वानुपपत्तिरहिता अपि दृष्ट्वा अवदत् धर्मप्रबोधनार्थं वक्ष्यमाणमुक्तवान्। ननु "ता पूर्वं निवार्यमाणा समागता कथमेतद्वाक्येन निवृत्ता भविष्यति? अतो व्यर्थो वाक्प्रयास" इति चेत्तत्राह–वदता श्रेष्ठ इति। ये केचिद्वदति तेषा मध्ये श्रेष्ठ। अतो हृदयगाम्यस्य वचन भवति, अतो यावद्वचनेन निवृत्ता भवति तावन्न कृतौ योजनीया। किंच अलौकिकमप्यस्य निवर्त्तने सामर्थ्यमस्ति तदाह–वाच पेशैर्विमोहयन्निति। वाच पेशा वाक्सौदर्ययुक्ता शब्दा तैर्विशेषेण मोहयन्। अथवा ता दृढीकर्तुमेव सम्यक् मोहनार्थं निषेधवाक्यान्युक्तवान्, अन्यथा गच्छेयुरेव। अत अर्थत निवारयन्नपि पर्यवसानतो न निवारयति ॥ १७ ॥

१ भगवद्वाक्यान्याह–स्वागतमित्यादिदशभि। दशविधाना निवारकाणि। तमोरज सत्त्वभेदा स्वातपर्यवसानत। निरूप्यते स्त्रियस्तासु वाक्यान्यपि यथायथम् ॥ प्रथमतस्तामससात्त्विक्यो निवार्यंते। ततस्तामसराजस्य। ततस्तामसतामस्य। एवमग्रेऽपि विभज्या। प्रथम समागताना लौकिकन्यायेनाह–स्वागतमिति। कुशलप्रश्नोऽय वो युष्माकमागमन स्वागत किमिति। स्तुतिमाह–महाभागा इति। भवतीना महद्भाग्यम्। अत स्वागमनमेव, तथापि पृच्छत इति लोकोक्ति। वस्तुतस्तु निष्प्रत्यूह भगवत्सामीप्यमागता इति। समागतानामुपचारमाह–प्रिय किं करवाणि व इति। किंचित् प्रार्थयितुमागता इति लक्ष्यते तथा सति तद्वक्तव्यम्। अर्थादेतासा नाह स्वभावत प्रिय, किंतु कामत प्रिय इति ज्ञापितम्। तत्प्रयोजन त्रिविध भवति। इष्टरूप अनिष्टनिवृत्तिरूप देशकालव्यवहितकामित च। तत्रापि त्रैविध्यमस्तीति वाक्यत्रय वा। यद्भवत्यो धावत्य समागता तत्त्तत्र किं व्रजे कश्चन उपद्रवो जात?। यज्ज्ञापयितु तासा समागमन पूर्वपूर्वानगीकारे उत्तरोत्तरवाक्यम्। यदि प्रियमपि न किंचित्कर्तव्य व्रजे च न काप्यनुपपत्तिस्तदागमनकारण ब्रूत ॥ १८ ॥

२ तत्राप्यनुत्तरे स्वयमेव पक्षातर कल्पयति। यथा भवत्य समागता तथाऽयमपीत्याशक्याह–रजनीति। एषा रजनी, न तु दिनम्। दिवस एवारण्ये कार्यार्थं गम्यते ॥ अय तु चन्द्र, न तु सूर्य इति भाव। ननु 'अस्तु रजनी, तथापि प्रकाशस्य विद्यमानत्वादागतव्यमेव' इति चेत्तत्राह–घोररूपेति। प्रकाशयुक्ताप्येषा वस्तुतो घोररूपा भयजनिका 'प्रकाशयुक्तायामपि रात्रौ गच्छन् पुरुषो बिभेतीति ॥ किंच घोरसत्त्वनिषेविता घोराण्येव सत्त्वानि रात्रिं निषेवते, न त्वघोराणि। अतो रात्रावघोरो निर्गतो घोरैरुपहन्यते। अत स्वभावधर्मससर्गिणा स्वरूप ज्ञात्वा व्रज

सुमध्यमा हे सुकुमार्यः ' इह वने स्त्रीभिर्न स्थेयम्, अतो व्रज प्रतियात। तत्र हेतुमाह— एषा रजनी रात्रि• घोरा भयङ्कररूपा, तथा घोरसत्त्वै भयङ्कर-प्राणिभिः व्याघ्रसर्पादिभिर्निषेविता ॥ १९ ॥ किच वो युष्माक मात्रादयो युष्मानपश्यन्तो विचिन्वन्ति मृगयन्ते, अतस्तेषा बन्धूना साध्वसमदर्शन-जन्य भय मा कृध्व नोत्पादयत। यद्यप्यविवाहिताभिरेव पत्यर्थं कात्यायन्याराधन कृत, तथाप्यत्र पतिपुत्रादिमतीनामपि तत्सौन्दर्याद्याकृष्टचित्तानामागमन

**मातरः पितर॰ पुत्रा भ्रातरः पतयश्च व॰ ॥ विचिन्वन्ति ह्यपश्यन्तो माकृध्व बन्धुसाध्वसम् ॥ २० ॥**
**दृष्टं वनं कुसुमितं राकेशकररञ्जितम् ॥ यमुनानिललीलैजत्तरुपल्लवशोभितम् ॥ २१ ॥**

मूले स्पष्टमेव ॥ २० ॥ वनशोभादर्शनार्थमागमन प्रकल्प्याह— दृष्टमिति । कुसुमित नानाविधसुगन्धिपुष्पयुक्तम् । राकेशः पूर्णचन्द्रस्तस्य करैः किरणै रञ्जित प्रकाशितम् । यमुनास्पर्शिनोऽनिलस्य लीला मन्दगतिः, तया राजतः कम्पमानास्तरूणा पल्लवा तैः शोभित वन दृष्टम् ॥ २१ ॥

---

प्रतियात । ननु ' एव सति तवैव स्थाने स्थास्याम, परिचितो भवान् ' इति चेत्तत्राह—नेह स्थेय स्त्रीभिरिति । वय हि पुरुषा, रात्रिश्चेयम्, अतोऽत्र स्त्रीभिर्न स्थातव्यम् । तथा सत्युभयोरपि विक्रिया स्यात् ॥ किंच भवत्यो यदि वृद्धा बाला वा भवेयु तदा स्थीयेतापि । भवत्यस्तु सुमध्यमा रसात्मिका । अतो देहाभ्यासे विद्यमाने सर्वथैव गतव्यम् । स्थितिपक्षेन अश्लेषो घोरपदयोर्ज्ञेय न प्रतियातेति च ॥ १९ ॥

१ अथ वयमभिसारिका एव त्वामुपदिश्य समागता किमिति प्रेष्यते इत्याशक्याह—मातर इति । भवतीना मातरो नियामिका । तास्तु नागता । अतो भवतीनामन्वेषणमपि करिष्यति । अत तासा साध्वस भय मा कृध्व मा कुरुत । नच वक्तव्य ता अपि तथा स्त्रीत्वाद्वा नागमिष्यतीति तत्राह—पितर इति । तेषा कुले कलकशकया ते समागमिष्यत्येव । ' तर्हि तै सह गतव्यम् ' इति चेत्तत्राह—विचिन्वति ह्यपश्यत इति । गोकुलान्निर्गताना कृष्णस्थानागमने मध्ये बहवो मार्गा स्फुटिता सति तत्र भगवन्माया तिष्ठति, यथा कोऽपि भगवत्समीप गच्छति । अतो मार्गांतरेणैव गता अपश्यत सतो विचिन्वत्येव । अनेन स्थितौ शकाभावोप्युक्त । बधुभ्य साध्वसामिति च । तस्मात्सर्वा नागता इति नागतव्यम् । कुले च कलको भविष्यतीति च । नच तेपि स्त्रीस्वभाव जानतीति नागमिष्यतीति चेत् भगवदर्थं वा समागता इति तत्राह—पुत्रा इति । पुत्राणा सर्वथा रक्षकत्वम् । महती लज्जेति । तेषु दयया भयाभावार्थं गतव्यम् । ननु ते बालका इति चेत्तत्राह—भ्रातर इति । तेहि समर्था अन्वेषणे लज्जावतश्च, अतो लज्जया अदृष्टा कदाचित् शरीरमपि त्यजेयु । अतो भ्रातृस्नेहाद्गतव्यम् । ननु ' ते अपकीर्ति भयादन्वेषणे न गमिष्यति । 'तरुणास्ते तरुण्यो वयम् ' इति चेत्तत्राह—व पतय इति । तेषा भोगापेक्षाप्यस्ति । तेषामेव चाय रस । अत परस्त्र नान्यस्मै देयम् । भोगस्य ततोपि सिद्धि सर्वे एव अपश्यत गृहे अदृष्ट्वा अवश्य विचिन्वति । ततो बहुकालमदृष्ट्वा नाशशकया अपहारशकया च भय प्राप्स्यति । नच वक्तव्य किमस्माक तै । तत्राह—बन्धुसाध्वसामिति । ते हि बान्धवा तै सहैव स्थातव्यम् । अतो बलवद्बाधकस्य विद्यमानत्वात् व्यायुज्य गतव्यमिति ॥ २० ॥

२ एवमुक्ते परितो विलोकयतीराह—दृष्ट वनमिति । एषा हि राजसराजसी, अग्रिमा राजसतामसी । यदि वनदर्शनार्थमागत तदा दृष्टमेव वनम्, अत प्रतियातेति । अर्थात्सर्वदा दृष्टमेवैतद्वनम् । नात्र भयमिति ज्ञापितम् गृहे च न गतव्यमिति । यदि गृहगमनापेक्षा तदैव गतव्यमिति वचनात् । तच्च वन कुसुमितमिति वर्णयति । यथा तासामन्यासक्तिर्भवति ।

तत् तस्मात् वनदर्शनरूपकार्यस्य जातत्वात् गोष्ठ व्रज यात, मा चिर विलम्बो न कार्यः । 'गत्वा कि कर्तव्यं' तत्राह– पतीन् शुश्रूषध्वमिति । 'पतिशुश्रूषा च युष्माक पतिव्रताना परो धर्म' इति सूचयन् सम्बोधयति–सतीरिति । हे सत्यः ! वत्सा बालाश्च क्षुधार्ताः क्रन्दन्ति तान् दुग्ध

तद्यात मा चिरं गोष्ठ शुश्रूषध्वं पतीन् सतीः ॥ क्रन्दन्ति वत्सा बालाश्च तान् पाययत दुह्यत ॥ २२ ॥
अथवा मदभिस्नेहाद्भवन्त्यो यन्त्रिताशया ॥ आगता ह्युपपन्न वः प्रीयन्ते मयि जन्तवः ॥ २३ ॥

पाययत गाश्च दुह्यत ॥ २२ ॥ अथवा मयि योऽभितः स्नेहः तस्माद्यन्त्रितः वशीकृतः आशयोऽन्तःकरण यासा ताः । तथा सत्यो भवत्य. आगतास्त-र्ह्येतद्वो युष्माकमुपपन्न युक्तमेव । हि यस्मात् मयि जन्तवः सर्वेऽपि प्राणिनः प्रीयन्ते प्रीतियुक्ता भवन्ति ॥ २३ ॥

---

इदानी पुष्पाण्येव जातानि न फलानीति वा । कुसुमिते वने रति कर्तव्येति भाव । सर्वत्र मोह प्रेषण चानुस्यूतम् । किंच राकेशस्य चन्द्रमस करै रजितम् । उद्दीपका एते । वन तामसम्, पुष्पाणि राजसानि, चन्द्रकिरणा सात्त्विका इति । अथ राकेश इति पूर्णचन्द्र, अत पूर्णत्वे स्थातव्यम् । पर्वादिबुद्धौ गतव्यमिति । वायुमपि तत्रत्य वर्णयति–यमुनेति । यमुनासबधिनाऽनिलेन लीलया ये एजत कपमानास्तरुपल्लवा तैर्मडितमिति । जलसबधाल्लीलया चलनात्तरूणा सुगधाना सबधात्रिगुणो वायुरुक्त । वर्णनाया रसोद्बोधके चोपयुज्यते ॥ २१ ॥

१ एव वन वर्णयित्वा अन्यासक्तिमुत्पाद्य ततो गतव्यमित्याह–तद्यातेति । तत्तस्माद्वन दृष्टमिति कार्यस्य सिद्धत्वाद्यात । एतादृश वनमिति मा यातेत्यपि ध्वनि । चिर मा विलबो न कर्तव्य, चिर मा यातेति च । नहि कश्चिद्भगवत विहाय गोष्ठ गच्छति । किं च गोष्ठ यात । तत्र गवा शुश्रूषणमपि भवति । किंच तत्र गताना धर्म सिध्यतीत्याह–शुश्रूषध्वमिति । पतिसेवा हि स्त्रीणा धर्म । तत्रापि भवत्य सती सत्य, पतिविशेषण वा । पूर्वजन्मनि ता पतिव्रता स्त्रिय स्थिता पुरुषभावनया पुरुषा जाता भवन्तश्च पुरुषा विपरीता जाता इति अग्रेपि वैपरीत्य भविष्यतीति विचार्य गतव्यमिति भाव । धर्मस्तत्र रसस्तत्रैवेति । पतीनिति बहुवचनात् धर्माभावश्च । या भवतीना मध्ये पतिव्रता ता वा गच्छत्विति सर्वासामेव तथात्वेन गतव्यमेवेति । नहि पतिव्रता समायाति लौकिकधर्मपरायणा अतो भगवद्वाक्य रसालत्वात्तदभावमेव सूचयति । किंच वत्सा तथैव वृद्धा बालाश्च क्षुधिता ते क्रदति । अत तेषा रोदन-निवृत्त्यर्थं तान्पाययत स्तन दुह्यत च गा । परार्थं च भवतीना जीवनम् न स्वार्थम् । अतो दु खिताना स्थाने सुखाकाक्षिभिर्न गतव्यमिति ॥ २२ ॥

२ एवमुक्ते या स्निग्धदृष्टयो जाता ता प्रत्याह–अथवेति । मया वृथैवैते पक्षा कल्पिता । वस्तुतस्तु मा द्रष्टुमेवागता स्नेहात् । सिद्धातोऽय पूर्वपक्षार्थमनूद्यते । निरुक्तो भावो गुणात्मको दोषात्मको वा न फल प्रयच्छति । लौकिको भवति । अत अनूद्यते मयि योऽयममित स्नेह सर्वभावेन तेन कृत्वा यत्रित आशयो यासा तादृश्यश्चेद्भवत्य इहागता । तदुपपन्नमेव तर्हि को विलब इति चेत्तत्राह–प्रीयते मम जतव इति । मम सबधिन सर्व एव जतव स्वयमेव प्रीता भवति । नतु मया किंचित्कर्तव्य स्नेह एव मयि न तु कृतिरिति । तत साधारण किमिममर्थं ज्ञात्वा प्रतियात । स्थितिपक्षे तु स्पष्ट एवार्थ । तद्यातेति फलिष्यति । नहि स्नेहादागत प्रेर्यमाणोऽपि गच्छति । यन्त्रितो वशीकृत । अन्त करणे अत्यधीने जाते न किंचिदवशिष्यते । निष्कपटा च प्रीति कर्तव्येत्युभयत्र भाव ॥ २३ ॥

पतिसेवाया परमधर्मत्वमाह—भर्तृशुश्रूषणमिति । अमायया कापट्यपरित्यागेन भर्तृशुश्रूषण तस्य भर्तृबन्धूना पित्रादीनां च शुश्रूषण तत्प्रजानां पुत्रभृत्यादीना चानुपोषण स्त्रीणा पर उत्कृष्टो धर्मः । हीत्यर्थ. न सन्देहः । ‘ युष्माक च पत्यादय. सर्वेऽपि सन्ति ’ इति सूचयन् सम्बोधयति—कल्याण्य इति ॥२४॥ ‘तथापि दुष्टस्य त्यागो युक्तः’ इत्याशङ्क्याह—दुःशील इति । दुष्ट शील यस्य सः द्यूतस्तेयादिव्यसनवान्, दुर्भगो निष्फलोद्यमः, वृद्धः विकलेन्द्रियः, जडो मूर्खः, रोगी महारोगग्रस्तः, अधनो दरिद्रः, एवभूतोऽपि पतिः स्त्रीभिर्न हातव्यः । ‘तर्हि कुत. काश्चित्त्यजन्ति?’ तत्राह—लोकेप्सुभिरिति । पुण्यलोकमिच्छन्तीभिः । त्यजन्त्यस्तु नारक्यो ज्ञेया इत्याशयः ॥ परन्तु “ आ विशुद्धेः प्रतीक्ष्यो हि महापातकदूषित ” इति स्मृते. ‘ब्रह्महत्यादियुक्तो दूरत एव सेव्यः, तत्सम्पर्कस्तु वर्जनीय’ इत्याशयेनाह—अपातकीति ॥ २५ ॥ ‘त्वया सह रमणेच्छया वयमागता ’ इति चेत्तत्र षट् दोषानाह—अस्वर्ग्यमिति ।

भर्तु[1] शुश्रूषण स्त्रीणा परो धर्मो ह्यमायया ॥ तद्बन्धूनां च कल्याण्य' प्रजानां चानुपोषणम् ॥ २४ ॥
दु[2]ःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ॥ पति स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥ २५ ॥
अ[3]स्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् ॥ जुगुप्सित च सर्वत्र औपपत्य कुलस्त्रिया· ॥ २६ ॥

सत्कुलस्त्रियाः औपपत्य परपुरुषसम्बन्धः उपपतिः तज्जन्य सुखमौपपत्य अस्वर्ग्य धर्मेण प्राप्तप्रायस्यापि स्वर्गस्य धर्मविनाशद्वारा नाशकम् । अयशस्य चेति । इह लोके यशोनाशकम्, चकारान्नरकहेतुश्च ॥ तत्र हेतु वदन्नयशस्करत्वमप्याह—सर्वत्र लोके शास्त्रे च जुगुप्सित निन्दित चेति । तथापि कृच्छ्र कष्टसाध्यम् । तथापि न महत्, किन्तु फल्गु तुच्छ क्षणभङ्गुरमित्यर्थ. । तथापि भोगकालेऽपि भयमेवावहतीति तथा तत् । अस्यार्थस्य प्रसिद्धि सूचयति—हीति ॥ २६ ॥

---

१ एव राजसीर्निरूप्य सात्त्विकीर्निरूपयति । सत्त्वयुक्ता निरूप्यते । ततो रजोयुक्तस्त्रीणा मुख्यो धर्म भर्तृशुश्रूषणमित्याह—भर्तुरिति । स्वभावतो जीवाना भगवानव भर्ता, तत्रापि स्त्रीणा स्त्रीशरीर प्राप्ताना व्यभिचाराभावाय भगवानेव सेव्य । लौकिके तु परिग्रहात् भर्तृत्वेनाभिमतः सेव्य । स एव परो धर्म । तत्राप्यमायया । कापट्ये तु न सेवाया फलम् । अन्ये सर्वे धर्मा अवरा । तद्बधूना श्वशुरादीना कल्याण्य इति सबोधनात् भवतीना सर्वेपि सतीति ज्ञापितम् । प्रजाना च पुत्रादीनामनुपोषणमन्नादिदानेन स्तनादिदानेन च पित्रादिभि पोष्यमाणाना स्वतोऽपि पोषण वा ॥२४॥

२ तथापि स पति समीचीनो न भवतीति चेत्तत्राह—दुश्शील इति । दुष्ट शील यस्य द्यूतादिव्यसनवान् । दुर्भगो दरिद्र । वृद्ध इन्द्रियविकल । जडो मूर्ख । रोगी महारोगग्रस्त । अधनो वा । अधनोपि भाग्यवाश्चेत्तदा सभावनया स्त्रीभिर्न त्यज्यते । एव षड्दोषयुक्तोऽपि स्त्रीभिरनन्यगतिकाभि पतिर्न हातव्य स्पष्ट एव विरोध । षड्गुणो भगवान् । पद्दोष स इति । पातकी तु हातव्य एव, ‘ भजेदपतितम् ’ इति वाक्यात् । किच तत्रापि लोकेप्सुभिर्यासामिह लोके परलोके च कीर्त्याद्यपेक्षा ताभिर्न हातव्य एव । अद्य यथा अपकीर्तिर्भवेत् ॥ २५ ॥

३ ननु ‘कामरसे निविष्टमनसा न धर्मो बाधक, परस्मिन्नेव रसोत्पत्तेः ’ इति तत्राह—अस्वर्ग्यमिति । कुलस्त्रिया औपपत्य जारसबध तद्रसालमपि बहुदोषग्रस्तम् । तत्रत्यान् षड्दोषा नाह । अस्वर्ग्य परलोकनाशकम् । पूर्वं धर्मेण सिद्धोपि स्वर्गस्तस्मिन् अपगच्छति । किंच इहलोकेपि यशो दूरीकरोति । चकारान्नरकोऽपि । नापि तत्र रसभोगो महानित्याह—फल्गिति । अल्पमेव

नतु 'एव पत्यादिसेवने त्वयि भक्तिर्न सिद्ध्येत्, अतस्तत्सिद्ध्यर्थं त्वत्सम्बन्धः कर्तव्य' इत्याशङ्क्याह—श्रवणादिति। यतो यथा श्रवणादिभ्यो मयि भावः स्नेहातिशेया भवति तथा तादृशः सन्निकर्षेण अङ्गसम्बन्धेन न भवति, ततस्तस्मात् गृहान् प्रतियात ॥२७॥ इत्येवभूत गोविन्दस्य भाषितमाकर्ण्य श्रुत्वा

**श्रवणादर्शनाद्ध्यानान्मयिभा वोऽनुकीर्तनात् ॥ न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥ २७ ॥**

**॥ श्रीशुक उवाच ॥**

**इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् ॥ विषण्णा भग्नसङ्कल्पाश्चिन्तामापुर्दुरत्ययाम् ॥ २८ ॥**

गोप्यो दुरत्यया तदनुग्रहविना अनिवर्त्या चिन्तामापुरित्यन्वयः। चिन्ताया हेतुमाह—विषण्णा इति। विषाद प्राप्ता इत्यर्थः॥ तत्र हेतुमाह—भग्नसल्पा इति। भग्नो भगवता सह रमणविषयकः सङ्कल्पो मनोरथो यासा ताः। तत्र हेतुमाह—विप्रियमिति। गृहगमनविषयकमित्यर्थः ॥ २८ ॥

---

तत्सुख क्षणमात्रसाध्यम्। स्वरूपतो महदपि कालत परिच्छिन्नम्। परिच्छिन्नमपि कृच्छ्रमिति कष्टसाध्यम्। नाल्पेन प्रयासेन सिद्ध्यति, अतो बलवदनिष्टानुबधि॥ किंच अनुभवकालेऽपि न रसमुत्पादयति, यतो भयजनकम्। शृगारविरोधी भयानकरस, अत एव व्यभिचारशब्द वाच्य। मुख्यतया भयानकमेव रससमुत्पादयेत् विशेषत प्रथमत। किंच सर्वत्रैव जुगुप्सित सर्वदेशेषु सर्वकालेषु तत्कृत्वा यदि सत्कर्मापि कुर्यात् ततोऽपि जुगुप्सितो भवेत् धर्मबुद्धिस्तत्र विचिकित्सैव भवति। अतो बहुदोषग्रस्तत्वात् उत्तमाया नैतदुक्तम्॥ २६ ॥

१ एव सगुणा प्रबोध्य गुणातीता प्रबोधयति—श्रवणादिति। ननु "लौकिकदृष्टावेते दोषा, नतु भक्तिमार्गे परमार्थदृष्टौ वा। भवास्तु पुरुषोत्तम" इति चेत्तत्राह—श्रवणादिति। नहि भक्ति मार्गे सबध एव कर्तव्य इति शास्त्रमस्ति। भक्तिर्हि नवविधा, श्रवणादिरूपा प्रेमरूपा च। स्वतत्रपक्षे तु सुतरामेव नापेक्षा। स्नेहस्तु भगवद्विषयक अलौकिक। स एव सर्वाधिको भवति॥ लौकिकस्तु कामशेषता च प्राप्तो हीन एव भवति। तस्यालौकिकस्य कारणानि त्रीणि, श्रवण दर्शन ध्यानमिति। आदौ श्रवणम् भगवद्वाचकाना पदवाक्याना भगवति शक्तितात्पर्यावधारणम्। तथा सति विषयो व्यावर्तितो भवति, अन्यथा अन्यत्रापि स्नेह स्यात्॥ तदनुदर्शन तदर्थस्यानुभव, कृपया भगवत्साक्षात्कारो वा। भगवत्कामार्थं नारदादेरिव॥ ततो ध्यान योगेन चितनम्। एतैरेव मयि भावो भवति। स चोत्पन्नो भावोऽनुकीर्तनात् स्थिरो भवति। यथायमुपाय शास्त्रीय साधीयान् तथा निरतरसान्निध्येन जातो लौकिक स हि कामशेष इत्यवोचाम। अतो गृहान् प्रतियात। अत परमार्थविचारेऽपि न स्थातव्यम्। इति तथेत्यत्र मकार एव निषिद्ध। न स्वरूपतो महत्त्व निषिद्धम्। गृहस्थिताना च विहित भवतीति गृहगमनमाज्ञापितम्॥२७॥

२ एव तासा गृहगमने बोधिते तत्परित्यागानतर पुनर्ग्रहणे वान्ताशनमिव मन्यमाना भगवद्वाक्य चानुल्लघ्यमिति विचार्य अतिविरोध उभयानुरोधिशरीरपरित्याग कर्तव्य इति निश्चित्य तत्रापि भगवत्सबधानदाभावात् इतिकर्तव्यतामूढा जाता इत्याह—इति विप्रियमिति। विगत प्रिय यस्मादिति उभयथापि प्रियाभाव। कि परीक्षार्थमाह। आहोस्विदभिप्रेत एवायमर्थ इति आसमतात् श्रुत्वा वाक्यतात्पर्यं निर्धार्य सत्य गमनमेव वदतीति निश्चित्य अनभिप्रेतत्वेपि तत्प्रसवहेतुमलभमाना गोप्यो नैपुण्यरहिता गोविदस्य स्वामिन देवभाषितत्वेन अनृतशका रहितमीश्वरवाक्याच्च निर्धाररहितमाकर्ण्य विषण्णा जाता मनसि परम विषाद प्राप्ता। तत्र हेतुर्भग्नसकल्पा इति। तदा परा चिंतामापु। कथमस्मद्विचारित भगवद्वाक्य च एकमुख भवतीति सा चिन्ता त्रैलोक्य प्राप्य चेद् जन्मजन्मान्तराणि च निर्धारमलभमाना दुरत्यया पर्यवसानरहिता जाता॥ २८ ॥

चिन्ता प्राप्ताना स्थितिमाह—कृत्वेति । शुच शोकादुद्गतेन श्वसनेनोष्णवातेन शुष्यन्तो बिम्बफलसदृशा अधरा येषु तानि मुखानि अव अवाञ्चि कृत्वा तथा चरणेन पादाङ्गुष्ठेन विवर प्रार्थयन्त्य इव महीं लिखन्त्यः । तथा उपात्तमषिभिर्गृहीतकज्जलैरस्रैरश्रुभिः कुचगतानि कुङ्कुमानि मृजन्त्य, क्षालयन्त्यस्तूष्णीमेव तस्थुः । स्म इत्यवधारणे । तत्र हेतुमाह— उरुदुंःखभरो यासा ताः इति ॥२९॥ किञ्च प्रेष्ठमिति । रुदितेन रोदनेन उपहते शोकाश्रुपूर्णतया लुप्तदर्शने नेत्रे प्रमृज्य प्रोञ्छतेन शोधयित्वा किञ्चित् सरम्भेन कोपावेशेन गद्गदाः स्खलिताक्षरा गिरो यासा ताः गोप्यः कृष्णं प्रति अब्रुवन् ऊचुरित्यन्वयः । एव गृहगमनाज्ञायामपि रुषा कथने हेतु सूचयन्नाह— अनुरक्ता इति । तस्मिन्नेव रागयुक्ता इत्यर्थः । अनुरागे हेतुमाह— प्रेष्ठमिति ।

> कृत्वा मुखान्यवशुचः श्वसनेन शुष्यद्बिम्बाधराणि चरणेन भुव लिखन्त्य[1] ॥ अस्रैरुपात्तमषिभिः कुचकुङ्कुमानि तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥ २९ ॥ प्रेष्ठ[2] प्रियेतरमिव प्रतिभाषमाण कृष्णं तदर्थविनिवर्तितसर्वकामा ॥ नेत्रे विमृज्य रुदितोपहते स्म किञ्चित्संरम्भगद्गदगिरोऽब्रुवतानुरक्ता· ॥ ३० ॥

'प्रेष्ठ प्रत्यनुरक्ताना भाषणे विलम्बो नैव भवति ' इति लोकप्रसिद्धमेव इति सूचयति— स्मेति । अनुराग स्पष्टयन्नेवाह— तदर्थेति । तत्प्राप्त्यर्थमेव विशेषेण निश्चयेन निवर्तितास्त्यक्ताः सर्वे कामाः विषया याभिस्ताः । 'तर्हि कथ सरम्भ ?' इत्याशङ्क्य तत्र हेतुमाह— प्रियेतरमिव ' स्थितम् ' इति शेष. । अप्रियसादृश्ये हेतुमाह—प्रतिभाषमाणमिति । स्वमनोरथप्रत्याख्यान कुर्वन्तामित्यर्थः॥ ३० ॥

---

१ तत चितया यज्ज्ञात तदाह—कृत्वेति । चिन्ता प्रथम मूर्छिता जाता । तत मुखान्यवाङ्मुखानि कृत्वा कमपि स्वमुख न प्रदर्शयिष्याम इति अवाङ् मुखानि कृतवत्य । अवगत शुचो याभि ता, शोकसबधिन्यो वा जाता । शुच श्वसनेन शोकसबधिना श्वासवायुना शुष्यति बिबाधराणि यासाम् तादृशानि मुखानि कृत्वा चरणेन भूमिं लिखत्य तथैवावस्था भवतीति भूमिविवरमिव प्रार्थयन्त्य उपात्तमषिभि अस्रै कुचकुकुमानि मृजत्य तूष्णीं तस्थु । मुखस्य अवाक्त्वेन भक्तितिरोभाव । श्वसनेन प्राणपीडाशोकेनात करणस्य । बिंबाधरशोषेण कामरसस्य । पदा भूमिलेखनेन शरीरस्य । अस्रैरिन्द्रियाणाम् । कुकुमाभावेन कान्ते । दु खभरेण आनन्दस्य । तूष्णीं स्थित्या चैतन्यस्य तिरोभावो निरूपित । केवल प्राणुवस्थिता ॥ २९ ॥

२ एवमपि स्थितौ तूष्णीं स्थित भगवतमालक्ष्य किंचिद्विज्ञापयामासुरित्याह— प्रेष्ठमिति । भाषण पूर्वोक्तमेव अथवा तस्यामप्यवस्थाया किमिति रोदन क्रियते ? स्वस्था भवत गृहे गच्छतेत्येव वदति पर हसन्मुख । तदा तासा हृदये वाक्यामृतानि प्रविष्टानि सजातीयानि वाक्यान्युत्पादितवति । तदा भगवदुद्बोधिता एव ता भगवद्वाक्यानि पूर्वपक्षयितुमारेभिरे इत्याहु —प्रेष्ठमिति । प्रेष्ठा भवत्येव स्वसामग्र्या तथा सपादितत्वात् । पर वदत्यन्यथा तथाप्यप्रियमिव प्रतिभाषमाणमिति नोक्तम् । नहि कदाचिदपि भगवान् अप्रियवत् भवति । किन्तु प्रियो भवतीतरोपि भवति । सर्वभवनसामर्थ्यात् । इतरत्वेन प्रियत्व बाध्यते । यथा जगज्जगदतिरिक्तरूपश्च तदाह— प्रियेतरमिव प्रतिभाषमाणमिति । य प्रियोंश तन्न तिरोधारयति । किंतु वाक्य न तेन रूपेण वदति, किन्तु रूपान्तरेण । तदा तेन सह वाद कर्तु शक्य इति ॥ नहि फल कश्चित्साधन भवति मा वृणुतेति वा वदति । पर बलादपि प्रतिबन्धनिराकरण कृत्वा स ग्राह्य एव तदाह । कृष्ण सदानदमिति । ननु कोऽय निर्बन्ध स एव काम्य इति । महाश्चेन्न मन्यते तदा अल्पतरा अपि काम्या इति तत्राह— तदर्थविनिवर्तितसर्वकामा इति । तदर्थ विशेषेण निवर्तिता सर्वे कामा याभि । अयमेव काम्य इति निश्चित्य पूर्वमेव सर्वे कामास्त्यक्ता । काममयश्चाय पुरुष । यदि त्यक्तापि गृह्येन तदा भगवदुक्तमेव गह कथ न गृह्येत ? तस्मादयमेव कामोऽवशिष्यत । स चेन्न भवेत्

तदुक्तिमेवाह—मैवमित्येकादशभिः । 'अस्मन्मनोरथपूरणसमर्थस्त्वम्' इति सूचयन्त्यः सम्बोधयन्ति— विभो इति । 'एवभूतस्य तव दुराग्रहेणास्मत्त्याऽगोऽनुचित एव इत्याशयेन पुन' सम्बोधयन्ति—दुरवग्रहेति । एवमुक्तप्रकारकप्रत्याख्यानात्मक नृशस क्रूर घातुक वचन गदितु व्यक्ततया वक्तु भवान् मा

॥ गोप्य ऊचु· ॥ मैव विभोऽर्हति भवान् गदितु नृशस सन्त्यज्य सर्वविषयांस्तव पादमूलम् ॥
भक्ता भजस्व दुरवग्रह मा त्यजास्मान् देवो यथाऽऽदिपुरुषो भजते मुमुक्षून् ॥ ३१ ॥

नैवार्हति, अतोऽस्मान् मा त्यज, किन्तु भजस्वेत्यन्वयः। तत्र दृष्टान्तमाहुः—देवो यथेति। देवः सर्वभजनीयोऽप्यादिपुरुष पुरुषोत्तमो भगवान् यथा मुमुक्षून् भजते तदभिलषिता मुक्ति सम्पादयति तथा। 'भज' सेवायाम्। सेवा च चित्तानुवृत्तिरूपा, अतोऽस्मदभिलषित सम्पादयेत्यर्थः। ननु मुमुक्ष वस्तु सर्वतो स्वरूपहानिरेवेति निश्चित्य फले मानमकृत्वा दृढीभूय रुदितोपहते नेत्रे विमृज्य यथास्थान सर्व प्रापयित्वा किंचित्सरमेण वादार्थमुद्यम सरम । भगवान् हि वाक्येन निराकरोति, नतु स्वरू

---

त्पत । वाक्य तु निराकार्यमिति तदर्थ सरभ सर्वोप्यत गत्वा परावर्तते पर सरमेण गद्गदा गीर्यासा वर्णाना न स्फुटनिर्गमन ईश्वरवाक्यनिराकरणे यतो वाणी बिभेति। यद्यपीश्वरभीत्या निर्गमासभवे गद्गदत्व गिरस्तथापि यथा भगवतो भीतिस्तथा तत्प्रियाभ्योपि भीतिरस्तीति ज्ञायते । तेन प्रभुभीतिकृतमस्फुटत्व तत्प्रियाभीतिक्रमो निर्गम इति नोक्तानुपपत्तिरिति भाव । एतासा तु न भयम्, यत अनुरक्ता । रागो हि भयप्रतिपक्ष । यत्र राग स्वल्पोऽपि न तत्र भयम् । अत अब्रुवत उक्तवत्य ॥ ३० ॥

१ वाक्याना बाधवाक्यानि तावन्ति प्रार्थनाधिका । एकादशविधास्तेन तासा वाचो जयति हि ॥ यद्भगवता प्रथममुक्त 'स्वागत वो महाभागा' इति यद्यपि भगवता वय स्तुता तथापि प्रेषणाभिप्रायेण, नतु स्वस्मिन्नागता इति। तथा सति नेय स्तुति कि त्वतिक्रूर वचनमनिष्टपर्यवसानात्। ननु अशक्ये किं कर्तव्य तत्राह—गोप्य ऊचु —मैव विभोर्हतीति। विभो इति भवान्सर्वमेव कर्तु समर्थ । समर्थश्चेदन्यथा वदेत्तन्नृशसमेव भवति ।दयाया विद्यमानाया न वदेदिति। यच्च भगवता उक्त व्रजस्यानामयमिति तदस्माक नोपदेश्यम्, यत सर्वविषयानेव सत्यज्य तव पादमूल प्राप्ता । अनेन त्यक्तार्थपरिग्रहोऽनुचित । नापि जारत्वेन समागतमिति निरूपितम्। एकादशेन्द्रियाणामपि विषयास्त्यक्त्वा सवासना, स्तत्र विनिगमक तव पादमूल प्राप्ता इति। अन्यथा पादमूलप्राप्तिरेव न स्यात् । यदुक्त ब्रूतागमनकारणमिति तत्राहु—भज स्वेति । अन्यत्कर्तव्यमिति चेत्तत्राह । हे दुरवग्रहेति । दुष्टोऽयमवग्रह आग्रह यद्भजन न कर्तव्यमन्यत्कर्तव्यमिति यथा जीवानाम् ॥ ते हि सर्व कर्तु वाछति, न भगवद्भजनम् । यथायमाग्रहो जीवाना दुष्टस्तथात्रापि भवितुमर्हति । 'ये यथा मा प्रपद्यते' इति तु नास्ति । यदि तदभिप्रायेणैव तथा तदा मा त्यजास्मानस्माभिर्न त्यज्यत इति । एतद्भजन विषयवत्किन्तु प्रकारान्तरेणेति । विशेषतो वक्तुमशक्ता दृष्टातेनाहु —देवो यथेति । देवो हि सर्वानेव भजते। अन्यथा शास्त्र व्यर्थ स्यात् तत्राप्यादिपुरुषो देव पूर्वकाडेपि भजन सार्थकम् । सुतरामुत्तरकाडे आदिपुरुषस्तु सेव्य एव भवति, देवश्च नहि। देवभजन व्यभिचारजनक भवति। पुरुषातरभजनेपि प्रथमभर्त्रा विवाहितो भजनीयो भवति । अनगीकारस्तूचित ।न त्वभजनम् । एतेन स यथा स्वातिरिक्तभजन न सहते, तन्निवृत्तिपूर्वकमेव स्वभजन सपाद्य स्वय भजते, तथा त्वयापि कार्यमतस्तत्र प्रेषण तवाप्यनुचितमिति ज्ञाप्यते । किंच यथा मुमुक्षून् भजते भगवानात्मीयत्वेन परिगृह्णाति आत्मतया स्फुरति स्वानद तेभ्य प्रयच्छति। "एष ह्येवानदयति" इति श्रुते ॥ स्वाप्ययसपत्त्योरन्यतरापेक्षमाविष्कृतम्। हीति न्यायेन । भगवास्तदर्थमात्मान प्रकटीकरोतीति मुमुक्षून् भजत इत्युक्तम् । अन्यथा मुमुक्षव एव भगवत भजते, नतु भगवान् । अत फलद्वारा भजन यथा तेषा पुन पूर्वावस्था न सपादयसि सतत स्वस्मिन्नेव स्थापयसि तथा अस्मदर्थमाविर्भूय स्वानदेन वय योजनीया इति एतत्कर्तव्यमित्यर्थ । एतेन प्रार्थनायासकृदगीकृत्य तूष्णीभावपक्षो निरस्त । अग्रे गृहाणा गमनाज्ञापनगृहस्थितिसपादनादिकं तु रसपोषायैव, न नतु गृहार्थमिति ज्ञेयम् ॥ ३१ ॥

२ प्राप्ता इति पाठातरम् ।

विरक्ता पुरुषोत्तमभक्ता अतस्तदभिलषित स सम्पादयति, युष्मदभिलषित मया किमिति सम्पादनीयम् ? ' इत्याशङ्कयाहु – सर्वविषयान् सन्त्यज्य तव पादमूल भक्ता सेवितवतीरित्यन्वयः । ' भक्ता ' इत्यत्र ' प्राप्ता ' इति पाठान्तरम् । ' भजस्व ' इत्यात्मनेपदप्रयोगेण ' भजनफल तवापि भविष्यति ' इति सूचितम् ॥ ३१ ॥ ' भर्तृशुश्रूषण स्त्रीणा परो धर्मः ' इति यद्भगवतोक्त तत्रोत्तरमाहु.– यदिति । ' अस्मद्दुःखेन तवापि दुःखित्वमुचित स्नेहातिशयेनाभेदात्कथं प्रत्याख्यानेनास्मासु स्वावियोगज दुःखमुत्पादयसि ? ' इति सूचयन्त्यः सम्बोधयन्ति–अङ्गेति । पतिरपत्यानि सुहृदस्तद्बन्धवस्तेषा-

**यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ॥**
**अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा ॥ ३२ ॥**

मनुवृत्तिः स्त्रीणा स्वधर्म इति यत् त्वयोक्त तदेवमेव, नात्र सन्देहः । सन्देहाभावे हेतुं सूचयन्त्य आहु.–धर्मविदेति । परं त्वेतत् पत्यादिषु कर्तव्यमनुवर्तनं त्वय्येवास्तु । ननु ' मद्भजनेन पत्यादिभजन कथं सिध्येत् ' तत्राहुः–उपदेशपदे इति । शुश्रूषणीयत्वेनोपदिश्यमानाना पत्यादिना पदे अधिष्ठाने ।

---

१ यदपि भगवतोक्त स्त्रीणा स्वधर्मपरित्यागोऽनुचित इति, अत एषा रजनी घोररूपा, नेह स्त्रीभि स्थेयमिति, तत्राप्याहु – यत्पत्यपत्येति । पतिरपत्यानि सुहृदश्च एषामनुवृत्ति स्त्रीणा स्वधर्म इति धर्मविदा त्वया उक्तम् । बहिर्मुखा हि धर्मशास्त्रज्ञा । शारीरमेव धर्म स्वधर्ममाहु , न त्वात्मधर्म भगवद्धर्म वा । यतस्तेऽनात्मविद ।तथ धर्मविदैव त्वया न त्वस्मान्विचार्य आत्मान वा त्वयोक्त तस्याप्यस्माभिर्विषयनिर्धार क्रियते, नतु दूष्यते । तदाहु – अस्त्वेवमेतदिति । स्त्रीभि स्वधर्म कर्तव्य इति यदुक्त तदेवमेवास्तु । नहि पत्यादय धर्मस्वरूपम्, नाप्याधार , किन्तु निमित्तम् । स च धर्म अनुष्ठीयमान प्रमीयमाणश्च भवति । अनुष्ठीयमाने पुत्रादयो निमित्तम्, प्रमीयमाणे गुरु ।अत सा अनुवृत्ति प्रथमतो गुरावस्तु, अन्यथा स्वधर्मो ज्ञात एव न स्यात् । न च भगवद्वाक्यमनुवादकम् । पूर्वमस्माक धर्मज्ञानाभावाद–यथा तदेव क्रियेत । नापि सेवाव्यतिरेकेणाय धर्म स्फुरति, अन्यथा वचनमात्रेणैव गत स्यात् । अत उपदिष्टस्य सिद्ध्यर्थं सेवा कार्य । उपदेशस्य पदमाश्रय कर्तैव भवति । अगेति कोमलसबोधनात् नास्माभि प्रतिकूलतया निरूप्यते । किंच स्वधर्मा अनेकविधा । स्वापेक्षयोत्कृष्टविषया , समानविषया , हीनविषयाश्च । तत्र पूर्वपूर्वधर्मप्राबल्यम् । यथा स्त्रीणा पतिपुत्रादीना स्वसमानाना सेवाधर्म एव स्वनियामकस्येश्वरस्यापि अनुवृत्तिर्मुख्यो धर्म , अन्यथा तत्प्रेरणाभावे पतिसेवादौ न प्रवर्तेत । अत प्रकृतेपि भवा नीश्वरोंतर्यामी तादृशोपि भूत्वा पतिपुत्राद्यर्थं न प्रवर्तयसे किन्तु स्वसेवार्थमेव प्रेरयसि अतो वाक्योक्तधर्मसिद्ध्यर्थमपि भगवानादौ सेव्य । किंच धर्मो धर्मिमूल ।तद्धि विरोधे न कर्तव्य फलार्थं च कर्तव्य । अन्यथा चेदानिष्टेपि पुरुष प्रवर्तयन् अनाप्त स्यात् । अत एव धर्मशास्त्रे प्रियत्वाच्छरीरस्य तदनुरोधेनुक्त । द्रव्यसस्कारविरोधे द्रव्य बलीय इति न्यायाच्च । तत्कस्यचित्प्रियो देह कस्यचिदात्मा कस्यचित्परमात्मा कस्यचिन्निर्वाहक । भवास्तु सर्वरूपो भवति । यत अत्यत प्रेष्ठ परमप्रेमास्पदमानद बन्धुर्देहनिर्वाहकश्च । किंच न केवलमस्माक किन्तु तनुभृता सर्वेषामेव देहधारिणा भवाय नाशायेत्यत्र त्वया दत्तमेत्र शरीर तद्विचारितप्रयोजनार्थं जीवो गृहीत्वा तिष्ठतीति निरूपितम् । अत स देह भगवदीय भगवतैव स्थापित । तस्मै निवेद्य तदनुपयोगे जाते पश्चादन्यस्मै देयम् । चेतनो हि प्रेर्य । अत यावद्भगवदुपयोग ज्ञास्यति तावन्नान्यस्मै दास्यति । बोधितोपि यत तनुभृता त्वमेव प्रेष्ठ । प्रेष्ठाय च देय प्रिय वस्तु । अत्रार्थे किलेति प्रसिद्धिरेव प्रमाणम् । किंच न केवल देहदाता, किन्तु बन्धुरपि । येन प्रयत्नेन शरीर बिभर्ति स बन्धु , आत्मा धारकश्च ॥ अतोन्तरगबहिरगन्यायेन नित्यानित्यन्यायेन वा भगवत्सेवैव मुख्या । यदा पुनस्त्वदनुपयोग तत्रापि चेत्तथा प्रेरण तदान्यस्मै दास्यामो नान्यथेति धर्मविचार धर्मादप्यधिक , एतच्च त्वदनगीकृत सर्वमेव विरुद्ध भवतीति प्राथ्यते । अस्त्विति ।

तत्र हेतुमाहुः— ईश इति । सकलधर्मोपदेशानामीश्वराराधनार्थत्वात् तं त्वां विहाय पत्याद्याराधनेन किम् ? अतः साक्षात्त्वदाराधनमेव कर्तव्यमित्याशय'। किञ्च 'प्रेमास्पदस्य सेवा सुखकरी भवति' इत्याशयेनाहु'— तनुभृतां सर्वप्राणिना भवान् प्रेष्ठ इति । सर्वप्रेष्ठत्वे तदाराधनेनैव पत्यादिसर्वाराधन-सिद्धौ च हेतुद्वयमाहुः— बन्धुरिति हितकर्ता, आत्मेति च । पत्यादीनामप्यात्मसहितानामेव सेवा विहिता, तद्रहिताना तु गृहान्निष्कास्य दाहादिविधा-नादिति ज्ञेयम् । "न वा अरे पत्यु कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति" इत्यादिशास्त्रसिद्ध एवायमर्थ इति सूच-यन्ति— किलेति । नच 'गोपीना कथमेव भगवत्तत्त्वविज्ञानम्' इति शङ्कनीयम्, तासा श्रुत्याद्यवतारतया अलौकिकप्रकारेणैव तथाज्ञानसम्भवात् । गोपीनां चातुर्विध्य पाद्मे उक्तम्— "गोप्यस्तु श्रुतयो ज्ञेया ऋषिजा गोपकन्यकाः । देवकन्याश्च राजेन्द्र न मानुष्यः कथचन" इति ॥ तत्र बृहद्वा-मनपुराणे श्रुतिभिर्भगवान् प्रार्थितः— "कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनासि नः । कामिनीभावमासाद्य स्मरक्षुब्ध्या न सशय' ॥ यथा त्वल्लोकवासिन्यः

कुर्वन्ति हि त्वयि रति कुशला· स्व आत्मन्नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ॥
तन्न प्रसीद परमेश्वर मा स्म छिन्द्या आशां भृतां त्वयि चिरादरविन्दनेत्र ॥ ३३ ॥

कामतत्त्वेन गोपिकाः । भजन्ति रमण मत्वा चिकीर्षा जनिता तथा" इति ॥ भगवानपि तथैव वर दत्तवान्— "आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थ-मुद्यमे ॥ कल्प सारस्वत प्राप्य व्रजे गोप्यो भविष्यथ" इति । तथा ऋषिरूपास्तु याः प्रोक्तास्तास्तु ब्रह्मोत्तरखण्डवाक्याज्ज्ञेयाः— "पुरा महर्षयः सर्वे दण्डकारण्यवासिनः ॥ दृष्ट्वा राम हरिं तत्र भोक्तुमैच्छन् सुविग्रहम् ॥ ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले ॥ हरि सम्प्राप्य कामेन ततो मुक्ता भवार्णवात्" इति । देवकन्यास्तु 'सम्भवन्तु सुरस्त्रियः' इत्यत्रैवोक्ता ॥ ३२ ॥ एतदेव सदाचारेण द्रढयन्त्यस्तत्प्रसाद प्रार्थयन्ते—कुर्वन्तीति । कुशलाः शास्त्राभ्यासेनार्थनिपुणे त्वय्येव नित्यप्रिये रति प्रीति कुर्वन्ति । तथा चास्माकमपि त्वय्येव रतिर्युक्ता, पतिसुतादिभिः किं प्रयोजनमित्यन्वयः ॥

सर्वरूपत्वात् त्वमेव सेव्य इति वा । अन्यत्र एकदा सर्वसेवा प्राप्ता अशक्तो बाधिता स्यात् विनिगमनाभावाच्च । अनेन स धर्मोपि न भवति, य कालादिना बाध्यते । अशक्यश्च भवति । नहि प्रमाण विरुद्ध विधत्ते । अत पत्यादिसेवाविधायक च शास्त्र त्वत्सेवामेव विधत्ते । अत अनुवादपक्षे स्वतत्रविधानपक्षे वा भगवत्सेवैवोचितेति भाव ॥ ३२ ॥

१ एव राजसीना निरूप्य सात्त्विकीना निरूपयति—कुर्वंति हीति । यदप्युक्त मातर पितर इति मा क्रुध्व बधुसाहसामिति तत्किमिद प्रथमतया अस्माभिरेव क्रियते, आहोस्विदन्येपि कुर्वंति ? तत्रापि किमधमा मात्राद्यनुवृत्ति कुर्वंति, आहोस्विदुत्तमा ? उत्तमा अपि त्वत्सेवायामशक्ता आहोस्विच्छक्ता, इति विचारणीयम् । अस्मिन्नर्थे निर्णायक महता चरित्रमाहु । ये त्वात्मनि कुशला आत्महितार्थिन, नतु देहेंद्रियाणाम्, ते त्वय्येव रतिं कुर्वंति । स्नेहेन हि क्रिया भवति । भगवत्कृतमेव जीवगामि भवतीति तदुपपादित तच्चात्मने प्रतिमुखस्येत्यत्र । प्रीत्या च सेवा भवति । यदि पुत्रादिसेवापि धर्म स्यात्तदा पुरुषार्थत्वेन आत्मपर्यवसायिनी स्यात् । कुशला इत्यनेन तेषा कौशलमेतत् । प्रवृत्त्यपेक्षया निवृत्तिरुत्तमा । इंद्रियदमनसामर्थ्याभाव एव अन्य-

नित्यप्रियत्वे हेतुमाहु —आत्मनीति । देहादाविव औपचारिकमात्मत्व वारयन्त्य आहु.—स्व इति । पतिसुतादीनामनादरे हेतुमाहुः—आर्ति—दैरिति । अत्र शुश्रूषादिना परलोके च तदासक्त्या ससारप्राप्त्या पीडाप्रदैरित्यर्थः । 'त्व तु सर्वतो रक्षितु समर्थोऽसि, अतस्तव सेवैव युक्ता' इत्याशयेन सम्बोधयन्ति—परमेश्वरेति । 'प्रयासविना तव कृपादृष्ट्यैव जनस्य ससारतापो निवर्तते' इत्याशयेन पुन. सम्बोधयन्ति—अरविन्दनेत्रेति । हि यस्मात्त्वदनुवृत्तिरेव तत्तस्मात् प्रसीद प्रसन्नो भव। चिरात् बहुकालमारभ्य त्वयि भृता निबद्धा नोऽस्माक रमणाशा मा स्म च्छिन्द्याः विफला न कुर्वित्यन्वयः ॥३३॥

चित्तं सुखेन भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ॥
पादौ पद न चलतस्तव पादमूलाद्याम कथ व्रजमथो करवाम किं वा ॥ ३४ ॥

यदुक्त 'तद्यात मा चिर गोष्ठम्' इत्यादि तत्रोत्तरमाहु.—चित्तमिति। यदस्माक चित्त गृहेषु निर्विशति तत् सुखात्मकेन भवताऽपहृतम्, उत अपि तथा यौ करौ गृह्यकृत्ये गृहकार्ये निविष्टौ तावपि भवता हृतौ व्यापाररहितौ कृतौ। तथा पादावपि तव पादमूलात् पदमात्रमपि न चलतः। अतः व्रजं कथ याम ? कथचिच्छकटादिसाधनेन गत्वापि अनन्तर तत्र किं करवाम ? चित्तादिसङ्घातस्य त्वया स्तब्धीकरणत्वात् न त्वदुक्तपत्याद्यनुसरण कर्तु शक्ता इत्यर्थः॥ ३४॥

गामी । कर्तव्य यतो यतो निवर्तेतेत्यत्र निरूपितम् । निरुद्धानींद्रियाण्यात्मगामीनि भवति। तत्राप्यात्मगामीनि तदैव भवति, यदि त्वदर्थमुपयुक्तानि भवति । अत केवलनिग्रहकर्त्रपेक्षया ये त्वयि रतिं कुर्वेति ते कुशला इति हिशब्दार्थे । त्वयीत्येकवचनेन च पूर्ववदेकत्र सर्वसभवो निरूपित । किंच भवान्स्वात्मा स्वरूपभूत, न त्वध्यासन्यायेन तथा जात । किच प्रियस्य हि सेवा कर्तव्या। स चेत्प्रिय कालपरिच्छेद्यो न भवति स भवानेव। अन्यथा जारसेवापि धर्म स्यात्, जन्मवद्विनस्यापि परिच्छेदकत्वात् । किच पतिसुतादयश्च न धर्महेतवो भवितुमर्हंति, यत आर्तिदा । नहि धर्मनिमित्तानि कदाचिद्दु खदानि भवति, अन्यथा ससारो न स्यात्। अत तै किम् ? तेषा भयमस्तु अन्यद्वा, न तै किंचित्प्रयोजनमित्यर्थ । परमेकमेव प्रार्थनीयम्, यदभावे सर्वं शास्त्र युक्तिश्च व्यर्था स्यात्। तदाहु —तत्तस्मात्प्रसीद त्व प्रसन्नो भव । त्वदप्रसादादेव लोका भ्रान्ता दु खहेतुष्वपि प्रवर्तते । ननु 'किं साधन प्रसादे भवतीनाम्'? इति चेत्तत्राहु वरदेश्वरेति । ये हि वरान् प्रयच्छति ते लोकाना क्लेश ज्ञात्वा, यतो दयालव । अन्यथा तपसि क्रियमाणे वर न प्रयच्छेयु । तेषामपि त्वमीश्वरोतिदयालु । तद्द्वारापि सर्वेषा दु खशमन करोषि । अतो वय क्लिष्टा क्लेश एव साधन तपोवत्। निषिद्धप्रकारस्तु यद्यप्यत्र कश्चन भविष्यति स न कर्तव्य॰ । ननु 'यथैतावत काल पतिसेवा कृता एवमेवाग्रेपि कर्तव्या, प्राप्तत्वात् । गौणमपि कर्म समारब्ध समापयेदिति तस्मादविचार्यैव पतिसेवा कुरुत' इति चेत्तत्राहु —मा स्म च्छिद्या आशा धृतामिति । नास्माभि पतिसेवा कृता तदर्थं वा स्थितम्, त्वदाशया स्थितम्। मध्ये स्थिति निर्वाहार्थमेव तदगीकार । इदानीं चेत्समागतानामभिलषितार्थो न सिध्येत् तदा आशा भग्ना भविष्यति । तस्या गताया प्राणा एव गमिष्यतीति । अत एव केनचित्स्त्रीहृदयज्ञेन निरूपितम् । आशाबन्धो हृदय रुणद्धीति । एतस्य मूलमपि स्त्रीशास्त्रे भविष्यति । चिरात्त्वय्येव धृता तस्या छिन्नायामवलबनाभावात् अध पतिष्याम इति । स्मेत्ययमर्थ प्रसिद्ध । अरविन्दनेत्रेति सबोधन दृष्ट्यैवाप्यायकत्व निरूपयति । आशाहेतुरप्यनेनोक्त तापहारकदृष्ट्या दर्शनात् भावोद्धारिण्या एव तथात्वात् । इयदवधिजीवनमप्यत एवेति भाव ॥ ३३ ॥

१ यदुक्त वनदर्शनार्थं किमागता इति ततश्च वनवर्णना कृता तत्राहु —चित्त सुखेनेति। वनदर्शनेच्छा तदा भवति यदा चित्त स्वस्मिन् तिष्ठेत्, तत्तु त्वयैवापहृतम्। तत्रापहारे न तव प्रयास

'तर्हि मया किं विधेयम्?' इत्यपेक्षायामाहुः—सिञ्चेति। हे अङ्ग हे सखे! त्वदधरामृतस्य पूरकेण प्रवाहेण नोऽस्माक तव हासपूर्वकोऽवलोकः कलगीत मधुरवेणुनादश्च ताभ्या जातो हृच्छयः कामः स एवाग्निस्तं सिञ्च प्रशमय। नो चेत् यद्येव न करोषि तर्हि कामाग्निना शुष्कदेहा वय त्वद्विरहेण जनिष्यते

सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण हासावलोककलगीतजहृच्छयाग्निम् ॥
नो चेद्वय विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ते ॥ ३५ ॥

योऽपरोऽग्निस्तेनोपयुक्तदेहा दग्धशरीराः सत्यः त्वद्ध्यानेन योगिवत्तव पदयोः पदवीं सन्निधान याम प्राप्नुयाम। मृत्वाऽपि त्वा न त्यक्ष्याम इत्यर्थः ॥३५॥

तथा सति सर्वैर्नापहृत स्यात्। तदाह—सुखेनेति। भवता वा आनदरूपेणापहृतम्। नहि साक्षात्परमानदे सति कश्चित्परपरया पाक्षिक साधन गृह्णाति वनदर्शन दूरे गृहेपि यच्चित्त निर्विशति। अनेन ज्ञानशक्तेरपहारउक्त। नापि मतव्य वन किञ्चित्कार्यार्थमागता इति। तदर्थं क्रियाशक्तेरप्यपहारमाह—उत करावपीति। यौ गृह्यकृत्ये निविशत दूरेणापास्त वामकृत्य कामेन बलस्य हृतत्वात्। त्वत्स्पर्शेनैव करौ सजीवौ भवत नोचेन्मृतौ। अत सेवाविधिरपि हस्ताभावात्कुठित। नहि कररहित कर्मणि कश्चिन्नियुक्ते। किंच यत् व्याघुट्यगतव्यमित्यभिप्रायेण वनदर्शन जातमित्युक्तम्, तदप्यसभावितम्। यतोऽस्माक पादौ द्वावपि तव पादमूलादस्मात्स्थानादेकमपि पद न चलत नान्यत्र गच्छत। पादाना गतियुक्ताना मूलभूतौ त्वत्पादौ, तस्यापि चेन्मूल गता तदा कथमन्यत्र गच्छेयु? अन्यथा वृक्षाणामपि गति स्यात्। मूल गताना अस्मात्स्थानादिति वक्तव्ये यत्तव पादमूलादित्युक्त तत्त्वद्गमनेन सर्वत्र गतु शक्यते। नतु तद्व्यतिरेकेणेति ज्ञापितम्। अत कथ याम?। 'शकटादिना प्रेषणीया' इति चेत्तत्राहु। अथो अथ तत्र गत्वा किं करवाम? यथा शकटादिक गृहे पातनार्थं साधनमस्ति नचैव हस्तयो कार्यकारणे किंचिल्लौकिकसिद्धम्। न केवल गमनेन प्रयोजनम्। किंतु पित्रादिसेवार्थं गमनम्, तदभावाद्व्यर्थमेव गमनमिति भाव। तदाहु—अथो अथ किं वा करवामेति। हस्तनिरपेक्षा कृति भिन्नप्रक्रमेण भगवद्भावेन भवतीति तथोक्तम्। अनेन स्तनपानमप्यशक्य निरूपितम्। आशाभावे सर्वत्रैव शोषात्॥ ३४ ॥

१ यद्भगवता शीघ्र गच्छतेत्युक्त तत्राहु—सिचागेति। वय शीघ्रमेव गमिष्याम, यदि त्व प्रतिबधन करिष्यसि। अनेन तूष्णींभावेपि मरण परावृत्तौ तु न किंचिद्वक्तव्यम्। हे अग! त्वदधरामृतपूरकेण त्वदधरामृतप्रवाहजलेन नो हृच्छयाग्नि सिंच। स चाग्नि त्वयैवोत्पादित इति। तत्कारणमाहु—हासावलोककलगीतजेति। तव योऽय हासपूर्वक अवलोक कलगीत च ताभ्या जातो यो हृच्छय काम स एवाग्नि। हास कामजनक। अवलोक सधुक्षणकर्ता गीत वायुरिव तत्रापि कलगीत सर्वतो वायु सोपि जातो हृदये हृदयागामित्वदधरामृतमेव। पुरो हि वस्तु प्रवाहयति। तस्यात्र सेचनकरणत्वेनोक्त्याग्ने रतिमहत्त्व ध्वन्यते। अतो युक्ता सेचनोक्ति। अलौकिकश्चाग्नि अलौकिकेनैव शाम्यति। कन्दर्पोऽहि शृतो ज्वलति, स हि जीवन्नन्यवस्था त्यजति नान्यथा अमृतेनैव च जीवति तत्रापि न देवभोग्येन। अन्यथा तैरेव जीवित स्यात्सृष्टिकारणत्वान्नास्य मोक्ष। अतोतिगुप्तेनैवाधरामृतेन तस्य जीवनम्। अत सेचनमेवोक्तम्। अन्यथा निर्वापणमेव प्रार्थयेयु। कामे जीवति जीविष्याम अन्यथा स स्वय ज्वलन्नन्यानपि ज्वालयिष्यति। तदाहु—नो चेदिति। सेचनेन यदि मत्रवादीव न जीवयिष्यसि तदा विरहेण जनितो योग्नि तेनोपभुक्तदेहा ध्यानेन ते पदयो पदवीं याम। स्वय स्वतत्र मार्गाज्ञानात् त्व च सखा येन मार्गेण गमिष्यसि तेनैव वयमपि यास्याम। यथा त्वमधुनाऽस्मभ्यमार्तिप्रदस्तथा वयमपि तथाभूतास्तुभ्य पश्चात्तापादिहेतवो भविष्याम इति गूढाभिसधिस्ते पदयो पदवीं यामेतिवक्रोणामीति ज्ञेयम्।

ननु ‘ स्वपतीनेवोपगच्छत, त एवैनमग्नि स्वाधरामृतेन सिञ्चेयु ’ इति चेत्तत्राहु·— यर्हीति । हे अम्बुजाक्ष कृपादृष्टयैव सर्वसन्तापनिवारक ! नोऽस्माक न किञ्चित्त्वत्तो गोप्यम्, अस्मदङ्गत्वादित्याशयेन पुन· सम्बोधयन्ति— हे अङ्ग ! यर्हि यदा क्वचित् अरण्ये अरण्यजना व्रजवासिन· प्रिया यस्य तस्य तव रमायाः लक्ष्म्या अपि सेवावशात् दत्त. क्षणो भगवता सह रमणावसरो येन तथाभूत पादतल त्वत्कृपया अस्प्राक्ष्म स्पृष्टवत्यः । तत्र त्वया चाभिरमिता आनन्दिताः सत्यः तत्प्रभृति तदारभ्य अन्यस्य पत्युः समक्ष सम्मुखमपि स्थातु न पारयामः समर्था न भवामः । अतितुच्छास्ते न रोचन्ते

यर्ह्यम्बुजाक्ष तव पादतलं रमाया दत्तक्षण क्वचिदरण्यजनप्रियस्य ॥ अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग स्थातु त्वयाऽभिरमिता बत पारयाम· ॥ ३६ ॥ श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या लब्ध्वाऽपि वक्षसि पद किल भृत्यजुष्टम् ॥ यस्या· स्ववीक्षणकृतेऽन्यसुरप्रयासस्तद्वद्वयं च तव पादरज· प्रपन्ना ॥ ३७ ॥

इत्यर्थ. । तुच्छत्वेन पतीना त्यागात् भगवता च प्रत्याख्यानात् कामपीडाया विद्यमानत्वात् स्वखेद सूचयन्ति—बतेति ॥ ३६ ॥ भगवच्चरणमाहात्म्य द्योतयन्त्यः स्वमनोरथे लक्ष्मीमनोरथ दृष्टान्तमाहुः— श्रीरिति । यस्या. श्रियः स्ववीक्षणकृते श्रीरस्मान् कृपया विलोकयत्वित्येतदर्थमन्येषा

देहे गते त्वतर्यामिणा क्वचिद्गतव्यम्, देहातरस्य तु नोत्पत्ति । बीजस्य दग्धत्वाद्धरेणैव दग्धो न काम प्ररोहति स विपरीतो भवति । तत्रापि विशिष्टो विरह एकान्ताभावरूपो वा । अनेन त्वया सह एकान्ताभावे विरहत्वम् । यद्यपि पूर्वोक्ताग्निनैव दाह सभवति, तथापि भस्मसात्करणेन तस्य सामर्थ्यं यावत्सर्वांगेषु सूक्ष्मावयवेष्वप्यग्नि प्रविश्य बहुधा भवति । यथा वह्निसबधेन शुष्क काष्ठ ज्वलति तत उपाधेरप्यतरगतत्वात्ते पद्योर्गमनम् । अतो गमन दुरापास्तम् । प्रस्तुतमरणमुपस्थित शीघ्र प्रतीकार कुरु ॥ ३५ ॥

१ किंच यदप्युक्त अथवा मदभिस्नेहादागता इति यदस्माक स्नेह स्तुत तत्र याथार्थ्य शृण्वित्याहु —यर्हीति। हे अबुजाक्ष दृष्टयैव तापनाशक ! यर्हि यस्मिन् क्षणे तव पादतल अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमज सामर्थ्येनापि स्थातु पारयाम साक्षाच्चरणस्पर्शो दुर्लभ । यत्र पुन पाद प्रतिफलित तत्पादतलमुच्यते, रमापि तेनैव जीवति । तदुक्त नागपत्नीभि —तवाङ्घ्रिरेणुस्प॰ र्शाधिकार यद्वाञ्छयेति । अत तत्फलस्थानीय रमाया क्षण सुख तेनैव दत्त क्वचिद्धृदये समागत सुख तत्रैव भवतीति तस्य स्पर्श एवास्माक भूमिष्ठम्य नतु लक्ष्मीवत् हृदये तत्र तमायाति । अस्माभिर्विचारित लक्ष्म्या चेदेतत्प्राप्त तपसा चाचल्यपरिहारेण तदास्माभिरपि चाचल्यपरिहारेण तन्निष्ठतया स्थातव्यम् । किं च । अरण्यजना प्रिया यस्य तेनापि सर्वसगपरित्यागेन स्थातव्यम् । सगाभाव एव भगवत्तोषहेतुरिति । अरण्य हि सात्त्विक वैष्णव च । एतेन पुलिंदीस्मारण वा । पादतलसबधि कुकुमसबधेनैव ता अपि प्रिया आसन्निति तेन पादतलस्य फलपर्यवसायित्व प्रभुप्रीतिसाधकत्व च सहजमिति वयमप्यात्मनि तथैव जानीम इति भाव । स्फुटमिद न वक्तु शक्यमित्येवमुक्तम् अत त्वत्प्राप्त्यर्थं नान्यसमक्ष स्थातु शक्नुम । सर्वथा त्वा यो न प्रपन्नशक्त्यभाव तद्धर्मप्रवेशाद्यो हि यस्य घातक तद्भावापत्तौ तस्याग्रे स्थातु न शक्तो भवति। यथा व्याघ्राग्रे देहाभिमानी। तथा भगवदीय । भगवद्व्यतिरिक्तो हि तद्भाव नाशयिष्यतीति । यत्रैव सूक्ष्मेक्षिका तत्रान्यस्य स्थाने गमन तस्य च देवतात्वेन भावन दुरापास्तम् । अत प्रीतिमात्रस्तुतिर्योसामल्पीयसी अनन्यभावा एव वयं लक्ष्मीवत् । किंच यथा सर्वपरित्यागेन लक्ष्मी चेत्त्वा शरण गता तदा त्वया अभिरमिता जाता तथा वयमपि जाता । सर्वदैव स्वप्ने त्वत्सबध प्राप्नुम· । अन्यथा जीवनमेव न स्यात् । एव भुक्तपूर्वा वयं नान्यत्र प्रेषयितुमुचिता इति ॥ ३६ ॥

१ ननु “तस्या दैवगत्या सबध आसीत्। स च प्राथमिक । भवतीना तु प्रथमतोऽन्यत्रैव सबध । अतो वैषम्यम्” इति चेत्तत्राहु —श्रीरिति। लक्ष्मीरपि न दैवगत्या भवत प्राप्तवती, किन्तु त्वच्चरणा-

ब्रह्मादिसुराणां तपआदिभिराराधनप्रयासः सा श्रीर्यथा तान‍नादृत्य भगवद्वक्षसि पदमेकान्तस्थान लब्ध्वाऽपि तुलस्या सह सापत्न्यमङ्गीकृत्य बहुभिर्भूपैर्जुष्ट सेवित ससङ्घर्षमपि यस्य तव पादरज. प्रपन्नाः तत्प्राप्त्यर्थमागता इत्यन्वय. । लक्ष्मीकृतोपासनायाः प्रसिद्धि सूचयन्ति– किलेति ।



तत्र प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशा· ॥
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकामतप्तात्मनां पुरुषभूषण देहि दास्यम् ॥ ३८ ॥

॥ ३७ ॥ यस्मात्त्वदुपासने त्वत्सेवने एव आशा अभिलाषो यासा ताः तथाभूताः सत्यो वय वसतीः पतिसुतादिसहितान् गृहान् विसृज्य त्यक्त्वा तवाङ्घ्रिमूल प्राप्ताः तत् तस्मात् हे वृजिनार्दन पापप्रतिबधकारिनिरासे समर्थ ! हे पुरुषभूषण सौन्दर्यनिधे ! तव यत् सुन्दरस्मित तद्विलसित यन्निरी-

---

रविन्दार्थ महत्तप कृतवती। सा न स्त्रीत्वेन त्वदीया, किन्तु भक्तत्वेन। अन्यथा वक्षसि स्थल प्राप्य स्वतत्र तुलस्या सह सापत्न्यमप्यगीकृत्य चरणरजो न कामयेत्। चरणरजस्तु तुलस्या भवति। भक्ता हि भक्ते । तदुपपादित प्रथमस्कधे । तस्य रजस माहात्म्यमाह–भृत्यजुष्टामिति । तद्रजसैव भृत्याना शरीरोत्पत्ते । किलेति प्रसिद्धौ। सर्वे एव भक्ता त्वच्चरणरजसैव सपादितदेहवत , अत तुलसी तत्र भक्तिरूपा प्रतिष्ठिता । तद्रज प्राप्तिर्येषा ते त्वत्सेवका एव भवति , अतो लक्ष्मी अन करणे स्थान प्राप्यापि अन्यस्त्यक्ष्यतीति चिन्तया रजश्चकमे । तस्मिन्प्राप्ते तु न शकापि । ननु किमेतावद्भय लक्ष्म्या तत्राहु –यस्या स्ववीक्षणकृते अन्यसुरप्रयास । अन्ये सर्वे एव ब्रह्मादयो देवास्तप कुर्वन्ति लक्ष्मीरस्मान्पश्यत्विति, अन्यथा तेषा कोपि पुरुषार्थो न सिध्येदिति । अतो बहुभि प्रार्थ्यमाना भीता जाता कश्चिदत्यतमपि तप कुर्यात् । स को वेद कि कुर्यादिति । रज कामनाया तु नेय शका । प्राप्तौ तु सदेह एव न भवति । एव चरणरजस प्राप्तौ अनन्यगामित्व निरूप्य स्वस्य तथात्वमाहु तद्वद्वय चेति, अस्मानपि बहव प्रार्थयन्ति तद्भयादेव पूर्वे चरणरज स्पृष्टम् । ततो देहोपि तच्चरणरजसा समुद्भूत इति सर्वथा तव पादरज प्रपन्ना । चकाराद्या अपि साम्प्रत नागता या वा महिष्य एतादृशशरीरयुक्ता एव । अतोऽस्मदर्थ एव समागतो भवान् नात्मान गोपयतापि गुप्त स्थास्यति, तस्मान्नाग्रह कर्तव्य इति भाव ॥ ३७ ॥

१ एव स्वस्य भगवदेकभोग्यशरीरत्वमुपपाद्य प्रार्थयति–तत्र इति। पूर्वश्लोकेनैव भर्तृशुश्रूषणविधिर्निराकृत । तदपरित्याग सुतरामेव तेनैव निराकृतो भवति । अनेनापि निराकरण प्रार्थयति भग, वत्कृपाभावे तादृशेनैव सबधो भवेदिति । कृपा हि सर्वतो अधिका । तत्तस्मात्कारणात् प्रसीद प्रसन्नो भव । त्वयि प्रसन्ने सर्व सेत्स्यतीति । ननु “ भवतीना प्रतिकूलमदृष्ट दु खप्रापकमस्ति अत कथ प्रसाद ? ” इति चेत्तत्राहु –वृजिनार्दनेति । वृजिन दु खजनक पाप स्वभावत एव सर्वेषा येन केनापि सबधेन तदर्दयसि । प्रसादे हेतुमाहः–तेऽङ्घ्रिमूल प्राप्ता इति । यस्तु चरणतल प्राप्नोति स प्रसादमपि । स च प्रसाद पशुपुत्रादिरूपो मा भवत्विति । स्वाधिकारमन्येभ्यो व्यावर्तयति–विसृज्य वसतीरिति । गृहस्थाश्रमस्त्यक्त । ननु गृहमात्रमिति । वसतीरिति बहुवचनम् । परित्यागेपि हेतुमाहु –त्वदुपासनाशा इति । तत्सेवा करिष्याम इति आशामात्रैणैव पूर्वसिद्ध त्यक्तम् । तत्र समागताना पुनर्गृहसबधे कि वक्तव्यमिति । अतो देय प्रार्थयति–तव सुदर यत्स्मित मोहकमप्यानदजनक त्वत्सबधात्परमानदरूप तादृशस्मितपूर्वक यन्निरीक्षण तेन जात तीव्रो य काम तेन तप्तात करणाना पुरुषाणा भूषणरूप अनतकोटिकदर्पलावण्य ! स्वत पुरुषार्थरूपमेव दास्य देहि । अधिकारिभेदेन दास्यानेकविधत्वाद्देय रूप स्वतापोक्त्या व्यज्यते । उक्ततापाविशिष्टाना यदेतत्तापनिवर्तक तादिति । किंच प्रभोरपेक्षितवस्तुसमर्पणे हि दास्य भवति, न त्वन्यथा ।

क्षण तेन जातो यस्तीव्रो दुःसहवेगः कामस्तेन तप्तः आत्मा अन्तःकरण यासा तासा नोऽस्माक प्रसीद प्रसन्नो भव, प्रसन्नश्च सन् दास्य देहि। त्वद्दास्यपूर्वक रमण सम्पादयेत्यर्थः। प्रकरणस्वारस्यात् ॥ ३८ ॥ ननु ' गृहस्वाम्य विहाय किमिति दास्य प्रार्थ्यते ? ' तत्राहु.— वीक्ष्येति । अलकै.

**वीक्ष्यालकावृतमुखं तव कुण्डलश्रीगण्डस्थलाधरसुधं हसितावलोकम् ॥**
**दत्ताभय च भुजदण्डयुगं विलोक्य वक्षः श्रियैकरमण च भवाम दास्यः ॥ ३९ ॥**

केशैरावृत मुख तथा कुण्डलयो. श्रीः शोभा ययोस्ते गण्डस्थले यस्मिन्, अधरे च सुधा यस्मिस्तच्च तच्च तव मुख वीक्ष्य दत्त भक्तेभ्यः ससारादभय येन

---

एव सति यथाऽस्माकमुक्ततपो न प्रचुरा त्वदपेक्षा तथा तवास्मदपेक्षाया स्वयमुद्यम्यास्मदुपभोग कार्य इत्यर्थ पर्यवस्यति। अन्यथा दास्यस्य स्वकृतिसाध्यत्वेन दानोक्तिरनुपपन्ना स्यात्। अत एव तथा सबोधन पुरुषो भूत्वा भूषणरूपेति। तद्धि कठादिषु सर्वेष्वगेषु भवति। त्वमपि तथा भूत्वा दास्य देहीति वाक्यैकवाक्यतया प्राप्यते। भूषणत्वोक्त्यैव स्वतत्रपुरुषार्थताप्युक्ता मणिखचित तद्धि भूषणत्वसपत्त्यर्थ मध्ये लाक्षावदपि भवति तेन सहापि तद्धारणार्थ लाक्षामपि धारयति तुच्छामपि। तथा मध्ये कामोपयोग इति न तदुपाधिकृत दास्यचरणमपि तु तद्विपरीतमिति भाव। अतो दास्यार्थिन्य एव वयम्, न तु विवाहार्थिन्य। अत उपनयनाद्यपेक्षापि न लोकव्यवहारेण कर्तव्येति भाव ॥ ३८ ॥

१ ननु भवतीना सर्वासामेव दास्यवरणे को हेतु सालोक्यादेरपि फलस्य विद्यमानत्वात्, तत्राहु –वीक्ष्यालकावृतमिति। अनेन लोकेप्साया पतिर्न त्यक्तव्य इति अत्रोत्तरमुक्तम्। लोके हि पुरुषार्थत्रयम्। चतुर्विधो मोक्ष। इन्द्राद्यैश्वर्यभावेन स्वर्गप्राप्ति। इहलोके परमा लक्ष्मी। तदत्र त्रयमपि दास्ये सर्वोत्कृष्टमस्तीति तदुपपादयति। प्रथम सारूप्य सालोक्य सामीप्य सायुज्यमिति मोक्षभेदा। ते दास्याग्रे अप्रयोजका। यतो मुखारविन्ददर्शनेन ते कामा निवर्तन्त इति। भक्तिरूपमुखारविन्दस्य तदपेक्षयोत्कृष्टधर्मवत्त्व निरूप्यते। अलका सारूप्यमिव प्राप्ता भ्रमरास्ते बहव एवात्र आवृत्य मुख तिष्ठति। अत सारूप्यगतानामपि यदि भक्तिशेषत्व तदा किं सारूप्येण। किंच मुख कुडलश्रि कुडलाभ्या श्रीर्यस्य कुडलयोर्वा श्रीर्यस्मात्तत्सामीप्ये हि नैकट्य भवति। अत्यत सामीप्य जायमानमपि कुडलादप्याधिक न भविष्यति ते चेत्सारूप्ययोगरूपे भगवत्प्रमाणावलबिनी भगवदधीनगतिमती पुनर्भगवन्मुखनिरीक्षके तदा किं सामीप्येन ?। किंच गडस्थलाधरसुधमिति। गडौ स्थलरूपौ विशालौ। स्थले हि रस पातु शक्यत इति। अधरे च सुधा यस्मिन्। गडस्थले स्थित्वा अधरसुधा पातुमत्र शक्येति। सालोक्ये हि आनन्दमात्रमक्षरामृतपान चाक्षरापेक्षयापि गडस्थले स्थिति। चुबनाद्यर्थमुक्तमोऽधररसश्च अक्षररसादुत्तम इत्युक्तम्। कुडलश्रीयुक्त गडस्थलमित्यस्मिन्पक्षेपि सामीप्याद्भक्तौ शास्त्रीयो रस अधिको निरूपित। परस्पर तद्गुणवादरूपमक्षरादाधिक्य तु अधररसे स्पष्टमेव। किंच हसितावलोकमिति हसितपूर्वकमवलोको यस्मिन्। ब्रह्मानदे प्रविष्टाना न भक्तिविलास। हासो हि सर्वरसोद्बोधरूप। ज्ञान चाविर्भूत ब्रह्मानदे तु द्वयमप्यव्यक्तम् जले निमग्नस्य जलपानवत्। अनुभवरसो हि भिन्नतया स्थितौ भवति। अतो भक्तिरूपसुखस्य दृष्टत्वाद्दास्यमेव फल न मोक्ष। भुजदडयुग च विलोक्य इन्द्रादिभावेनापि स्वर्गो न प्रयोजक इति निरूपयति। दत्ताभयमिति। स्वर्गे इन्द्र परमकाष्ठा प्राप्त। तेपि दैत्येभ्यो निरतर भीता इन्द्रादय तेषामप्यभयदातृभगवतो भुजदडयुगल तच्चेदत्रैवास्ति तत्परित्यज्य किमिंद्रत्वेन। चकारात् न केवल भयमात्र प्रयच्छति, किंतु क्रियाशक्त्या यज्ञादिना हविरपि प्रयच्छति। यथाऽग्रे इन्द्र स्वाधिकारसमाप्तौ मुक्तो भवति। दडपदेन अनुल्लघ्यशासनत्वमुक्तम्। उभयत्र च दडो युगपदेन निरूपित। ततो हि सर्वथा दैत्यनाशो भवति। किंच वक्षोपि विलोक्य लोकाना श्रिया रमण भवति। श्रीरपि तत्र रमते। चकाराद्धर्मस्यापि। अतो दास्य एव भवाम। अत्र वीक्षणस्य दासीभवनहेतुत्वोक्त्या यत्राय भावो नास्ति तेषा नैतद्वीक्षणमस्ति। विधिप्रयुक्तत्वाभावेन तदविध्यनगीकारश्च युक्त इति ज्ञाप्यते। तदप्युक्त भगवता अस्वर्ग्यमित्यादि। स्वभजने दोषषट्क तदपि षड्भिर्गुणैर्निवारितम्। नहि परम पुरुषार्थसाधक पाप भवति। फलत एव पापस्य निंद्यमानत्वात् ॥ ३९ ॥

तथाभूत च भुजदण्डयुग विलोक्य श्रियो लक्ष्म्या एक मुख्य रमण रतिजनक तव वक्षश्च विलोक्य दास्यो भवामेति । श्रियैकेति सन्धिरार्षः ॥ ३९ ॥
यदुक्त 'जुगुप्सित च ह्यौपपत्यं कुलस्त्रिय' इति तस्योत्तरमाहु.—का स्त्रीति । स्नेह सूचयन्त्यः सम्बोधयन्ति—अङ्गेति। ते तव कलानि मधुराणि पदानि

के स्त्र्यङ्ग ते कलपदायतमूर्च्छितेन सम्मोहितार्यचरितान्न चलेत्त्रिलोक्याम् ॥
त्रैलोक्यसौभगमिद च निरीक्ष्य रूप यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन् ॥ ४० ॥

यस्मिंस्तच्च तत् आयत दीर्घ मूर्छित च यद्वेणुगीत तेन सम्मोहिता आकृष्टचित्ता सती त्रैलोक्ये लोकत्रये सौभग सौन्दर्यातिशययुक्तमिद रूप च निरीक्ष्य त्रिलोक्या का सा स्त्री या आर्यचरितात् सदाचारात् स्वधर्मात् न चलेदित्यन्वयः । यद्यनधिकारिणा गवादीनामपि मोहस्तदाऽस्माक मोहे कि-

१ ननु ' तथापि लोकविद्विष्ट स्त्रीणामभिसरणम् । अत सन्मार्गरक्षणार्थप्रमाणसिद्धमप्येतन्न कर्तव्यमत श्रवणदर्शनादिकमेव कर्तव्यम् ' इति चेत्तत्राहु —का स्त्रीति । अय धर्मे पुरुषाणा च वक्तव्यो, न तु स्त्रीणा असमावितत्वात् । न त्वसमावितो धर्मो भवति । एव धर्मनाशे धर्मस्थापक स्वरूपमेव हेतु अद्भुतकर्मत्वात् । वस्तुतस्तु स्वरूप सबधिना भक्ताना धर्मे स्वरूपेणैव रक्षति । तच्चान्यभावेभ्यो रक्षणमेव तद्भावपोषण च । स्वरूपधर्मसबधिनस्तास्तैरेवेति न किंचिदनुपपन्नमिति भाव । अत एव स्वरक्षणेन स्वान्तरगत्वज्ञापनायाग्रेति सबोधनमप्रतारणाय च । या स्त्री लोके स्त्रीशब्दवाच्या सा कथमार्यचरितान्न चलेत् । त्रिलोक्या सत्त्वरजस्तम कार्यरूपाया तामसीना मौढ्यादार्यचरिते स्थिति मत्वा तन्निराकरणम् । राजसीना स्वभाव एव । सात्त्विकीना सत्त्वाद्धर्मबुद्धिमाशक्य तन्निराकरणम् । आर्यमार्गपरित्यागे हेतु ते कलपदामृतवेणुगीतसमोहितेति । समोहिता आर्यचरिताच्चलत्येव । समोह पचपर्वाविद्यास्थानीय भगवत्सबधाद्-विद्या तु न बाधते । परमन्य एव बाधका । तेषा बल ते इति त्वदीया इति । कलान्यव्यक्तमधुराणि यानि पदानि तत्राविर्भूत यदमृत तदेव वेणुद्वारा गीत तेन समोह । गीत देहमोहजनक गायत स्त्रिय कामयते इति । स्त्रीतु देह एव । इन्द्रियाणा व्यामोहको वेणु रसात्मकत्वादमृत प्राणाना पदान्यत करणस्य अव्यक्ता आत्मन इति । सम्यग्विमोहिता आर्या प्रमाणबलविवेकिन प्रमाणे हीन्द्रमहेन्द्रयोरपि भेदस्वीकार । पृथगुपस्थिता सर्वे एव भिन्ना इति । अन्यथा इन्द्रयाजिनोग्रे सवत्सरान्ते प्रायश्चित्तश्रवण न स्यात् । सवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपाल निर्वपेदिति । अतो देहव्यतिरिक्त स्वरूपेणोपस्थितोपि प्रमाणबले विरुध्यते । वस्तुविचारस्तु प्रमेयबलमाश्रित्य अन्यथा विधिनिषेधविधयो व्यर्था । स्यु । तदुत्तरत्र वक्ष्यति एकादशे । अतो मार्गान्तरविरोधो मार्गान्तरेणोपयुज्यते इति मर्यादाभगोत्र न दूषणम् । एतस्योत्तरमग्रे शुकश्च वक्ष्यति रासानन्तर धर्मव्यतिकरो दृष्ट इति । तस्मादत्र फलस्य सिद्धत्वात्साधनदृष्ट्या अपकीर्तिर्नास्मत्प्रतिबधिका । किंच न केवल नाम्ना मर्यादाभग , किन्तु स्वरूपेणापि । तदाहु – त्रैलोक्यसौभगमिति । त्रैलोक्यस्यापि सुभगत्व यस्मात् । यथा सूर्येण दिन चद्रमसा रात्रि तथा त्रैलोक्यमेव भगवद्रूपेण सुदरता याति । इदमिति प्रत्यक्षसिद्धम् । चकारादनुभावाश्च तच्छ्रुत्वा एतत् दृष्ट्वा का वा आर्यचरितान्न चलेत् । अस्त्विय प्रमाणवार्ता दुर्बला प्रकारातरेणापि चलति । भगवतो रूपेण प्रमेयमर्यादाप्यपगच्छति या कथमपि नान्यथा भवति तदाह— यद्गोद्विजद्रुममृगा इति । गावो हि प्रमाणवार्तानभिज्ञा मातरमपि गच्छति । द्विजा पक्षिण सर्वभक्षा । द्रुमा स्थावरा कदाचिदपि बहि सवेदरहिता , निरिन्द्रिया एवेति केचित् । मृगा सर्वतोभया तेपि चेद्भगवद्रूपेण गीतेन वा आश्लिष्टरसा पुलकानि धारयति रसिकमनुष्यधर्मानाविष्कुर्वति । ये भगवता अन्यथैव सृष्टा । स्त्रियस्तु स्वभावतोप्यन्यथा भवतीति नाश्चर्यं किंचिदत्र ॥ ४० ॥

माश्चर्यम्' इत्याशयेनाहु – यदिति। याभ्या वेणुगीतश्रवणरूपदर्शनाभ्या गवादय· पुलकान्यबिभ्रन् अबिभरुरित्यर्थ. ॥ ४० ॥ 'सकलव्रजजनार्त्यपाकरणाय अवतीर्णस्य स्वदासीना मनोरथभङ्गेन आर्त्युत्पादन न युक्तम्, किंतु तदपाकरणमेव युक्तम्' इत्याशयेन सम्बोधयन्ति– आर्तबन्धो इति। आदिपुरुषो भगवान् यथा सुरलोकगोप्ता रक्षार्थमुपेन्द्रादिरूपेणावतरति, तथा भवानपि व्रजस्य सर्वस्य भयार्तिहरो भयार्तिहरणार्थमभिजातोऽसीति व्यक्त यस्मात् निश्चितमेव, तस्मात् तव किङ्करीणा नोऽस्माक स्मरतापतप्तेषु स्तनेषु शिरस्सु च सकलतापनिवर्तकत्वेन युक्त निज करपङ्कज निधेहि

व्यक्त भवान् व्रजभयार्तिहरोऽभिजातो देवो यथाऽऽदिपुरुष· सुरलोकगोप्ता ॥
तन्नो निधेहि करपङ्कजमार्तबन्धो तप्तस्तनेषु च शिरस्सु च किङ्करीणाम् ॥ ४१ ॥

॥ श्रीशुक उवाच ॥

इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वर· ॥ प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥ ४२ ॥

सस्थापयेत्यन्वय. ॥ ४१ ॥ इत्येवं तासां विक्लवित पारवश्यप्रलपित श्रुत्वा आत्मारामोऽपि निजानन्दपरिपूर्णोऽपि भगवान् सदय यथा भवति तथा कृपया तदार्तिहरणार्थ प्रहस्य गोपीररीरमत् रमयामासेत्यन्वयः। 'कथमेकस्ता रमयितु शक्तः?' इत्यपेक्षायामाह– योगेश्वरेश्वर इति। योगेश्वरा हि

१ एव भगवदुक्ताना वाक्याना निवारणार्थं पुष्टिमार्गसिद्धात निरूप्य एतद्भगवत्कृपैकसाध्यमिति भगवत्कृपा प्रार्थयन्ति– व्यक्तमिति। नापि त्वदुक्तमस्मदुक्त वा किंचित्साधक बाधक वा, तथापि स्वावतारप्रयोजन विचार्य अस्मासु कृपा कर्तव्या। तत्प्रयोजनमाहु – भवान् व्रजभयार्तिहरण एव व्यक्तमभिजात। व्रजस्य आर्ति पीडा भय च त्वया दूरीकर्तव्यम्, अन्यथा साक्षाद्भगवत अवतारे प्रयोजन न पश्याम। भूभारहरण तु सकर्षणाशेन वसुदेवादिप्रिय प्रद्युम्नेन। सर्वधर्मरक्षा त्वनिरुद्धेन। यदि व्रजभयार्तिनिराकरण न क्रियेत तदा किमवतारातरकार्य स्यात्। अतो व्यक्त भगवान् व्रजभयार्तिहर। इदानीं यथार्तिरस्माक तथा न कदापि अस्मादप्यगमेत्। सर्वस्यापि व्रजस्य महती आर्ति। अत आर्तिनिवृत्ति कर्तव्या। ननु मर्यादयैव निवृत्तिकरणमुचितम्, न तु अमर्यादया। तथा सति भवतीना कामशान्ति ज्ञान वा भवत्विति चेत्तत्राहु – देवो यथादिपुरुष इति। भगवान् ब्रह्मरूप सर्वसम, तथापि इन्द्रादिषु कृपा कुर्वन् दैत्यान् मारयति विषमतामगीकरोति। न तु देवेभ्यो ज्ञान प्रयच्छति। यत्र स्वरूपमेव अन्यथा करोति तत्र वाचमन्यथा करोतीति किं वक्तव्यम्। अतो यथादिपुरुषोपि देवो भूत्वा सुरलोकगोप्ता जात, तथा भवानपि धर्ममर्यादारक्षक। अस्मत्सबध करोतीति भाव। तदेव रसपोषणार्थं व्याजेनाहु – तन्नो निधेहीति। आदावस्माक शिरसि हस्त स्थापय यथा अस्माकमभय भवति। ततोऽस्माक हृदयतापनिवृत्त्यर्थ स्तनेषु च करपकजममृतस्त्रावि तापनाशक विधेहि। अनौचिती तु नास्ति यतो वय किंकर्य। परीक्षार्थ वा एतत् द्रष्टव्यमिति रसोक्ति ४१

२ एव प्रार्थनाया भगवान्यत्कृतवास्तदाह– इतीति। षड्गुणैश्वर्यभावेन षोढा रेमे हरि स्वयम्। स्वरूपेणापि शृगारो द्विविधोऽपि निरूपित ॥ सामान्यरमण पूर्वं विशेषे मेलन पुरा। बाह्येन रमण पश्चादातर च तत परम् ॥ ततो नानाविलासेन जलकेलिविभेदत। विप्रलभस्य सिद्ध्यर्थ तासा मानमुदीर्यते ॥ तिरोभावस्ततश्चापि नाय लौकिककामुक ॥ प्रथम तासा तापापनोदनार्थ सामान्यलीलामाह। इति तासा विक्लवित परमवैक्लव्यभाषित श्रुत्वा प्रहस्य अरीरमत्। ननु 'निरिन्द्रिय कथ रेमे?' तत्राह– योगेश्वराणामपीश्वर इति। योगादिषु सर्वे पदार्था स्फुरति। अणिमादयोपि तथा। तदैव स्वरूपमेवेन्द्रियादिभावेन प्रकटीकृतवान्, नतु स्वस्य कामेन। तथा सति बीजनिवृत्तौ कामो निवर्तेतेति तासा यथा न कदाचिदपि स

बहुरूपधारणेन बह्वीः स्त्रीः रमयितु शक्नुवन्ति, तेषामीश्वरे भगवति तत्करण किमशक्यमित्याशय ॥ ४२ ॥ तद्रमणमेव प्रपञ्चयति— ताभिरिति चतुर्भिः । समेताभिर्मिलिताभिस्ताभिर्गोपीभिर्वृत अच्युतः सर्वत ऐश्वर्यज्ञानादिधर्मतः च्युतिरहितः श्रीकृष्णः उडुभिस्ताराभिर्वृत एणाङ्कश्चन्द्रो यथा विरोचते तथा व्यरोचत अशोभतेत्यन्वयः । गोपीना परमानन्द सूचयंस्ता विशिनष्टि— प्रियस्येक्षणेन कृपादृष्ट्या उत्फुल्लानि मुखानि यासा ताभिः । तदानन्दहेतुत्वेन भगवन्त विशिनष्टि— उदारं गोपीना मनोरथपूरक भाविश्रोत्रादीना पुरुषार्थप्रद च चेष्टित लीला यस्य स इति । चन्द्रसादृश्यमुपपादयन्नाह— उदारेण महता तासा सुखप्रदेन वा हासेन द्विजेषु दन्तेषु कुन्दकुसुमवद्दीधितिः प्रकाशो यस्य स इति ॥ ४३ ॥ वनिताना शतयूथानि पातीति तथा सः कृष्णस्ताभी रूपाधिक्येन गीयमान. स्वयं चोद्गायन् वैजयन्तीं पञ्चवर्णपुष्पग्रथिता माला बिभ्रत् वन

**ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युत ॥ उदारहासद्विजकुन्ददीधितिर्व्यरोचतैणाङ्क इवोडुभिर्वृतः ॥ ४३ ॥ उपगीयमान उद्गायन् वनिताशतयूथप ॥ मालां बिभ्रद्वैजयन्तीं व्यचरन् मण्डयन् वनम् ॥ ४४ ॥**

भावो गच्छति, तदर्थं प्रहस्य प्रकर्षेण हास्य कृत्वा तासामुद्धारार्थं न तु भिन्नगणनया मर्यादाया पातयित्वा नाशनार्थमिति । तदाह— सदयमिति । गोपीरेवारमयत् स्वय त्वात्माराम एव तासा रसाधारत्वाय च सदयम् । क्रिया सर्वापि सैवात्र पर कामो न विद्यते । तासा कामस्य सपूर्तिर्निष्कामेनेति तास्तथा ॥ कामेन पूरित काम ससार जनयेत्स्फुट । कामाभावेन पूर्णस्तु निष्काम स्यान्न सशय ॥ अतो न कापि मर्यादा भग्ना मोक्षफलानि च । अत एतच्छ्रुतौ लोको निष्काम सर्वथा भवेत् ॥ भगवच्चरित सर्वं यतो निष्काममीर्यते । अत कामस्य नोद्बोध तत शुकवच स्फुटम् ॥ आत्मारामस्य आत्मनैव रमण व्यावर्तयितुमपिशब्द ॥ अरीरमद्बहुधा रेमे । उत्तरोत्तर रसाधिक्य च प्रकटितवान् ॥ ४२ ॥

१ एव सामान्यलीलामुक्त्वा विशेषलीलामाह— ताभिरिति त्रिभि । अजातस्मरकेलिभि प्रथमत ताभि समेतो जात मिलित पूर्वं भयात्पृथक्स्थिता तत उदाराणि चेष्टितानि यस्य अत्रौदार्यं रसविषयकम् । यथा तासा महानेव रस आविर्भवति तथा कामशास्त्रसिद्धा लीला सर्वा एव कृतवान् । ततस्ता अत पूर्णरसा प्रियस्य भगवत ईक्षणार्थमुत्फुल्लानि मुखानि यासा तादृश्यो जाता । प्रियेक्षणेन वा सूर्यकिरणैरिव उत्फुल्लानि मुखानि वस्तुतो लोभस्थितरसार्थमेव तथाकरणमेतावति कृते रसो निवर्तेत । तदभावायाह— अच्युत इति । तासामपि रससमाप्त्यभावाय उदारो यो हास पूर्णकामप्रद कामार्थमेव यो मोह तेनैव स्नेह सर्वधित । तदाह— हाससहितास्ते द्विजा त एव कुदपुष्पाणि आरक्तान्यपि हासेन शुभ्राणि तेषु दीधितिर्यस्य । कुदत्व स्नेहस्यैतन्मात्रपर्यवसानार्थं पूर्वं निरुपाधिरेव स्नेहस्थितो भगवता परसशास्त्रोक्तरीत्या स्वरूपानन्द दातु तत्सजातीय कामोपाधिक स्नेहोऽधुना जनित इति ज्ञापनाय यत्स्नेहरूपरदाना द्विजपदेन कथनम् । तथा सति फलभोगात्कान्त्यभावमाशक्य तत्र दीधितिरुक्ता । यद्यपि भगवास्तन्निर्बन्धेन रेमे जगद्दोषनिराकरणार्थं च न तु स्वय तथापि न पूर्णमनोरथ इव । किन्तु यथा लौकिक । तदाह दृष्टान्तेन— एणाक उडुभिर्क्षनत्रै सह यथा व्यरोचत तथेति । बधातिरिक्ता सर्वा बाह्या एव लीला उक्ता । एषा विशेषत प्रथमलीलाबाधककामनिवारिका ॥ ४३ ॥

द्वितीयलीलया उद्बोधार्थं पूर्वसामग्रीमाह— उपगीयमान इति । ताभिरुपगीयमान निकटे गीयमान स्वयमप्युद्गायन् जात । तत वनिताशतानामनेकविधस्त्रीणामनेकविधानेव यूथान् पातीति तथा जात । यावतीभिर्मिलित रसहेतुर्भवति तावतीनामेक यूथम् । एव अनेकरूपाणि कृतानि तेषामत्र रक्षण दूरादेव आश्वासनेन च । तदा गायतो गच्छत । रूपमाह— मालामिति ।

मण्डयन् अलङ्कुर्वन् व्यचरत् इत्यन्वय ॥ ४४ ॥ तस्या यमुनायास्तरलैरानन्दः शैत्येनानन्ददायकश्चासौ कुमुदानामामोदो यस्मिन् स च तेन वायुना हिमा॰ शैत्ययुक्ता वालुका यस्मिन् तथाभूत नद्यास्तस्याः पुलिनमाविश्य गोपीभिः सह रेमे इत्यन्वयः ॥ ४५ ॥ रमणप्रकारमाह— बाहुप्रसारेति । दूरेस्थिताग्रहणार्थं बाहुप्रसारण, परिरम्भः बलादाकृष्यालिङ्गन, करादीनामालभन स्पर्शश्च, नर्माणि परिहासवचनानि, नखाग्रपातश्च तैः क्ष्वेल्या क्रीडया अवलोकाश्च हसितानि च तैश्च व्रजसुन्दरीणा रतिपति काममुत्तम्भयन्नुद्दीपयन् रमयाञ्चकार ताः रमयामास ॥ ४६ ॥ एवमुक्त-

> नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ॥ रेमे तत्तरलानन्दकुमुदामोदवायुना ॥ ४५ ॥
> बाहुप्रसारपरिरम्भकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः ॥
> क्ष्वेल्याऽवलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन् रतिपतिं रमयाञ्चकार ॥ ४६ ॥
> एवं भगवतः कृष्णाल्लब्धमाना महात्मनः ॥ आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ॥ ४७ ॥

प्रकारेण महात्मनः अत्युदारचित्तात, तत्र हेतुः— भगवतः ऐश्वर्यादिपूर्णतया सर्वसम्पादनसमर्थात् कृष्णात् सदानन्दरूपात् लब्धमानाः प्राप्तमनोरथा-स्ता गोप्यो भुवि वर्तमानाना स्त्रीणा मध्ये आत्मानमभ्यधिकमतिश्रेष्ठ मेनिरे, अतो मानिन्यो जाताः । ' न ह्यस्मत्सदृश्योऽन्याः सन्ति, अतोऽस्मान् यदि

---

वैजयती नवरत्नखचिता स्वाभाविकी ऐश्वर्यप्रबोधिका कीर्तिमयीं माला बिभ्रत् वनमेव सर्व मडयन् अलकुर्वन् व्यचरत् लीलागतिं कृतवान् । एषा हि गतिस्तासा कामोद्बोधिका । स तासा कामपूरक एकस्माद्वनात् वनातर गत इति ॥ ४४ ॥

१ एवमुद्बुद्धे कामे ताभि सह बधादिभी रेमे इत्याह—नद्या इति । नद्या पुलिनमच्छ कोमलमाविश्य आसमतात् प्रविश्य रमणे बधादिभिरतिकोमल कृत्वा गोपीभिरनेकविधाभी रेमे । हिमा शीतला वालुका यत्रेति अतरूष्मा निवारित । बहि शैत्य चाह—तत्तरलानदीति । तस्या नद्या तरला तरगा ताभि कृत्वा आनदयुक्तपुलिनमेव आनदयुक्तो वायुर्वा कुमुदाना चानदयुक्त सुगध तस्यानदजनकत्वेनैव माद्य निरूपित शैत्य च कुमुदाना जलसबधात् । तादृशवायुना सहित पुलिन महाबन्धेषु वायोरत्यपेक्षा ॥ ४५ ॥

२ ' तत्तरलानदिकुमुदा ' इति पाठातरम् ।

३ एव सर्वभावेन तासा जातस्मरकेलित्व सपादितम्, अत परमष्टविधालिंगनादिपूर्वक वेष्टितकादियुक्त रसविलासचरित्रमाह—बाहुप्रसारेति । दूरेस्थितामवयव वा स्पृष्ट बाहुप्रसारण ततो बलादपि परिरभ । तत करालकोरुनीवीस्तनानामालभनानि करालभन हस्ते ग्रहण पुरुषायितलीलासम्बन्धे वा । एव कुचोन्नमनार्थमलकाना स्पर्शः । ऊरुस्पर्शो बाहुबधार्थ । नीवीस्पर्श पुष्टे रसे मोचनार्थं । स्तनयोस्तु रसोद्गमनार्थं । एव पच स्पर्शा विहिता । नर्म परिहासवचनानि कामस्तम्भनार्थं, ततो नखाग्रपाता नखक्षतदतक्षतताडनादय कामयुद्धनिरूपका । तत्स्थाने स्थित काम तैरुद्बोध्य ते । यथा सेनाबधेन राजा समायाति ॥ क्ष्वेलि क्ष्वेलिका प्रस्तोभनादि तत्पूर्वकाण्येवावलोकनानि हसितानि रसस्थापकानि । एव द्वादशविधोपि कामो द्वादशागेषु स्थित प्रवृद्धो भवति । तदाह—व्रज सुंदरी णामुत्तभयन्निति । सयुक्त कामो रतिपति, वियुक्तस्त्वग्निरूप । एवमाधिदैविक काममुद्बोधयन् रमयाचकार । गोपीना सुखमेव प्रकटितवान्, नतु कामातेन विरतिमुत्पादितवान् ॥ ४६ ॥

४ एव संयोगशृगारमुपपाद्य विप्रयोगमुपपादयितु तासा मानमाह—एवमिति । पूर्वोक्तप्रकारेण भगवत सर्वरसदानसमर्थात् कृष्णात् सदानदात् फलरूपाल्लब्धकामा प्राप्तमनोरथा सत्य आत्मानमेव पूर्णं मेनिरे, नतु भगवतं पूर्णं तेन वा स्वपूर्णताम् । ननु भगवानेव कथं कृतवान् ? न्यूना एव कथ न सरक्षिता ? तत्राह—महात्मन इति । भगवान् महानेवात्मा नद्यगाधे जले प्रविष्टमग्नो भवति घटो वा

प्रार्थयिष्यति तदा रसं दास्याम' ' इत्यभिमानयुक्ता जाता इत्यर्थः ॥ ४७ ॥ तासा गोपीना स पूर्वोक्तश्चासौ सौभगमदः सौन्दर्याभिमानश्च त वीक्ष्य तथा तत्प्रयुक्तमानमस्वाधीनत्व वीक्ष्य केशवः कृष्णः प्रशमाय गर्वविनाशाय तत्र पुलिन एवान्तरधीयत अन्तर्हितवान्। गर्वनाशप्रयोजनमाह–प्रसादायेति। गर्वस्यानन्दतिरोधायकत्वात्तस्मिन् सति तस्याभिव्यक्तिर्न स्याद्गर्वनिरासेन परमानन्दमनुभावयितुमित्यर्थः । केशवपदेन को ब्रह्मा, ईशो रुद्रः, तावपि वशयतीति तस्य गोपीवशीकरण कियदिति सूचितम् ॥ ४८ ॥ इति श्रीवल्लभाचार्य–वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र तामसरोधवर्णने ॥

तासां तत्सौभगमद वीक्ष्य मानं च केशव' ॥ प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥ ४८ ॥
इति श्रीमद्भा॰ महा॰ दश॰ तामसनिरोधनिरूपणप्रकरणेऽन्तर्धाननिरूपणं नामैकोनत्रिंशोऽध्याय ॥ २९ ॥

॥ श्रीशुक उवाच ॥

अन्तर्हिते भगवति सहसैव व्रजाङ्गना' ॥ अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ १ ॥

ऊनत्रिंशो गतो वृत्तिमन्तर्धाननिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ त्रिंशे विरहतप्ताभिर्गोपीभिर्गहने वने। अन्तर्हितस्य कृष्णस्य मार्गण विनिरूप्यते ॥ १ ॥ एव सहसैव अकस्मादेव झटिति भगवति कृष्णेऽन्तर्हिते सति तमचक्षाणाः अपश्यन्त्यो व्रजाङ्गना अतप्यन् इत्यन्वयः। तत्र दृष्टान्त-

---

आपूर्णो भवति। किच आत्मान स्त्रीणा मध्ये अभ्यधिक मेनिरे। भुवि चाप्यधिक भुवि स्त्रीणा मध्ये वा। अत एव मानिन्योपि जाता । न ह्यस्मत्सदृश्योऽन्या सति अतोऽस्मान् यदि प्रार्थयिष्यति तदा रस दास्याम इति मानयुक्ता जाता । भगवद्धर्मास्तासु समागता । तथा सति यथा प्रार्थनया पूर्वं भगवान् वशो जात एव वयमपि भविष्याम इति। रसार्थमेवैव भाव , नतु दोषरूप भगवद्भावात् ॥ ४७॥

१ भगवास्तु ऐक्येनैव रस प्रयच्छन् बहिस्तिरोहितो जात इति आह–तासामिति। मान पूर्णतया च न दोषाय स्त्रीषु भूमौ च यदाधिक्यज्ञान दोषो भवति तदनूद्य तत्परिहारार्थं तिरोहित इत्याह। तासा तत्प्रसिद्धि पूर्वोक्त सर्वोत्तमत्वलक्षण सौभाग्यमद वीक्ष्य तस्य मदस्य प्रशमाय अतरधीयत। ननु भगवद्रमणेन हि तासामेव भाव । अत स्वकृत एवेति कथ तिरोधान कृतवानित्याशक्याह–वीक्ष्य मान च प्रसादाय तत्रैवान्तरधीयतेति। मानापनोदन कर्तव्य मानस्त्वान्तर अशक्यो हि बहिरपनोदनार्थं यत्न करोति। चकारात्स्वधर्मं च। अत प्रसादाय प्रथमत तासा पश्चात्स्वस्य च तत्रैव गोपिकास्तु यूथमध्ये वा अतर्धान प्राप्तवान्। ननु ' एतद्द्वयमपि न कर्तव्यमुपेक्षिता । कुतो नेति चेत् ' तत्राह–केशव इति। यथा रजोगुण ब्रह्मणो निवार्य तस्मै मुक्ति दत्तवान्। यथा वा शिवस्य तमोगुण निवार्य ॥ एवमेतासामपि मद मान च निवार्य मुक्ति दातु तथा कृतवानित्यर्थ । कायिकतिरोभावोऽय प्रथमाधिकारित्वाद्गोपीनाम् ॥ ४८ ॥ श्रीमद्वल्लभाचार्यकृता सुबोधिनी ।

२ " स्वानदस्थापनार्थाय लीला भगवता कृता ॥ स बाह्यो जनित पुष्टो यथाऽतर्निविशेत्पुन ॥ १ ॥ गर्वाभावाश्च तत्रादौ निरुप्यते क्रमात् त्रय ॥ उद्देशतो लक्षणत फलतश्च यथा यथम् ॥ २ ॥ सप्तविंशे तिरोधानाल्लीलान्वेषणतत्परा ॥ रसमतर्गत चक्रुर्गोपिका इति रूप्यते " । इति सुबोधिनीकारिका ।

माह—यूथप गजराजमपश्यन्त्य करिण्यो यथा तप्यन्ति तथेति ॥ १ ॥ एव वियोगेन सन्तप्तानामपि तासा तदेकपरतामाह—गत्येत्यादिभि । प्रमदा गोप्यो रमापतेः कृष्णस्य तास्ता विविधाश्चेष्टाः पूतनापयःपानादिलीला जगृहु' कृतवत्यः । ' अन्यस्य तस्य लीलाकरणमन्याभिस्ताभि कथ सम्भवति ? ' इत्यपेक्षायामाह—तदात्मिका इति । प्राप्ततदभेदाभिमाना इत्यर्थः । तत्रापि हेतुमाह—तस्य गत्यादिभिराक्षिप्तानि आकृष्टानि चित्तानि यासा ताः । अनुरागः प्रेम स्मितं च ताभ्या विभ्रमेक्षितानि सविलासनिरीक्षणानि तैर्मनोरमा आलापाश्च विहाराः क्रीडाश्च विभ्रमाः अन्याश्च विविधाः मीहिकाश्चेष्टाः तैः ॥ २ ॥ उक्तमेव स्पष्टयति—गतिस्मितेति । कृष्णस्य प्रिया अबला गोप्यस्त्वसौ कृष्णोहमेवेति न्यवेदिषुः परस्पर न्यवेदितवत्यः । तत्र हेतुमाह—कृष्णस्येव विहारविभ्रमाः क्रीडाविलासा यासा ता इति । तत्र हेतुमाह—तदात्मिका इति । तत्रापि हेतुमाह—प्रियस्य कृष्णस्य

**गत्यानुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः ॥ आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिका ॥ २ ॥ गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तय ॥ असावह त्वित्यबलास्तदात्मिका न्यवेदिषु' कृष्णविहारविभ्रमाः ॥ ३ ॥ गायन्त्य उच्चैरमुमेव सहता विचिक्युरुन्मत्तकवद्वनाद्वनम् ॥ पप्रच्छुराकाशवदन्तर बहिर्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥ ४ ॥ दृष्टो व कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मन ॥ नन्दसूनुर्गतो हृत्वा प्रेमहासावलोकनै ॥ ५ ॥**

गत्यादिषु प्रतिरूढा आविष्टा मूर्तयश्चेतासि यासा ता इति ॥ ३ ॥ किञ्च गायन्त्य इति । सहता मिलिताः सत्य उच्चैर्गायन्त्यः वनाद्वनान्तर गच्छन्त्योऽमु श्रीकृष्णमेव उन्मत्तकवद्विचिक्युरमृगयन् । उन्मत्ततुल्यत्वमेव स्पष्टयति—पप्रच्छुरिति । आकाशवत् सर्वभूतेषु चराचरेषु बहिरन्तर्व्याप्य सन्तं वर्तमानम्, अत एव पुरुष पूर्णमपि श्रीकृष्णं वनस्पतीन् पप्रच्छुरित्यन्वयः ॥ ४ ॥ प्रश्नमेव प्रपञ्चयति—नवभिः । तत्र ' महत्त्वादेते पश्येयुः ' इत्याशयेनाश्वत्थादीन् पृच्छन्ति—दृष्ट इति । हे अश्वत्थादयः ! वो युष्माभि' कच्चिन्नन्दसूनुर्दृष्टः ? । ' किमर्थ पृच्छथ ' इत्यपेक्षायामाहुः—प्रेमहासविलसितैरवलोकनैर्नोऽस्माक मनो हृत्वा चोर इव गत इति ॥ ५ ॥

---

१ " शब्दो हि धूमवल्लोके बाह्यातरसमागत ॥ विराजते विनिर्गच्छस्तारतम्य च गच्छति ॥ १ ॥ अतोऽत्र धर्मिधर्माणामाधिक्याज्ज्ञानमुत्तमम् ॥ यथा भगवतो ज्ञानात् स्वयमागत्य संगता ॥ २ ॥ एव स्वय भगवता आगत्यार्थ जगु स्फुटम् ॥ क्रमिकत्वात्तु भावस्य मिलिताश्च स्वतोऽभ्यत ॥ ३ ॥ ततो विशेषविज्ञानात्तिरोभावोऽस्फुरत्स्फुट ॥

एव प्रश्नेऽपि तदुत्तरमलब्ध्वा 'एते महान्तः स्वपुष्पैर्बहूपकारिणश्च, अतो वदेयु.' इत्याशयेन कुरबकादीन् पृच्छन्ति—कच्चिदिति। हे कुरबकादयः ! रामानुजः कृष्ण इतः अनेन मार्गेण गत कच्चित् ?।' किमर्थ पृच्छथ ?' इत्यपेक्षायामाहुः—मानिनीना गर्ववतीनामस्माकं दर्पहर स्मित यस्य स'। स्मितेन गर्व हत्वा चोर इव गत इत्याशयः। अनेन यदि गर्वो दूरीकर्तव्यस्तर्हि स्मितमात्रेणैव स दूरीकर्तव्य., किमन्तर्धानेनेति तस्याल्पत्वमपि सूचितम् ॥ ६ ॥ तेभ्योऽप्युत्तरमलब्ध्वा तुलसीं पृच्छन्ति— कच्चिदिति । उत्तरार्थमादरेण तद्भाग्यमभिनदन्त्यः सम्बोधयन्ति—कल्याणीति । भाग्यातिशये हेतुं सूचयन्त्यः सम्बोधयन्ति—गोविन्दचरणप्रिये इति। हे तुलसि ! अलिकुलैः सह त्वा त्वा बिभ्रत् अच्युतः कृष्णः कच्चित्त्वया दृष्टः ?। ' अवश्य त्वया दृष्टः स्यात् ' इत्याशयेनाह—ते तवातिप्रिय इति ॥ ७ ॥ ततोऽप्युत्तरमसम्प्राप्य ' इय सौभाग्येन गर्विता सपत्नी कथ वदेत् ? इमाः साधारण्यो वक्ष्यन्ति '

कच्चित् कुरबकाशोकनागपुन्नागचम्पका· ॥ रामानुजो मानिनीनामितो दर्पहरस्मित· ॥ ६ ॥
कच्चित्तुलसि कल्याणि गोविन्दचरणप्रिये ॥ सह त्वाऽलिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युत ॥ ७ ॥
मालत्यदर्शि व कच्चिन्मल्लिके जाति यूथिके ॥ प्रीतिं वो जनयन् यातः करस्पर्शेन माधव ॥ ८ ॥
चूतप्रियालपनसासनकोविदारजम्ब्वर्कबिल्वबकुलाम्रकदम्बनीपा· ॥ येऽन्ये परार्थभविका
यमुनोपकूला· शसन्तु कृष्णपदवीं रहितात्मनां न· ॥ ९ ॥

इत्याशयेन पृच्छन्ति—मालतीति। हे मालत्यादयः ! वो युष्माभिः कच्चित् माधव· कृष्णः अदर्शि दृष्टः ? पुष्पग्रहणार्थं कराभ्यां स्पर्शेन वो युष्माक प्रीतिं जनयन् कच्चित् यातः गतः ?। माधवपदोपादानेन लक्ष्मीपतित्वात् सौन्दर्यातिशय सूचयन्त्यस्तत्प्रश्ने हेतुरपि सूचितः ॥ ८ ॥ ततोप्युत्तरमलब्ध्वा ' फलादिभिः सर्वप्राणिसन्तर्पका एते वदेयुः ' इत्याशयेन पृच्छन्ति—चूतेति । चूताम्रयोः कदम्बनीपयोश्चावान्तरभेदो द्रष्टव्यः। हे चूतादयः ! येऽन्ये च परार्थभविका· परार्थमेव भवो जन्म येषा ते यमुनोपकूला यमुनाकूलसमीपे वर्तमाना वृक्षास्तीर्थवासिनो वा, ते भवन्तो रहितात्मना कृष्णाकृष्टत्वेन शून्यचेतसा नोऽस्माक कृष्णपदवीं कृष्णप्राप्तिमार्ग शसन्तु कथयन्तु ॥ ९ ॥

१ ' अज्ञत्वम् ' इति ख—पुस्तकपाठ । २ ' येऽन्येपरार्थभवका ' इति पाठातरमपि साप्रदायिकम् । ३ ' मधुराम्लप्रकृतिको चूताम्रो ' सुबोधिनी । ४ दयार्थमेतदुक्त भवति ।

तेभ्योऽप्युत्तरमसम्प्राप्य 'यत्रकुत्राप्यस्तु, परतु पृथिव्या सह वियोगासम्भवात् सर्वोपकारिणी चेयमेव प्रष्टव्या' इत्याशयेन पृच्छन्ति—कि त इति। क्षिति हे क्षिते! ते त्वया कि तपः कृतम्? तत्तपस आश्चर्य सूचयन्ति—बतेति। अत्युग्रतपश्चरणे ज्ञापकमाहु.। केशवस्य कृष्णस्याङ्घ्रिस्पर्शेन उत्सवो यस्यास्तथाभूता विभासि। तत्रापि ज्ञापकमाहुः—अङ्गरुहैर्हरिततृणादिभिरुत्पुलकिता रोमाञ्चिता विभासि शोभसे इति। तत्र विशेष पृच्छन्ति—अपीति। किमय—मुत्सवः अङ्घ्रिसम्भवः इदानीं तवैकदेशतदङ्घ्रिस्पर्शसम्भूतः? यद्वा उरुक्रमविक्रमात् पूर्वमेव त्रिविक्रमस्य पदा सर्वाक्रमणात्? आहो अथवा नैतावत्, अपि तु ततोपि पूर्वं वराहावतारस्य तस्य वपुषः परिरम्भणेनेति। अतस्त्वयि तत्कृपातिशयात्त्वया नून स दृष्टः स्यात, त प्रदर्शय इति भाव.॥ १०॥ ततोऽप्युत्तर-मसम्प्राप्य हरिण्या दृष्टिप्रसादस्य कृष्णदर्शनजन्यत्व सम्भाव्य ता पृच्छन्ति—अपीनि। 'त्वया वञ्चन न कार्यम्' इत्याशयेन सम्बोधयन्ति—हे सखि हरि-णपत्नि! वो युष्माक दृशा स्वगात्रैर्मनोहरमुखबाह्वादिभिः सुनिर्वृति सुख वितन्वन् अच्युत. कृष्णः प्रियया राधिकया सह इहोपगतः प्राप्तोऽपि किम्?।

कि ते कृत क्षिति तपो बत केशवाङ्घ्रिस्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ॥ अप्यङ्घ्रिसम्भव उरुक्रमवि-
क्रमाद्वा आहो वराहवपुष· परिरम्भणेन ॥ १० ॥ अप्येणपत्न्युपगत प्रिययेह गात्रैस्तन्वन् दृशां सखि
सुनिर्वृतिमच्युतो वः ॥ कान्ताङ्गसङ्गकुचकुङ्कमरञ्जितायाः कुन्दस्रज कुलपतेरिह वाति गन्ध ॥ ११ ॥
बाहु प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकुलैर्मदान्धै ॥ अन्वीयमान इह वस्तरव
प्रणामं कि वाऽभिनन्दति चरन् प्रणयावलोकै· ॥ १२ ॥ पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पते· ॥
नून तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो! ॥ १३ ॥

प्रियया सहेति यदुक्तं तत्र द्योतकमाहु.— कान्तेति। इह अत्र कुलपतेः गोकुलपते. श्रीकृष्णस्य कान्ताया अङ्गसङ्गेन आलिङ्गनेन तत्कुचकुङ्कमेन रञ्जि-तायाः कुन्दकुसुमस्रजो गन्धः वाति आगच्छति॥ ११॥ फलभारेण नतास्तरून् दृष्ट्वा 'कृष्ण दृष्ट्वा प्रणता' इति मत्वा पृच्छन्ति—बाहुमिति। हे तरव·! दक्षिणपाणिना गृहीत लीलापद्म येन सः, तुलस्या मोदमदेन अन्धैस्तुलसिकायाः अलिकुलैरन्वीयमानः अनुगम्यमानः रामानुजः श्रीकृष्णः प्रियाया असे स्कन्धे वाम बाहुमुपधाय इह विचरन् प्रणयसहितैरवलोकै. वो युष्माक प्रणाम किमभिनन्दतीत्यन्वयः॥ प्रियायामासक्तावभिनन्दनाभावस्यापि सम्भवादेव प्रश्नः ॥ १२ ॥ काप्युत्तरमसम्प्राप्य काश्चिदाहु—हे सख्यः! इमा लता. पृच्छत। 'एताः कथ जानन्ति?' इत्यपेक्षायामाहु·—वनस्पते· स्वपतेर्बाहून् स्कन्धानाश्लिष्टा अप्येता नून निश्चित तस्य कृष्णस्य करजै पुष्पावचय कुर्वतो नखै स्पृष्टाः, यत. उत्पुलकानि बिभ्रति। स्वपतिस्पर्शमा-त्रेण पुलकासम्भवादित्याशय.॥ तासा भाग्यस्याश्चर्य सूचयन्ति—अहो इति ॥ १३ ॥

उन्मत्तकवत् पप्रच्छुरित्येतत् प्रपञ्चितमनुवदन् 'तास्ता विचेष्टा जगृहुः' इति यदुक्त तत् प्रपञ्चयति—इत्येवमुन्मत्तस्येव वचासि यासा ताश्च ता गोप्यश्च ता' कृष्णान्वेषणेन कातरा अतिविह्वलास्तदात्मिकास्तदभेदाभिमानवत्यश्च सत्यश्च तास्ता भगवतो लीला अनुचक्रुः अनुकृतवत्यः ॥ १४ ॥ हीति निश्चये। पूतनायन्त्याः पूतनावदाचरन्त्याः कृष्णवदाचरन्ती स्तनमपिबत्। तोकायित्वा शिशुवदात्मान कृत्वा रुदन्ती सती अन्या गोपी शकटवदाचरन्तीं गोपीं पदाऽहन् तताड। आचरण चात्र किञ्चिच्छरीरचेष्टया, किञ्चिद्वचनमात्रेण, किञ्चिन्नामात्रेण च बोध्यम् ॥ १५ ॥ दैत्यायित्वा तृणावर्तदैत्यवदात्मान कृत्वा एका कृष्णार्भभावना कृष्णस्यार्भ बाल्य भावयति या तामन्या जहार। घोषाः किङ्कण्यस्तासा निःस्वनैः सहितौ अङ्घ्री कर्षन्ती

इत्युन्मत्तवचो गोप्य· कृष्णान्वेषणकातरा· ॥ लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिका ॥ १४ ॥
कस्याश्चित् पूतनायन्त्या· कृष्णायन्त्यपिबत् स्तनम् ॥ तोकायित्वा रुदत्यन्या पदाऽहन् शकटायतीम् ॥ १५ ॥
दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम् ॥ रिङ्गयामास काऽप्यङ्घ्री कर्षन्ती घोषनि·स्वनै ॥ १६ ॥
कृष्णरामायिते द्वे तु गोपायन्त्यश्च काश्चन ॥ वत्सायती घ्नन्ती चान्या तत्रैका तु बकायतीम् ॥ १७ ॥
आहूय दूरगा यद्वत् कृष्णस्तमनुवर्ततीम्[3] ॥ वेणु क्वणन्ती क्रीडन्तीमन्या शसन्ति साध्विति ॥ १८ ॥

काचित् रिङ्गयामास जानुपाणिना चचाल ॥ १६ ॥ द्वे तु गोप्यौ कृष्णरामायिते कृष्णरामवत् जाते, काश्चन गोप्यो गोपायन्त्यो गोपबालवज्जाता·। तत्र तासु गोपीषु मध्ये वत्सायतीं वत्सासुरवदारन्तीमन्या कृष्णवद्वर्तमाना घ्नन्ती जाता। चकारात् कपित्थानि च पातयामास। तथा एका तु कृष्णरूपा बकायतीं बकासुरवदाचरन्तीं घ्नन्ती जाता॥ १७ ॥ यद्वत् यथा कृष्णो गाः आह्वयति तथा दूरगाः दूरे वर्तमाना गाः आहूय तं कृष्णमनुवर्ततीं अनुवर्तमानाम् 'अनुकुर्वतीम्' इति पाठान्तरम्, अन्याः गोपबालभावनायुक्ताः साधुसाध्विति शसन्ति प्रशशसुः। तदनुकरणमेव दर्शयति—वेणु क्वणन्तीं क्रीडन्तीमिति ॥ १८ ॥

१ श्रीशुक उवाचेति क–ख पुस्तकयोरस्ति अथवेति पूर्वोक्तमुन्मत्तवच एतावादिति सु०। २ 'हति' इति पाठातरम्। ३ 'अनुकुर्वतीम्' इति पाठ।

काचित्तु तन्मनाः कृष्णाभेदाभिमानयुक्ता कस्याचित् स्वभुजमन्यस्या भुजे निधाय प्रचलन्ती पादन्यास कुर्वती, ननु सम्बोधने, 'हे सख्यः ! अह कृष्णः मम ललिता सुदरा गति पश्यत' इत्याहेत्यन्वयः ॥ १९ ॥ काचित्तन्मनाः "वातवर्षाभ्या मा भैष्ट भय मा कार्ष्ट, यतः तत् ताभ्या वातवर्षाभ्या त्राण रक्षण मया विहितम्" इत्युक्त्वा यतन्ती प्रयत्न कुर्वती एकेन हस्तेन अम्बरमुत्तरीय वस्त्रमुन्निदधे वितत्य ऊर्ध्वं धृतवतीत्यर्थ. ॥ २० ॥ हे नृप ! एका कृष्णवद्वर्तमाना पदा शिरस्याक्रम्य आरुह्य अपरा ता कालियवद्वर्तमाना प्रति 'हे दुष्ट अहे ! गच्छ इतो ह्रदात् अपसर' इत्याहेत्यन्वयः। ननु 'त्वद्भयात् कुतो गच्छेयम् ?' तत्राह— जात इति। ननु निश्चयेन खलानां परोद्वेजकानां दण्धधृक् दण्डार्थमेवाह जातोस्मि। तथाच मदाज्ञोल्लङ्घनेनात्र स्थितौ खलत्वात्त्व मया दण्डितो भविष्यसीत्याशयः॥ २१ ॥ तत्र गोपीषु मध्ये एका कृष्णवद्वर्तमाना गोपवद्वर्तमानाः प्रति 'हे गोपाः ! उल्बण भयङ्कर दावाग्नि पश्यत' आशु चक्षूषि अपिदध्व निमीलयत, वो युष्माक क्षेम निर्भयत्वमहमञ्जसा अनायासेनैव विधास्ये करिष्यामि' इत्युवाचेत्यन्वय· ॥ २२ ॥ तत्र गोपीषु काचित्

कस्यांचित् स्वभुज न्यस्य चलन्त्याहापरा ननु ॥ कृष्णोऽहं पश्यत गतिं ललितामिति तन्मना· ॥ १९ ॥
मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया ॥ इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम् ॥ २० ॥
आरुह्यैका पदाक्रम्य शिरस्याहापरां नृप ॥ दुष्टाहे गच्छ जातोऽह खलानां ननु दण्डधृक् ॥ २१ ॥
तत्रैकोवाच हे गोपा दावाग्नि पश्यतोल्बणम् ॥ चक्षूंष्याश्वपिदध्व वो विधास्ये क्षेममञ्जसा ॥ २२ ॥
बद्धाऽन्यया स्रजा काचित्तन्वी तत्र उलूखले ॥ भीता सुदृक् पिधायास्य भेजे भीतिविडम्बनम् ॥ २३ ॥
एव कृष्णं पृच्छमाना वृन्दावनलतास्तरून् ॥ व्यचक्षत वनोद्देशे पदानि परमात्मन· ॥ २४ ॥
पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः ॥ लक्ष्यन्ते हि ध्वजाम्भोजवज्राङ्कुशयवादिभि· ॥ २५ ॥

तन्वी कोमलाङ्गी कृष्णवद्वर्तमाना अन्यया यशोदावद्वर्तमानया स्रजा मालया नवनीतचौर्यनिमित्तेन बद्धा, अत एव भीता, सुदृक् शोभने दृशौ नेत्रे यस्मिस्तत् आस्य मुख पिधाय हस्ताभ्यामाच्छाद्य भीतिविडम्बनं भयानुकरण भेजे चकार ॥ २३ ॥ एव श्रीकृष्णलीलाः कुर्वत्यः पुनश्च वृन्दावनलतास्तरूंश्च कृष्ण पृच्छन्त्यो वनोद्देशे वनप्रदेशे परमात्मनः कृष्णस्य पदानि भूमौ रजसि चिह्नतयोद्बुद्धानि व्यचक्षत अपश्यन् ॥ २४ ॥ तानि दृष्ट्वा च परस्परमूचुस्तदाह— पदानीति। महात्मन उदारचित्तस्यात्ममनोरथपूरकस्य नन्दसूनोरेतानि पदानि इति व्यक्त निश्चितम्। एवानिश्चये हेतुमाहुः—लक्ष्यन्ते

१ 'सुदरतराम्' इति पाठान्तरम्।

इति।हि यस्मात् ध्वजादिभिर्लक्ष्यन्ते चिह्नितानि दृश्यन्ते इति।आदिशब्दादन्येषा चक्रादीना ग्रहणम्।ध्वजादीना धारणस्थान तत्प्रयोजन चोक्त स्कान्दे— दक्षिणस्य पदाङ्गुष्ठमूले चक्र बिभर्त्यज. । तत्र नम्रजनस्यारिषड्वर्गच्छेदनाय सः १ । मध्यमाङ्गुलिमूले च धत्ते कमलमच्युतः । ध्यातृचित्तद्विरेफाणा लोभनायातिशोभनम् २ । पद्मस्याधो ध्वज धत्ते सर्वानर्थजयध्वजम् ३ । कनिष्ठामूलतो वज्र भक्तपापाद्रिभेदनम् ४ । पार्ष्णिमध्येऽङ्कुश भक्तचित्तेभवशकारिणम् ५ । भोगसम्पन्मय धत्ते यवमङ्गुष्ठपर्वणि ६ । ॥ तथाऽन्यान्यपि चिह्नानि वैष्णवतोषण्यामुक्तानि । तथाहि— अङ्गुष्ठतर्जनीसन्धिमारभ्य यावदर्धचरणमूर्ध्वरेखा ७ । चक्रस्य तले छत्रम् ८ । अर्धचरणतले चतुर्दिगवस्थित स्वस्तिचतुष्टयम् ९ । स्वस्तिकचतुःसन्धिषु जम्बूफलचतुष्टयम् १० । स्वस्तिकमध्ये अष्टकोणम् ११ । इत्येव दक्षिणचरणे एकादश चिह्नानि ॥ तथा वामपादाङ्गुष्ठमूले भक्तोन्मुख दरम् । सर्वविद्याप्रकाशाय दधाति भगवानसाविति १ । मध्यमामूले वरमन्तर्बाह्यमण्डलद्वयात्मकम् २ । तदधः कार्मुक विगतज्यम् ३ । तदधो गोष्पदम् ४ । तत्तले त्रिकोणम् ५ । तदभितः कलशाना चतुष्टय कचिच्चितयमित्युक्तम् ६ । त्रिकोणतलेऽर्धचन्द्रोग्रद्वयस्याष्टत्रिकोणद्वयम ७ । तदधो मत्स्यः ८ । ॥ एव वामपादेऽष्टौ मिलित्वा ऊनविंशतिः ॥ २५ ॥ एवं तैस्तैर्ध्वजादिचिह्नितैः पदैस्तस्य कृष्णस्य पदवीं स्थितिमन्विच्छन्त्यो अन्वेषयन्त्योऽबला गोप्यः

तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ॥ वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥ २६ ॥
कस्याः पदानि चैतानि याताया नन्दसूनुना ॥ असन्यस्तप्रकोष्ठाया करेणोः करिणा यथा ॥ २७ ॥

अग्रतः कस्याश्चिद्वध्वाः पदैः सुपृक्तानि अन्तरान्तरा सम्मिलितानि तत्पदानि विलोक्य आर्ताः अतिदुःखिताः सत्यःसमब्रुवन् परस्परमूचुः।तस्याश्च वामचरणे अङ्गुष्ठतले यव. १ । तत्तले चक्रम् २ । तत्तले छत्रम् ३ । तत्तले वलयम् ४ । अङ्गुष्ठतर्जनीसन्धिमारभ्य यावदर्धचरणमूर्ध्वरेखा ५ । मध्यमातले कमलम् ६ । तत्तले सपताको ध्वजः ७ । तत्तले पुष्प वल्ली च ८,९ । कनिष्ठातलेऽङ्कुशः १० । पार्ष्णावर्द्धचन्द्रः ११ । एव इत्येकादश दक्षिणचरणे ॥ अङ्गुष्ठमूले शङ्ख. १ । तत्तले गदा २ । कनिष्ठातले वेदिः ३ । तत्तले कुण्डलम ४ । तत्तले शक्तिः ५ । तर्जन्याद्यङ्गुलितले पर्वत. ६ । तत्तले रथः ७ । पार्ष्णौ मत्स्य ८ । इत्यष्टौ मिलित्वैकोनविंशतिः ॥ २६ ॥ तद्वाक्यान्येवाह— कस्या इत्यादिभिः सार्द्धैरष्टभिः । करिणा सह गच्छन्त्याः करेणोरिव नन्दसूनुना सह याताया. तेनासे स्कन्धे न्यस्त स्थापित प्रकोष्ठो यस्यास्तस्या कस्या एतानि पदानि ? ॥ २७ ॥

तस्या राधयति आराधयति इति राधेति नामनिरुक्तिमाहुः— अनयेति । अनया कृष्णेन सहागतया नून निश्चयेन हरिः भक्तदु·खहर्ता ओराधित । दुःखहरणे सामर्थ्यमाहुः—ईश्वर इति । तत्र हेतुमाहुः— भगवानिति । 'कुत एतज्ज्ञातम्?' इत्यपेक्षायामाहुः— यदिति । यत यस्मात् नोऽस्मान् विहाय प्रीतः सन् गोविन्दो या रह एकान्तमनयत् । न त्वन्यनारीणामेव तेन सह विहार सुलभ· सुकर इत्याशयः ॥ २८ ॥ तत्र काश्चिदाहु·—धन्या इति। विश्वासार्थ सम्बोधयन्ति—आल्यः हे सख्यः! अमी गोविन्दस्य अङ्घ्रिरेवाब्जं तद्रेणव· अहो धन्याः सर्वपुरुषार्थप्रदाः । तत्र ज्ञापकमाहुः—यानिति। यान् रेणून् अघनुत्तये पुरुषार्थप्रतिबन्धकदोषनिवृत्तये ब्रह्मादयोऽपि मूर्ध्नि दधुः । अतोऽस्माभिरप्येतद्रजोभिषेकेण कृष्ण· प्राप्तु शक्य इत्याशयः ॥ २९ ॥ अन्या आहुः— भवत्वेवम्, तथापि सर्वासा गोपीना सर्वस्वमच्युताधरं कृष्णाधरामृतमेकैव अपहृत्य रहः एकान्ते या भुङ्क्ते तस्याः यत् यानि अमूनि पदानि

अनयाऽऽराधितो नूनं भगवान् हरिरीश्वरः ॥ यन्नो विहाय गोविन्द प्रीतो यामनयद्रह· ॥ २८ ॥
धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणव· ॥ यान् ब्रह्मेशो रमा देवी दधुर्मूर्ध्न्यघनुत्तये ॥ २९ ॥
तस्या अमूनि न· क्षोभं कुर्वन्त्युच्चै· पदानि यत् ॥ यैकाऽपहृत्य गोपीनां रहो भुङ्क्तेऽच्युताधरम् ॥३०॥
न लक्ष्यन्ते पदान्यत्र तस्या नून तृणाङ्कुरै· ॥ खिद्यत्सुजाताङ्घ्रितलामुन्निन्ये प्रेयसी प्रिय· ॥ ३१ ॥
इमान्यधिकमग्नानि पदानि वहतो वधूम् ॥ गोप्य· पश्यत कृष्णस्य भाराक्रान्तस्य कामिन· ॥ ३२ ॥
अत्रावरोपिता कान्ता पुष्पहेतोर्महात्मना ॥ अत्र प्रसूनावचय· प्रियाऽर्थे प्रेयसा कृत· ॥ ॥ ॥ ॥
प्रपदाक्रमणे एते पश्यतासकले पदे ॥ ३३ ॥

तानि नोऽस्माकमुच्चैः भृश क्षोभ दुःख कुर्वन्तीत्यत्वयः ॥ ३० ॥ एव विचिन्वन्त्यस्ततोऽग्रे केवल कृष्णपादरेणूनवलोक्यात्यन्त तप्यन्त्य आहुः— नेति । अत्र तस्या वध्वाः पदानि न लक्ष्यन्ते न दृश्यन्ते, अतो नून निश्चित ता प्रेयसीं तस्याः प्रियः कृष्ण उन्निन्ये स्कन्धमारोपितवानित्यन्वयः । तत्र हेतुमाहुः— तृणाङ्कुरैः खिद्यती सुजाते सुकुमारे अङ्घ्रितले यस्यास्तामिति ॥ ३१ ॥ स्कन्धारोपणे लिङ्गमाहुः— इमानीति । हे गोप्यः ' वधू वहतः कृष्णस्याधिकमग्नानि भूमावधिक प्रविष्टानि पदानि पश्यतेत्यन्वय· । अधिकप्रवेशे हेतुमाहु·—भाराक्रान्तेति । 'तथापि स्कन्धेन स्त्रीवहन कथ सम्भवति?' इत्याकाङ्क्षायामाहुः— कामिन इति ॥ ३२ ॥ पुनश्चाग्रे वध्वाः पदचिह्न दृष्ट्वाऽऽहुः—अत्रेति। महात्मना भक्तजनमनोरथपूरकात्युदारस्वभावेन कृष्णेन पुष्पहेतोः पुष्पावचयार्थमत्र कान्ताऽवरोपिता स्कन्धादवतारिता । तयोः परस्परमासक्तिमाहुः— अत्रेति । प्रेयसा कृष्णेन प्रियार्थे ता प्रियामलङ्कर्तुमत्र प्रसूना-

१ केचन राधित इति पदमिच्छन्ति व्याचक्षते च तारकादित्वादित च राधा सजातेति राधित अनया विभावमानयाऽस्मत्सख्या हरी राधित सजातराधो राधाविशिष्टो जात इति ।

नामवचयः अवतारणं कृतम् । तत्र चिह्नमाहुः– प्रपदेति । प्रपदाभ्या पादाग्राभ्यामुच्चप्रसूनावतारणार्थमाक्रमणं क्षोणीतलसम्मर्दनं ययोः, अत एव असकले अर्धलग्ने एते पदे पादौ पश्यत ॥ ३३ ॥ काश्चित्तस्याः कृष्णजान्वन्तरमुपविष्टायाः चिह्नं क्षोणीसम्मर्दनादिकमालक्ष्याहुः–केशप्रसाधनमिति । अत्र तु कामिना कृष्णेन कामिन्यास्तस्याः केशानामितस्ततो विश्लथता प्रसाधन पुनः सीमन्तसमीकरणाभ्या बन्धन कृतम् । अन्या आहुः–कान्तामधिकृत्य तानि प्रसूनानि चूडयता चूडानुकरणेन बध्नता कृष्णेनेह ध्रुव निश्चितमुपविष्टम् ॥ ३४ ॥ “ किमेवं गोपीभिः केवल सम्भावनामात्रं कृतम् ? किंवास्ति तथात्वम् ” इति सन्दिहान राजानं प्रति शुक आह– तया सह रेमे इति । ‘ तर्हि गोपीभिरुक्त कामित्वमपि सत्यमेव ’ इत्याशङ्क्याह–आत्माराम इति । तस्यामप्यवस्थाया निजानन्द एव रममाण इत्यर्थः । तत्र हेतुमाह–अखण्डित इति । स्त्रीविभ्रमादिभिरनाकृष्टचित्त इत्यर्थः । तत्रापि

केशप्रसाधन त्वत्र कामिन्याः कामिना कृतम् ॥ तानि चूडयता कान्तामुपविष्टमिह ध्रुवम् ॥ ३४ ॥
रेमे तया चाऽऽत्मरत आत्मारामोऽप्यखण्डितः ॥ कामिनां दर्शयन् दैन्य स्त्रीणां चैव दुरात्मताम् ॥ ३५ ॥
इत्येव प्रलपन्त्यस्ताश्चेरुर्गोप्यो विचेतसः ॥ यां गोपीमनयत् कृष्णो विहायान्याः स्त्रियो वने ॥ ३६ ॥
सा च मेने तदाऽऽत्मान वरिष्ठं सर्वयोषिताम् ॥ हित्वा गोपीः कामयाना मामसौ भजते प्रियः ॥ ३७ ॥

हेतुमाह– आत्मरत इति । स्वरूपानन्दलाभेनैव सन्तुष्ट इत्यर्थः ॥ आप्तसमस्तकामश्चेत् किमिति तया सह रेमे तत्राह– कामिनामिति । विषयासक्तचित्तानां दैन्य पारवश्य स्त्रीणा दुरात्मता दौर्जन्य च दर्शयन् दर्शयितुमेव तया रेमे, चकारादन्याभिश्च ॥ ३५ ॥ प्रकृतमुपसहरति– इत्येवमिति । उक्तप्रकारेण प्रलपन्त्यः प्रलापमनर्थक वचः कुर्वत्यः, ‘ दर्शयन्त्य ’ इति पाठे मिथस्तच्चिह्नानि दर्शयन्त्यो विचेतस उन्मत्तसदृशा गोप्यः विचेरुः । स्त्रीणा दुरात्मता दर्शयति–यामिति सार्धाभ्याम् । अन्याः स्त्रियो वने विहायानादृत्य या स्त्रियं कृष्णोऽनयत् सा च तदा सर्वयोषिता मध्ये आत्मानं वरिष्ठं मेने ॥ ३६ ॥ तन्मननप्रकारमेवाह– हित्वेति । कामो यानमागमनसाधन यासा ताः सर्वा गोपीर्विहायासौ प्रियो मामेव भजते अनुवर्तते, अतोऽह सर्वयोषिता श्रेष्ठेति मेने ॥ ३७ ॥

१ अर्थानुवादोऽयम् । २ ‘ इत्येव दर्शयन्त्य ’ इति पाठान्तरम् । दोषेभिमानवचन वचनोत्तरमेव च ॥ पूर्ववच्च तिरोभावो विज्ञेय दोषदर्शने ॥ २ ॥

तत एवमभिमानानन्तर वनोद्देश किञ्चिद्दूर वनप्रदेश गत्वा केशवं ब्रह्मादिनियन्तारमपि कृष्ण प्रति इतोऽग्रेऽह चलितु न पारये न शक्नोमि, 'अतो मां त्व स्कन्धादिना नय' इत्यब्रवीत्। 'क नयामि' इत्यपेक्षायामाह—यत्रेति। यत्र जिगमिषासि तत्र नयेत्यर्थः। 'कथमेव सर्वेश्वरमब्रवीत्' इत्याशङ्क्य तत्र हेतुमाह-दृप्ता स्वश्रेष्ठत्वाभिमानेन गर्वितेत्यर्थः। सर्वेश्वरमपि पति प्राप्य सर्वाराध्याया उत्तमाया अपि यद्येव दुर्बुद्धित्व तदाऽन्यासा दुर्बुद्धित्वे कः सन्देह इत्याशयः ॥ ३८ ॥ कामिना दैन्य दर्शयति—एवमिति। एवमुक्तः स भगवान् 'एव चेत्तर्हि त्वया स्कन्धमारुह्यताम्' इति ता प्रिया प्रत्याहेत्यन्वयः। सर्वेश्वरेणापि यदि कामलीलाङ्गीकृता तर्ह्येव दैन्य प्राप्तम्, काऽन्यस्य वार्ता ? परत्वखण्डितत्वात् ततस्तस्या स्कन्धारोहणोद्यताया सत्या कृष्णोऽन्तर्दधे। ततश्च सा वधूरन्वतप्यत ॥ ३९ ॥ अनुतापमेव दर्शयति—हा नाथेति। 'मयाऽनुचित कृतम्' इत्यनुताप सूचयति—हेति। 'स्वामित्वाद्दास्या मम पालनमेवो-चितम्, न त्यागः' इति सूचयन्ती सम्बोधयति—नाथेति। दासीत्वान्न मम रक्षकोऽन्योऽस्ति।'तव तु रक्षाया सामर्थ्यमस्त्येव' इत्याशयेन सम्बोधयति—महाभु-

ततो गत्वा वनोद्देश दृप्ता केशवमब्रवीत् ॥ न पारयेऽहं चलितु नय मां यत्र ते मन ॥ ३८ ॥
एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति ॥ ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत ॥ ३९ ॥
हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज ॥ दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम् ॥ ४० ॥
अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरत· ॥ ददृशु· प्रियविश्लेषमोहितां दु·खितां सखीम् ॥ ४१ ॥
तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ॥ अवमान च दौरात्म्याद्विस्मय परमं ययुः ॥ ४२ ॥

जेति। 'न चान्तर्हितः सन्नेव पालयिष्यामीति मन्तव्यम्, रमणत्वात्' इत्याशयेनाह हे रमणेति। 'त्वद्वियोगेन मन्मरणमेव स्यात्' इत्याशयेनाह-हे प्रेष्ठेति। 'मन्मरणेन तवापि दुःखमेव भविष्यति' इति सूचयन्त्याह—सख इति। व्याकुलता सूचयन्त्याह—क्वासि क्वासि? कृपणायाः त्वद्वियोगेन दीनाया मे स्वसन्निधिं दर्शय इति ॥४०॥ एव प्रियस्य विश्लेषेण मोहिता व्याकुलिता दुःखिता सखीं अविदूरतः समीपे भगवतो मार्गमन्विच्छन्त्यो मृगयमाणा गोप्यो ददृशुरित्यन्वय.। अनेन यः पूर्व सापत्न्यात् तत्सुखसम्भावनया स्वखेद उक्तः 'तस्या अमूनि नः क्षोभ कुर्वन्ति' इति, स इदानीं सखित्वाद्दुःखदर्शनेन निवृत्त इति ज्ञेयम् ॥ ४१ ॥ ततश्च माधवान्मानप्राप्तिं स्वसन्मानप्राप्तिं' लक्ष्मीपतित्वात्तत्कृतसन्मानस्य महत्त्वसूचनार्थं माधवपदमुपात्तम्, तथा आत्मनः स्वस्य दौरात्म्याद्दौर्जन्यात् हेतोरन्तर्धानेन परित्यागात्मकमवमानं च ततः प्राप्तम्, चकारात् स्वविलापदु.खादिकं च तया कथितमाकर्ण्य तस्याद्भुतचरितेन परमं विस्मयमाश्चर्यं ययुः ॥ ४२ ॥

ततश्च यावच्चन्द्रज्योत्स्नया वन विभाव्यते प्रकाश्यते तावत्तया सह गोप्यः कृष्णान्वेषणार्थमविशन् । ततोऽग्रे घनतरुच्छायाकृतेन तमसा प्रविष्ट व्याप्त वनमालक्ष्य हरेरन्वेषणात् निववृतुः निवृत्ता जाताः ॥ ४३ ॥ एवं तम.प्राप्ताना निराशया गृहगमनमाशङ्क्य 'गृहादिस्मरणमेव नासीत्, कुतस्तद्गमनम् ?' इति सहेतुकमाह—तन्मनस्का इति । तस्मिन् कृष्णे एव मनो यासा ताः, तस्यैव आलापो भाषण यासा तास्तदालापाः, यत एवंभूतास्तस्मात्तस्य कृष्णस्येव विविधाश्चेष्टा यासा तास्तद्विचेष्टा., स एवात्मा यासा तास्तदात्मिकास्तदैक्यमानवत्य तस्य गुणान् भक्तवात्सल्यादीन् गायन्त्य आत्मान देहमगार गृहम्, बहुवचनात् पतिपुत्रोपकरणादीनि च न सस्मरु· ॥ ४४ ॥ 'ततः किं जातम् ?' इत्यपेक्षायामाह—पुनरिति । समवेता. सम्मिलिताः सर्वा एव गोप्यः यत्र पूर्व कृष्णेन सङ्गतास्तदेव कालिन्द्याः पुलिन पुनरागत्य कृष्णभावना. कृष्णध्यानपरा सत्यः कृष्णमेव जगुरित्यन्वयः । तत्र

ततोऽविशन् वन चन्द्रज्योत्स्ना यावद्विभाव्यते ॥ तम· प्रविष्टमालक्ष्य ततो निववृतु· स्त्रियः ॥ ४३ ॥
तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥ तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरु· ॥ ४४ ॥
पुनः पुलिनमागत्य कालिन्द्या· कृष्णभावना· ॥ समवेता जगु· कृष्णं तदागमनकाङ्क्षिता· ॥ ४५ ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे तामसनिरोधनिरूपणप्रकरणे कृष्णान्वेषणनिरूपणं नाम त्रिंशत्तमोऽध्याय· ॥ ३० ॥ ॥ छ ॥ ॥ छ ॥ गोप्य ऊचु· ॥ जयति तेऽधिकं जन्मना व्रज· श्रयत इन्दिरा शश्वदत्र हि ॥ दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते ॥ १ ॥

हेतुमाह—तदागमन काङ्क्षितं यासा ता इति ॥ ४५ ॥ इतिश्रीवल्लभाचार्य—वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र तामसरोधवर्णने ॥ त्रिंशत्तमो गतो वृत्ति कृष्णान्वेषणनिरूपकः ॥ ३ ॥ एकत्रिंशे तु गोपीभिः कृष्णागमनकाङ्क्षया ॥ तमेव प्रार्थयन्तीभिर्यद्गीत तन्निरूप्यते ॥ १ ॥ गानमेव दर्शयति—जयतीति । 'अतिप्रियस्य तव कपटाचरणमयुक्तम्' इत्याशयेन सम्बोधयन्ति—दयितेति । ते तव जन्मना निमित्तेन व्रजो वैकुण्ठादिलोकादप्यधिक यथा भवति तथा जयति उत्कर्षेण वर्तते । हि यस्मात्तव जन्मना त्वदनुयायिनी इन्दिरा लक्ष्मी शश्वत् नित्यमत्र व्रजे श्रयते व्रजमलकृत्य वर्तते ॥ 'एव सर्वस्मिन् व्रजे मोदमाने तव दासभूतानामस्माक त्वयैवान्तर्धानेन दुःखोत्पादन न युक्तम्' इत्याशयेनाहुः—तावकास्त्वदीया गोपीजनास्त्वा दिक्षु विचिन्वते इति । नच त्वदीयत्वे सन्देह , यतस्त्वयि त्वदर्थमेव कथञ्चिद्धृता असव· प्राणा यैस्ताः । अतस्त्वया दृश्यतामस्माक प्रत्यक्षीभूयतामिति ॥ १ ॥

‘त्वयि धृतासव’ इत्यनेन ‘तव दर्शनविनाऽस्माक मरण भविष्यति’ इति सूचितम्। ‘तत्र मरण भवतु, मम को दोष’ इत्याशङ्क्याहु -शरदिति। शरत्कालीनो योऽयमुदाशयः पुष्करिणी तत्र साधु सम्यक् प्रकारेण जात यत सत् सुविकसित सुन्दर सरसिज कमल तस्योदरे या श्रीः शोभा ता मुष्णातीति हरतीति तिरस्करोति या दृक् तया दृशा नेत्रेण अशुल्कदासिका अमूल्यदासीर्नो निघ्नतः प्राणापहारेण मारयतस्ते तव त्वया क्रियमाण इह लोकेऽय कि वधो न भवति ? कि शस्त्रेणैव वधो भवति ? दृशा वधो न भवति ? किंतु भवत्येव, अतोऽस्मज्जीवनार्थं दृश्यतामित्याशयः। ननु ‘किमर्थं मूल्यविनापि दास्यमङ्गीक्रियते ?’ ‘सुरतार्थम्’ इत्याशयेन सम्बोधयन्ति—सुरतनाथेति। ‘मयेमा रस्यथ क्षपाः’ इति दत्तवरस्य ‘तवेदानी तत्प्रतिषेधेन मारणमत्यन्तमनुचितम्’ इत्याशयेन पुनः सम्बोधयन्ति—वरदेति ॥ २ ॥ “यदि वय मारणीयास्तर्हि पूर्वं किमिति बहुभ्यः आपद्भ्यो रक्षितवानसि ? पूर्वरक्षितानामिदानीं दृशा मन्मथप्रेरणेन मारणमनुचितमेव” इत्याशयेनाहु.—विषेति। ‘तत्रापि सत्यप्रतिज्ञस्य श्रेष्ठस्यैतदत्यन्तमनुचितम्’ इत्याशयेन सम्बोधयन्ति—ऋषभेति। विषजल यत् कालि-

शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा ॥ सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह कि वध· ॥ २ ॥

विषजलाप्ययाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात् ॥ वृषमयात्मजाद्विश्वतो भयादृषभ ते वयं रक्षिता मुहु ॥ ३ ॥

न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक् ॥ विखनसाऽर्थितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले ॥ ४ ॥

यहृदजल तस्मात् योऽप्ययो नाशस्तस्मात, व्यालराक्षसात् अघासुरात्, इन्द्रकृताद्वर्षात्, मारुतात्, वैद्युतानलात् विद्युत्पातजादग्नेः, वृष· अरिष्टस्तस्मात, मयात्मजात् व्योमासुरात, विश्वतोऽन्यस्मादपि सर्वतो भयात् कालियदमनादिभिर्मुहुः पुनःपुनस्त्वया वय रक्षिता· स्म· । अत्रारिष्टव्योमवधस्य भावित्वेऽपि तज्ज्ञान श्रुत्यवतारत्वात् ॥ ३ ॥ ऋष्याद्यवताररूपा गोप्य एव ‘सर्वसाक्षिणस्तवाग्रे कि बहु वक्तव्यम् ?’ इत्याशयेनाहु·— नेति । खलुशब्दोऽवधारणे । ‘सकलजगत्पालनार्थमवतीर्णस्य तव स्वाश्रितास्मदुपेक्षा न युक्ता’ इत्याशयेन सम्बोधयन्ति—हे सखे इति । भवान् गोपिकानन्दनो यशोदासुतो नैव भवति । किंत्वखिलदेहिना सर्वप्राणिना योऽन्तरात्मा अन्त.करण त पश्यतीति तथा साक्ष्येव । ‘तस्य कथ जन्म’ इत्यपेक्षायामाहु.— विखनसा ब्रह्मणा प्रार्थित· सन् विश्वपालनाय सात्वता यादवाना कुले उदेयिवान् स्वेच्छया त्वमवतीर्णोऽसि, नतु प्राकृतवत् कर्मवशाज्जात इत्यर्थः ॥ ४ ॥

‘ तस्मात्त्वद्भक्तानामस्माकमभिमतमेतच्चतुष्टय सम्पादय ’ इत्याहुः—विरचितेति चतुर्भिः । ‘ महत्कुलोत्पन्नत्वेनापि तवास्मदार्तिहरण युक्तम् ’ इत्याशयेन सम्बोधयन्ति—हे वृष्णिधुर्येति । तव करसरोरुह नोऽस्माक शिरसि धेहि स्थापय । ‘ तेन कि फलम् ? ’ इत्यपेक्षाया ‘ त्वद्दर्शनादिजनितकामतापनिवृत्तिरेव ’ इत्याशयेन पुनः सम्बोधयन्ति—कान्तेति । ‘ तापनिवर्तकत्व तस्य स्वाभाविको धर्म ’ इति सरोरुहपदेन सूचितम् । ‘ केषा तापनिवृत्तिर्दृष्टा’ इत्याशयेनाहुः—ससृतेर्भयात् चरणमीयुषा शरणागताना भक्ताना विरचित दत्तमभय येन तदिति । ‘ न केवल तापनिवर्तकम्, किंतु मनोरथपूरक च । तेनास्मन्मनोरथ पूरय ’ इत्याशयेनाहुः—कामदमिति । ‘ कि तत्र ज्ञापकम् ’ इत्यपेक्षाया ‘ सर्वमनोरथपूरिकाया लक्ष्म्या अपि प्रभावस्त्वत्स्वीकारादेव ’ इत्याशयेनाहुः—श्रीकरग्रहमिति ॥ ५ ॥ ‘ विशेषतः सकलव्रजजनानामार्तिनिरासायावतीर्णस्य तवास्मदार्तिहरणमावश्यकम् ’ इति सूचयन्त्य सम्बोधयन्ति—व्रजजनार्तिहन्निति । आर्तिहरणसामर्थ्य सूचयन्त्यः पुन. सम्बोधयन्ति—वीरेति । ‘ युष्माक गर्व एव महान् दोषः, अत एव तन्निरासायान्तर्हितोऽस्मि ’ इति चेत् ‘ निजजनाना स्मयो गर्वस्त ध्वसयतीति तथाभूत स्मित यस्य तेन त्वया स्मितमात्रेणैव गर्वो निरसनीय., न त्वन्तर्धानस्य प्रयोजनमस्ति ’ इत्याश-

विरचिताभय वृष्णिधुर्य ते चरणमीयुषां संसृतेर्भयात् ॥ करसरोरुहं कान्त कामदं शिरसि धेहि न. श्रीकरग्रहम् ॥ ५ ॥
व्रजजनार्तिहन् वीर योषितां निजजनस्मयध्वसनस्मित ॥ भज सखे भवत्किङ्करी' स्म नो जलरुहाननं चारु दर्शय ॥ ६ ॥
प्रणतदेहिनां पापकर्शन तृणचरानुगं श्रीनिकेतनम् ॥ फणिफणार्पित ते पदाम्बुज कृणु कुचेषु न कृन्धि हृच्छयम् ॥ ७ ॥

येन सम्बोधयन्ति—निजजनस्मयध्वसनस्मितेति । ‘ अस्मन्मरणेन तवापि दुःख भविष्यति ’ इति सूचयन्त्यः सम्बोधयन्ति—हे सखे इति । ‘ उक्तेऽर्थे न कश्चित् सन्देह ’ इत्याशयेनाहुः—स्मेति । अतोन्तर्धानेन सुतरा गर्वस्य निवृत्तत्वाद्भवतः किङ्करीः दासीर्नोऽस्मान् भज अनुवर्तस्व । ‘ का वा अनुवृत्ति. कर्तव्या ? ’ इत्यपेक्षायामाहुः—चारु मनोहर जलरुहानन मुखकमल योषितामस्माक दर्शयेति ॥ ६ ॥ किच ते पदाम्बुज नोऽस्माक कुचेषु कृणु स्थापय । तेन हृच्छय काम कृन्धि छिन्धि । ‘ पादस्थापनमात्रेण कथ कामनिरास ? ’ इत्यपेक्षाया पदाम्बुजं विशिनष्टि । ‘ तत्र सुखप्रतिबन्धकपापनिरासकत्वात् ’ इत्याशयेनाहुः—प्रणतेति । अविशेषेण प्रणताना शरणागताना देहिना पापकर्शन पापहन्तृ । कामनिरासे सामर्थ्य सूचयन्त्य आहुः—फणिन कालियस्य फणास्वर्पितमिति । एव सति क्रौर्यमाशङ्क्य सौकुमार्य सौन्दर्यसौभाग्यादिक च सूचयन्त्य आहु —श्रीनिकेतनमिति । लक्ष्म्या आश्रयभूतमित्यर्थ' । तर्हि दुर्लभत्वमाशङ्क्य तत्कृपया सुलभत्व सूचयन्त्य आहु'—तृणचरान् गवादीन् पशूनप्यनुगच्छतीति तथा तत ॥ ७ ॥

' तव कृपादृष्ट्यैव तापनिवृत्तिः, नान्यथा ' इति सूचयन्त्य. सम्बोधयन्ति– हे पुष्करेक्षणेति। 'अस्मासु स्त्रीषु वीरत्व न युक्तम् ' इत्याशयेन पुनः सम्बोधयन्ति–वीरेति। तव गिरा वाण्या विमुह्यतीर्विधिकरी. किङ्करीरिमा नः अस्मान् अधरसीधुना अधरामृतेन आप्याययस्व सञ्जीवयस्वेत्यर्थः । गिरो मोहकत्वे हेतूनाह– कोकिलादिशब्दवत् मधुरयेति। वल्गूनि मनोहराणि वाक्यानि यस्या तथेति। अस्मन्मोहकत्वे कि वक्तव्यम् ? यतो बुधाना ज्ञानिनामपि मनोज्ञया हृदयज्ञयेति ॥ ८ ॥ ननु 'युष्माक पूर्णः स्नेहो नास्ति, यतो मद्विरहे सत्यपि जीवथ ' इत्याशङ्कायामाहुः–तवेति। तव कथामृत त्वद्विरहेण सन्तप्तानामस्माकं जीवनं जीवनकारणम्। ' इत्याहु.। 'तत् कुतः प्राप्तम् ? ' इत्यपेक्षायामाहुः– ये भूरिदाः पूर्वजन्मसु बहुदत्तवन्तसुकृतिनो जनास्ते भुवि आतत विस्तृत यथा भवति तथा गृणन्ति निरूपयन्तीति। प्रसिद्धाद्देवभोग्यात् अमृतादुत्कर्षमाहुः– कविभिर्विवेकिभिरीडित स्तुतम्, देवभोग्यममृत तु तैस्तुच्छीकृत्य निन्दितम् । किञ्च कल्मषापह सर्वपापनिरासकम्, तत्त्वमृत नैवविधम्। किञ्च श्रवणमङ्गल श्रवणमात्रेण मङ्गलप्रदम्, तत्त्वनुष्ठानापेक्षम्। किच श्रीमत् सुशान्तम्, तत्तु मादकमिति ॥ ९ ॥ ' तर्हि मत्कथाश्रवणेनैव तृप्ताना युष्माक मद्दर्शनेनैव किम् ? ' इत्याशङ्क्य 'त्वद्वि-

मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ॥ विधिकरीरिमा वीर मुह्यतीरधरसीधुनाऽऽप्याययस्व न. ॥ ८ ॥
तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ॥ श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥ ९ ॥
प्रहसित प्रिय प्रेमवीक्षणं विहरण च ते ध्यानमङ्गलम् ॥ रहसि संविदो या हृदिस्पृश. कुहक नो मनः क्षोभयन्ति हि ॥ १० ॥
चलसि यद्व्रजाचारयन् पशून्नलिनसुन्दरं नाथ ते पदम् ॥ शिलतृणाङ्कुरैः सीदतीति नः कलिलतां मन' कान्त गच्छति ॥ ११ ॥

लासक्षुभितचित्तानामस्माक तावन्मात्रेण शान्तिर्नास्ति ' इत्याशयेनाहुः–प्रहसितमिति। 'प्रेमविषयस्य तव कापट्य न युक्तम् ' इति सूचयन्ति– सम्बोधनद्वयेन । हे प्रिय ! हे कुहक !। ध्यानमात्रेणापि मङ्गल परमानन्दप्रद ते प्रहसितादिक याश्च हृदिस्पृशो हृदयगमाः रहसि सविदः सङ्केतनर्माणि ताश्च नोऽस्माक मनो हि यस्मात् क्षोभयन्ति। तथा कथाश्रवणमात्रेण शान्तिर्नास्तीति शेषेणान्वयः ॥ १० ॥ किच ' त्वयि वयमतिप्रेमार्द्रचित्ताः, त्वं पुनरस्मासु केन हेतुना कपटमाचरसि ? ' इत्याशयेनाहुः– चलसीति द्वयेन। स्नेहं सूचयन्त्य' सम्बोधयन्ति हे नाथ हे स्वामिन् ! हे कान्त ! यत् यदा पशूश्चारयन् व्रजाच्चलसि तदा नलिनवत् सुन्दर कोमल ते पद शिलै. कणिशैस्तृणैरङ्कुरैश्च सीदति क्लिश्येदिति नो मनः कलिलतामस्वास्थ्य गच्छति प्राप्नोति। एवं त्वद्दुःखशङ्कितचित्ता वयम् ॥ ११ ॥

त्व तु दिनपरिक्षये सायकाले नीलकुन्तलैरावृत घनरजस्वल गोरजश्छुरित वनरुहानन अलिमालाकुलपरागच्छुरितपद्मतुल्यमानन बिभ्रत् मुहुर्मुहुर्द-र्शयन् नो मनसि केवल स्मर यच्छसि अर्पयसि, नतु सङ्ग ददासि। 'इति कपटत्व वीरस्य तव नोचितम्' इति सूचयन्त्यः सम्बोधयन्ति- वीरेति ॥ १२ ॥ 'अतोऽधुना कापट्य विहाय आविर्भूयास्मत्प्रार्थित कुरु' इत्याहु –प्रणतेति। 'अस्मन्मनोग्लानिस्त्वया निरसनीया' इत्याशयेन सम्बोधयन्ति–आधि-हन्निति। तत्र हेतु सूचयन्त्य' पुन' सम्बोधयन्ति- रमणेति। कामसन्तापनिरासाय ते तव चरणपङ्कज नोऽस्माक स्तनेष्वर्पयेत्यन्वयः। 'कथ चरणसम्बन्धेन तापनिवृत्ति' इति शङ्का पङ्कजपदेन निरस्तापि पुनस्तन्निरासकत्वे हेत्वन्तराणि सूचयन्त्यो विशिषन्ति– पद्मजेन ब्रह्मणार्चितमिति। तत्रापि हेतुमाहुः– प्रणताना काम मनोरथ ददातीति तथा तत्। धरण्या मण्डनमलङ्कारभूतम्। धरणि इति ह्रस्वमार्षम्। आपदि ध्येयमिति ध्यानमात्रेणाप्यापन्नि-वर्तकमिति। शन्तम सेवासमये एव परमानन्दजनकमित्यर्थः ॥ १३ ॥ 'अस्मासु स्त्रीष्वेतद्दानरूपमेव वीरत्व युक्तम्' इत्याशयेन सम्बोधयन्ति–वीरेति। ते तवाधरामृत नोऽस्माक वितर देहि। 'अस्माकमेतदेव परमफलरूपम्' इत्याशयेनाहुः–सुरतवर्धनमिति। सुरतसम्भोगसुख वर्धयतीति तथा तत्। शोक-

दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतम् ॥ घनरजस्वल दर्शयन् मुहुर्मनसि न· स्मरं वीर यच्छसि ॥ १२ ॥
प्रणतकामद पद्मजार्चित धरणिमण्डन ध्येयमापदि ॥ चरणपङ्कजं शन्तम च ते रमण न· स्तनेष्वर्पयाधिहन् ॥ १३ ॥
सुरतवर्धन शोकनाशन स्वरितवेणुना सुष्ठु चुम्बितम् ॥ इतररागविस्मारण नृणां वितर वीर नस्तेऽधरामृतम् ॥ १४ ॥
अटति यद्भवानह्नि काननं त्रुटिर्युगायते त्वामपश्यताम् ॥ कुटिलकुन्तल श्रीमुख च ते जड उदीक्षतां पक्ष्मकृद्दृशाम् १५

नाशनमिति। तत्र हेतुमाह–इतरेति। नृणा नृजातीनामस्माक यः इतरेषु धनपुत्रगृहलोकपरलोकादिषु पुरुषार्थेषु रागस्तस्य विस्मारकम्। 'तर्हि दुर्लभ कथ देयम्' इत्याशङ्क्य 'त्वत्कृपया जडस्यापि वेणोः सुलभम्, किमस्माकम्?' इत्याहुः– स्वरितेन नादितेन वेणुना सुष्ठु सम्यक् चुम्बित-मिति ॥ १४ ॥ किच 'क्षणमपि त्वदर्शने दुःख दर्शने च सुख दृष्ट्वा सर्वसङ्गपरित्यागेन वय त्वामुपागताः, त्व तु कथमस्मास्त्यक्तुमुत्सहसे' इति सकरुणमाहुः– अटतीति द्वयेन। यत् यदा अह्नि दिवसे भवान् कानन वृन्दावन प्रति अटति गच्छति तत्त्वामपश्यता प्राणिना त्रुटिर्युगायते तृतीय-स्कन्धे उक्तः त्रुटयाख्यः स्वल्पोऽपि कालो युगवद्भवति। एवमदर्शनदु·खमुक्तम्। यस्मादेव तस्मात् हे अच्युत! पुनश्च कथञ्चिद्दिनान्ते कुटिलाः कुन्तला· केशा यस्मिंस्तत् श्रीमत् शोभातिशययुक्त ते तव मुख उदीक्षता उच्चैरीक्षमाणाना तेषा दृशा पक्ष्मकृत् ब्रह्मा जडो मन्द एवेति सम्मतो भवति। एव निमेषमात्रमप्यन्तरमसह्यमिति दर्शनसुखमुक्तम् ॥ १५ ॥

यस्मादेव तस्मात् हे अच्युत अखण्डानन्दस्वरूप ! वयमपि पतीन् सुतान् अन्वयान् तत्सम्बन्धिनो भ्रातॄन् बान्धवाश्चातिविलङ्घ्य अनादृत्य त्यक्त्वा तेऽन्तिक त्वत्समीपमागताः । आगमने हेत्वन्तरमाहु'—गतिविदो गीतगति जानतस्तवोद्गीतेन उच्चैर्गीतेन मोहिताः कितवयोषित पत्यादिवञ्चनेन आगता योषितो रात्रौ निशि त्वामात्माराम विना को वाऽन्यस्त्यजेत्? न कोऽपि इत्यर्थः॥ १६ ॥ 'अतस्त्वया त्यक्तानामस्माक प्राक्तनत्वद्दर्शननिदानस्य हृद्रोगस्य त्वत्सङ्गत्या त्वमेव चिकित्सा कुरु' इत्याहुः—रहसीति द्वयेन । तव रहसि एकान्ते सविद साङ्केत्यचेष्टित, तद्विशिषन्ति—हृच्छयस्य कामस्य उदयो यस्मात् तत् । प्रहसितमानन च प्रेम्णा वीक्षण च श्रियो लक्ष्य. धाम स्थानभूतं बृहद्विशालमुरो वक्षश्च वीक्ष्य त्वत्सम्बन्धे अतिस्पृहा भवति । तथा मुहुः पुनःपुनश्च मनो मुह्यते मोह प्राप्नोति ॥ १७ ॥ स्वाभेद सूचयन्त्य. सम्बोधयन्ति—अङ्गेति । तव व्यक्ति. अभिव्यक्तिरवतारो व्रजस्य

पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य तेऽन्त्यच्युतागता ॥ गतिविदस्तवोद्गीतमोहिता कितवयोषित कस्त्यजेन्निशि ॥ १६ ॥ रहसि सविद हृच्छयोदय प्रहसितानन प्रेमवीक्षणम् ॥ बृहदुर श्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मन ॥ १७ ॥ व्रजवनौकसां व्यक्तिरङ्ग ते वृजिनहन्त्र्यल विश्वमङ्गलम् ॥ त्यज मनाक् च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥ १८ ॥ यत्ते सुजातचरणाम्बुरुह स्तनेषु भीता शनै· प्रिय दधीमहि कर्कशेषु ॥ तेनाटवीमटसि तद्व्यथते न कि स्वित् कूर्पादिभिर्भ्रमति धीर्भवदायुषां न ॥ १९ ॥ इति श्रीम० महा० दशम० पूर्वार्धे तामसनिरो० गोपीगीतनिरूपण नामैकत्रिंशोध्याय ॥ ३१ ॥

व्रजवासिजनस्य वनौकसा मुनीना च वृजिनहन्त्री पापनिरसनी, दुःखनिरसनी वा । तथा अलमतिशयेन विश्वस्य मङ्गल मङ्गलावहा च ॥ अतस्त्वत्स्पृहात्मना त्वत्सम्बन्धस्पृहारूढमनसा नोऽस्माक स्वजनाना हृद्रुजा हृदयरोगाणा कामादिरूपाणा यन्निषूदन विनाशक त्वत्सम्बन्धरूपमौषध तन्मनाक् ईषदपि त्यज देहीत्यन्वयः ॥ १८ ॥ अतिप्रेमधर्षिता रुदन्त्य आहु —यदिति । हे प्रिय ! ते तव यत् सुजात सुकुमार चरणाम्बुज कर्कशेषु कठिनेषु स्तनेषु भीताः सम्मर्दनशङ्किताः सत्यो वय शनैःशनैर्दधीमहि धारयेम, तेन चरणेनाटवीमटसि विचरासि, 'नयसि' इति पाठे तु अटवीं प्रति काचिदन्या वा आत्मानमेव वा नयसि तदा तत पदाब्ज कूर्पादिभिस्तीक्ष्णसूक्ष्मपाषाणादिभिः कि स्विन्न व्यथते कथ तु नाम न व्यथते इति नोऽस्माक धीर्भ्रमति चाञ्चल्य गच्छति । तत्र हेतुमाह—भवदायुषामिति । भवानेवायुर्जीवन यासा तासामित्यर्थ· ॥ १९ ॥ इति श्रीवल्लभाचार्य-वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र तामसरोधवर्णने ॥ एकत्रिंशो गतो वृत्ति गोपीगीतनिरूपक· ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥

द्वात्रिंशे गतशोकाभिर्गोपीभिर्यमुनातटे ॥ प्रादुर्भूतस्य कृष्णस्य सवादो विनिरूप्यते ॥ १ ॥ " नहि साधनसम्पत्त्या हारिस्तुष्यति कस्यचित् ॥ भक्ताना दैन्यमेवैक हरितोषणकारणम् " इति सिद्धान्तात् अन्वेषणादिसाधनसम्पत्त्या तदप्राप्ति निरूप्य इदानीं तत्सन्तोषहेतु गोपीना दैन्य निरूपयति—इतीति। हे राजन्! कृष्णदर्शने लालसा अतिस्पृहा यासा ता गोप्य इत्येवमुक्तप्रकारेण चित्रधा अनेकप्रकारेण प्रगायन्त्य' प्रलपन्त्य. वदन्त्यश्च सुस्वर यथा भवति तथा उच्चैरुरुदुरित्यन्वयः ॥ १ ॥ एव दैन्येन सन्तुष्टो भगवान् प्रादुरभूदित्याहुः—तासामिति। तासा रुदन्तीना मध्य एव शौरि कृष्ण' आविरभत्। त वर्णयति—स्मयमान प्रहसत् मुखाम्बुज यस्य स, पीताम्बरधरः, स्रग्वी मालाधारी, साक्षान्मन्मथमन्मथः जगन्मोहकस्य कामस्यापि मोहकस्वरूपधरः ॥ २ ॥ तमागत कृष्ण विलोक्य प्रीत्या उत्फुल्लदृशो विकसितनेत्राणि यासा ताः अबला' गोप्य. सर्वा युगपदेव उत्तस्थुः। तत्र दृष्टान्तमाह—तन्व इति। यथा प्राणविना तन्वः तनवः करचरणादयो मूर्च्छिताः निश्चेष्टाश्च भवन्ति पुनस्तत्प्राप्तौ सचेष्टाः सन्त्य. स्वव्यापारे प्रवर्तन्ते तथा गोप्योऽपि कृष्णविना मूर्च्छिता आसन्, पुनस्त दृष्ट्वा सव्यापारा जाता इत्यर्थ । तस्य प्राणतुल्यत्वमाह—प्रेष्ठमिति ॥ ३ ॥ उत्थितताना तासा पृथग्व्यापारानाह—काचिदिति । काचिद्गोपी मुदा हर्षेण अञ्जलिना सहतहस्तद्वयेन शौरेः कृष्णस्य कराम्बुज जग्राह । काचित्तु चन्दनेन भूषितं ' रूषितम् ' इति पाठान्तरम्, लिप्तं तस्य बाहुमात्मनोऽसे स्कन्धे दधार ॥ ४ ॥

॥ श्रीशुक उवाच ॥

इति[1] गोप्य प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा ॥ रुरुदु सुस्वर राजन् कृष्णदर्शनलालसा ॥ १ ॥
तासामाविरभूच्छौरि' स्मयमानमुखाम्बुज ॥ पीताम्बरधर. स्रग्वी साक्षान्मन्मथमन्मथ' ॥ २ ॥
त विलोक्यागत प्रेष्ठ प्रीत्युत्फुल्लदृशोऽबलाः ॥ उत्तस्थुर्युगपत् सर्वास्तन्वः प्राणमिवाऽऽगतम् ॥ ३ ॥
काचित्[3] कराम्बुज शौरेर्जगृहेऽञ्जलिना मुदा ॥ काचिद्दधार तद्बाहुमंसे चन्दनभूषितम्[4] ॥ ४ ॥

---

१ माया जवनिका दूरीकृत्य भगवान् प्रकटो जात ।

२ " एकोनत्रिंशकाध्याये प्रसाद भगवत्कृतम् ॥ रोदनात् प्राप्य तुष्टात्मा निर्णयज्ञा इतीर्यते ॥ १ ॥ नहि साधनसपत्त्या हरिस्तुष्यति कस्यचित् ॥ भक्ताना दैन्यमेवैक हरितोषणसाधनम् ॥ २ ॥ सतुष्ट सर्वदु खानि नाशयत्येव सर्वत ॥ अतो निर्णयवाक्यानि भजनार्थं न्यरूपयत् " ॥ ३ ॥ इति सुबोधिनी । ३ पूर्वमनेकविधा अपि भगवत्याविर्भूते सति सप्तविधा जाता । ४ ' रूषितम् ' इति पाठातरम् ।

काचित्तन्वी योषित् अञ्जलिना तस्य ताम्बूलचर्वितमगृह्णात् । एका तु तद्विरहेण सन्तप्ता सती तस्याङ्घ्रिकमलं कमलवत्सुकुमारं तापनाशकं चाङ्घ्रिं स्वस्तनयोरधात् ॥ ५ ॥ एका तु भृकुटिं भ्रुवमाबध्य कुटिलीकृत्य प्रेमसरम्भेण प्रणयकोपावेशेन विह्वला, अतएव सन्दष्टो दशनच्छद अधरोष्ठो यया सा, कटाः कटाक्षास्तेषामाक्षेपैः सम्पातैः घ्नन्तीव ताडयन्तीव ऐक्षत ॥ ६ ॥ अपरा तु अनिमिषन्तीभ्यां दृग्भ्यामापीतमपि सम्यग्दृष्टमपि पुनः-पुनर्जुषाणा जुषमाणा सेवमानापि नातृप्यत् । तत्र दृष्टान्तमाह—सन्त इति । तस्य चरणाम्बुजं पुनःपुनः सेवमाना अपि सन्तस्तद्भक्ता यथा न तृप्यन्ति अलंप्रत्ययं न कुर्वन्ति तथेत्यर्थः ॥ ७ ॥ काचित्तु नेत्ररन्ध्रेण तं कृष्णं हृदि कृत्य निधायोपगुह्यालिङ्ग्य नेत्रे निमील्य च पुलकानि रोमाञ्चितानि अङ्गानि यस्याः सा आनन्दव्याप्ता आनन्देन सम्प्लुता व्याप्ता योगीवाऽऽस्ते स्मेत्यन्वयः ॥ ८ ॥ ताः सर्वा गोप्यः केशवस्यालोकनं दर्शनमेव परमं उत्सवस्तेन

काचिदञ्जलिनाऽगृह्णात्तन्वी ताम्बूलचर्वितम् ॥ एका तदङ्घ्रिकमलं सन्तप्ता स्तनयोरधात् ॥ ५ ॥
एका भ्रुकुटिमाबध्य प्रेमसरम्भविह्वला ॥ घ्नन्तीवैक्षत् कटाक्षेपैः सन्दष्टदशनच्छदा ॥ ६ ॥
अपराऽनिमिषद्दृग्भ्यां जुषाणा तन्मुखाम्बुजम् ॥ आपीतमपि नातृप्यत् सन्तस्तच्चरणं यथा ॥ ७ ॥
तं काचिन्नेत्ररन्ध्रेण हृदि कृत्य निमील्य च ॥ पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसम्प्लुता ॥ ८ ॥
सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः ॥ जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥ ९ ॥
ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः ॥ व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥ १० ॥

निर्वृताः आनन्दिताः, अतस्तद्विरहजं तापं जहुः । तत्र दृष्टान्तमाह—प्राज्ञं परमात्मानं प्राप्य साक्षात्कृत्य यथा योगिजनाः । यद्वा प्राज्ञेनात्मना सम्परिष्वक्तो "न बाह्यं किञ्चन वेदनान्तरम्" इति श्रुतेः प्राज्ञं सौषुप्तं प्राप्य तदेकीभूय विश्वतैजसाद्यवस्थापन्ना जनाः यथा आध्यात्मिकादितापत्रयं जहति तद्वदित्यर्थः ॥ ९ ॥ विश्वासार्थं प्रेम सूचयन् सम्बोधयति—हे तातेति । विधूतशोकाभिस्तद्दर्शनस्पर्शादिना निवृत्ततद्विरहजन्यशोकाभिस्ताभि-र्गोपीभिर्वृतः अच्युतः, तत्र हेतुः— भगवान् ज्ञानवैराग्यादिगुणपूर्णः कृष्णः अधिकं व्यरोचत । तत्र दृष्टान्तमाह—परमपुरुषः शक्तिभि मूर्तिमती-भिर्विमलादिभिः परिवृतो यथा विरोचते तथेति ॥ १० ॥

उक्तमेव स्पष्टयति—ता इति । विभु सर्वमनोरथे समर्थः श्रीकृष्णस्ता गोपी समादाय कालिन्द्याः पुलिनमाविश्य ताभिः परिवृतो व्यरोचतेति पूर्वेणैवान्वयः । पुलिन विशिनष्टि—विकसद्भिः कुन्दैर्मन्दारैश्च सुरभिर्यो मन्दानिलस्तस्मात् षट्पदा भ्रमराः यस्मिन् तत् ॥ ११ ॥ शरत्कालीनो यो निर्मलश्चन्द्रस्तस्याशूना किरणाना सन्दोहैः समूहैर्ध्वस्त दोषाया रात्रेस्तमो यस्मिन् तत, अतएव शिव सुखकरम्, कृष्णाया यमुनाया हस्ततुल्यैस्तरलैस्तरङ्गै राचिता आस्तृता कोमला वालुका यस्मिस्तत् ॥ १२ ॥ तस्य भगवतो दर्शनेन य आह्लादस्तेन विधूता निरस्ता हृद्रुजः तद्विश्लेषजा मन पीडा यासा ता गोप्यो मनोरथस्यान्त पर्यवसान ययुः पूर्णमनोरथा जाता इत्यर्थः । तत्र दृष्टान्तमाह—श्रुतयो यथेति । श्रुतयो यथा कर्मकाण्डे तत्तत्काम्यकर्म प्रतिपादयन्त्यः पूर्णाः, ज्ञानकाण्डे त्वीश्वर प्रतिपाद्य पूर्णमनोरथा भवन्ति तथेति । 'तथाविधास्तमभजन्' इत्याह—स्वैरिति । आत्मना जीवाना बन्धवे परमोपकारिणे कृष्णाय रोदनाश्रुक्षालितैः कुचकुङ्कुमैरङ्कितैः स्वकीयैरुत्तरीयवस्त्रैरासनमचीकॢपन् रचयामासुः ।

ता. समादाय कालिन्द्या निर्विश्य पुलिन विभु. ॥ विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम् ॥११॥ शरच्चन्द्रांशुसन्दोहध्वस्तदोषातम शिवम् ॥ कृष्णाया हस्ततरलाचितकोमलवालुकम् ॥ १२ ॥ तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्त श्रुतयो यथा ययु ॥ स्वैरुत्तरीयै कुचकुङ्कुमाङ्कितैरचीकॢपन्नासनमात्मबन्धवे ॥ १३ ॥ तत्रोपविष्टो भगवान् स ईश्वरो योगेश्वरान्तर्हृदिकल्पितासन. ॥ चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपद वपुर्दधत् ॥१४॥ सभाजयित्वा तमनङ्गदीपन सहासलीलेक्षणविभ्रमभ्रुवा ॥ सस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयो संस्तुत्य ईषत्कुपिता बभाषिरे ॥ १५ ॥

॥ १३ ॥ भगवतो भक्तवात्सल्यमाह—तत्रेति । योगेश्वराणा सिद्धयोगानामन्तर्हृदि हृदयकमलमध्ये कल्पितमासन यस्य । तत्र हेतुः—ईश्वरो सर्वनियन्ता । तत्रापि हेतुः— भगवान् ऐश्वर्यादिपूर्णः । एवभूतोऽपि त्रैलोक्ये या लक्ष्मीः शोभा तस्या एकमेव पदमाश्रयभूत वपुर्दधत् बिभ्राणः सः श्रीकृष्णस्तत्र गोपीकुचकुङ्कुमाङ्कितोत्तरीयकल्पितासने उपविष्टः गोपीना परिषद्गतः सभागतस्ताभिः सभाजित सम्मानितश्च सश्चकास शुशुभे इत्यन्वयः ॥ १४ ॥ 'तत्र वने केन साधनेन सम्माननम्?' इत्यपेक्षायामाह— सभाजयित्वेति । सहासलीलेक्षणेन विभ्रमो विलासो यस्या तया भ्रुवा त कृष्ण सभाजयित्वा अनुरञ्ज्य अङ्ककृतौ स्वोरौ स्थापितौ यौ भगवतोऽङ्घ्रिहस्तौ तयोः सस्पर्शनेन सम्मर्दनेन निमित्तेन संस्तुत्य 'अहो शैत्यमहो सौकुमार्यम्' इत्यादिस्तुति कृत्वा बभाषिरे । सम्मानने हेतुमाह— अनङ्गवर्धनमिति । सम्भोगप्रदत्वादित्यर्थ ॥ भाषणे हेतुमाह—ईषत्कुपिता इति । तदन्तर्धानेन किञ्चित्कोपयुक्ता इत्यर्थ ॥ १५ ॥

तत्र भगवतो कृतज्ञता तद्वचनेनैवापादयितुकामा गूढाभिप्राया लोकवृत्तान्तमिव पृच्छन्ति— भजत इति । भो हे कृष्ण ! एके जना भजतोऽनुवर्तमानान् भजन्ति अनुवर्तन्ते । एके त्वेतद्विपर्यय कुर्वन्ति अभजतोऽपि भजन्तीत्यर्थः । अन्ये तूभयान् भजतः अभजतश्च न भजन्ति । एतत् भजता गुणदोष-फलादिक सर्व साधु सम्यक् यथा भवति तथा नोऽस्मान् प्रति ब्रूहीत्यन्वय' ॥ १६ ॥ एव पृष्टो भगवानुत्तरमाह— मिथ इति । स्नेहेन सम्बोधयति— हे सख्य इति । ये मिथो भजन्ति परस्परमुपकुर्वन्तोऽनुवर्तन्ते ते हि यस्मात् स्वार्थे स्वप्रयोजन एव एकान्तो नियत उद्यमो येषा तथाभूताः, अत-स्तेषा तत् भजन स्वार्थार्थ स्वप्रयोजनार्थमेव । नान्यथा न परार्थम् ॥ अतस्तत्र भजने तत्फल सौहृद प्रेम, धर्मो वा नोत्पद्यते इत्यर्थः ॥ १७ ॥ ये वै अभजतो भजन्ति ते करुणाः कृपालवः । करुणा तेषा भजने परोपकारे प्रवर्तिकेत्यर्थः ॥ तत्र दृष्टान्तमाह— मातापितरौ यथा कृपया पुत्रान् भजत' तथेति । हे सुमध्यमाः ! अत्र निरपेक्षभजने निरपवादो निर्बाधो धर्मो भवति। धर्मोत्पत्तौ विवादो नास्तीत्यर्थः ॥ सौहृद स्नेहश्चोत्पद्यते इत्यर्थः ॥ १९ ॥

गोप्य ऊचु' ॥ भजतोऽनुभजन्त्येक एक एतद्विपर्ययम् ॥ नोभयांश्च भजन्त्येक एतन्नो ब्रूहि साधु भो ॥ १६ ॥ श्रीभगवानुवाच ॥ मिथो भजन्ति ये सख्य स्वार्थैकान्तोद्यमा हि ते ॥ न तत्र सौहृद धर्म' स्वार्थार्थं तद्धि नान्यथा ॥ १७ ॥ भजन्त्यभजतो ये वै करुणा' पितरो यथा ॥ धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥ १८ ॥ भजतोऽपि न वै केचिद्भजन्त्यभजत कुत' ॥ आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुह' ॥ १९ ॥ नाह तु सख्यो भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्तिवृत्तये ॥ यथा-ऽधनो लब्धधने विनष्टे तच्चिन्तयाऽन्यन्निभृतो न वेद ॥ २० ॥

केचित्तु भजतोपि न भजन्ति, अभजतस्तु कुतो भजेयु' ?[1] । ते हि चतुर्विधा'—एके आत्मारामा'[2] बहिर्दर्शनरहिता., केचिदाप्तकामा[3] विषयदर्शने सत्यपि पूर्ण-कामत्वेन परभजनप्रवृत्तिरहिताः, अन्ये चाकृतज्ञा' परकृतोपकारानुसन्धानरहिताः मूर्खा., केचित्तु गुरुद्रुह'[4] निपुणा., परोपकारानुसन्धानवन्तोऽपि दुष्ट-चित्तत्वात् य स्वोपकार करोति स गुरुतुल्य. पूज्य एव, तदप्रत्युपकारेण तद्द्रोहमेव कुर्वन्तीत्यर्थ. ॥ १९ ॥ एव भगवद्वचन श्रुत्वा " न चायमात्मारामः, बहिर्दर्शनसत्त्वात् । न चायमाप्तकामः, गानेनास्मदाह्वानस्य कृतत्वात् । न चायमकृतज्ञ., चतुरशिरोमणित्वात् । अतो भजन्तीनामस्माकमुपेक्षको गुरुद्रोह्येवायामित्येतद्वचनादेव सिद्धम् " इत्यभिप्रायेणाक्षिसङ्कोचैः परस्पर गूढस्मितमुखीस्ता दृष्ट्वाह—नाहमिति । हे सख्यः ! अह तु भजतोऽपि जन्तून् न

१ अत्र त्रय पक्षा सति । २ प्रथमप्रश्नस्योत्तरमिदम् । ३ द्वितीयस्योत्तरम् । ४ तृतीयस्योत्तरम् ।

भजामि प्रत्यक्षतो निरन्तर नानुवर्ते इत्यर्थः। 'तर्हि गुरुद्रोह्येव त्वम्' इति चेन्न, मच्चिन्तनस्य परमपुरुषार्थहेतुत्वात् तदर्थान्तर्धानेन 'परमकारुणिकः परमसुहृच्चाहम्' इत्याह– अमीषामिति। मा भजता जन्तूनामनुवृत्तेरनुवर्तनस्य ध्यानरूपस्यानुवृत्तये अविच्छेदाय न तान् भजामीत्यन्वयः। एतदेव दृष्टान्तेन स्पष्टयति– यथेति। यथा अधनो निर्धनः पुमान् कदाचिल्लब्धधने विनष्टे सति तस्य धनस्य चिन्तया निभृतो व्याप्त. अन्यत् न वेद क्षुत्पिपासादिकमपि न जानाति, तथा मद्भक्तोऽपि कदाचिन्मा प्रत्यक्षतो दृष्ट्वा पुनर्मय्यन्तर्हिते सति मच्चिन्तया व्याप्तोऽन्यद्देहादिकमपि नानुसन्धत्ते इत्यर्थ॰ ॥ २० ॥ आत्मनः कृतज्ञतामाविष्कुर्वन्नुक्त कारुणिकत्वमेव स्पष्टयति– एवमिति। 'अबलाना प्रियाणा द्रोहो न युक्त' इत्याशयेन सम्बोधयति– हे अबलाः! हे प्रियाः! इति च। मदर्थं मत्प्राप्त्यर्थमुज्झिताः त्यक्ता. लोकाः युक्तायुक्तप्रतीक्षणात्, वेदा॰ धर्माधर्मानवेक्षणात्, स्वा. ज्ञातयः तत्स्नेहपरित्यागात्, याभिस्तासा वो युष्माकमप्यनुवृत्तये परोक्ष यथा भवति तथा भजतामुपकुर्वता मया तिरोहित तत्तस्मात् मा मामसूयितु दोषदृष्ट्या द्रष्टु नार्हथ न योग्या स्थेत्यन्वय.। 'प्रियाणा प्रिये दोषदर्शन न युक्तम्, इत्याशयेनाह– प्रियमिति। 'युष्माक मम प्रियत्वे तु न सन्देह' इति सूचयति–हीति।

**एवं मदर्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबला॰ ॥ मयापरोक्ष भजता तिरोहित माऽसूयितु मार्हथ तत्प्रियं प्रिया॰ ॥ २१ ॥ न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्य विबुधायुषाऽपि व॰ ॥ या माऽभजन् दुर्जरगेहशृङ्खलाः संवृश्च्यत॰ तद्वः प्रतियातु साधुना ॥ २२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे तामसनिरोधनिरूपणप्रकरणे गोपीसम्माननिरूपणं नाम द्वात्रिंशोऽध्याय॰ ॥ ३२ ॥ ॥ छ ॥**

॥ २१ ॥ एवमुक्तेऽपि तासा सन्तोषमदृष्ट्वाऽऽह– नेति। निरवद्यसंयुजा निरवद्या निष्कपटा संयुक् सयोगो भजन यासा तासां वो युष्माक स्वसाधुकृत्यं न पारये स्वीयसाधुकृत्येन प्रत्युपकार कर्तुमह विबुधायुषापि न शक्नोमि। 'कुत' इत्यपेक्षाया 'मच्चित्तस्य बहुषु प्रेमयुक्ततयाऽनेकनिष्ठत्वात् युष्मच्चित्तस्य मदेकनिष्ठत्वात्' इत्याशयेनाह– या भवत्यो दुर्जरा अजरा या गेहरूपाः शृङ्खलास्ताः संवृश्च्य नि.शेष छित्वा मा मा अभजन् तासामिति। तस्माद्वो युष्माकमेव साधुना साधुकृत्येन तत युष्मत्साधुकृत्यं प्रतियातु प्रतिकृत भवत्वित्यर्थः। युष्मत्सौशील्येनैव ममानृण्यम्, न तु मत्कृतप्रत्युपकारेणेत्याशय॰ ॥ २२ ॥ इति श्रीवल्लभाचार्य–वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र तामसरोधवर्णने। द्वात्रिंशोऽपि गतो गोपीसन्माननिरूपकः ॥ ३ ॥

त्रयस्त्रिंशे प्रहृष्टाभिः सन्तुष्टाभिः स्ववाक्यत ॥ गोपीभि सह कृष्णस्य रासलीला निरूप्यते ॥ १ ॥ इत्थ भगवत. सुपेशला. मनोहरा वाच. श्रुत्वा तस्याङ्गैः करचरणाद्यवयवैः स्पृष्टै. उपचिताः समृद्धाः आशिषो मनोरथा यासा ता गोप्यस्तद्विरहज ताप जहुरित्यन्वयः ॥ १ ॥ तत्र यमुनापुलिने स्त्रीरत्नैः उत्तमस्त्रीभिर्गोपीभिरन्वितो गोविन्दो रासक्रीडा रसस्याऽऽनन्दस्याभिव्यक्तिर्यस्मात् स रासः बहुनर्तकीयुक्तो नृत्यविशेषस्ता क्रीडामारभतेत्यन्वयः। रसोत्पादनयोग्यता सूचयन्नाह—स्त्रीरत्नैरिति। 'तथाप्यननुकूलाश्चेत् कथ रसोत्पत्तिः?' इत्याशङ्क्याह—अनुव्रतैरिति। स्ववशवर्तिभिरित्यर्थ। तत्र हेतुमाह—प्रीतैरिति। तासामपि तत्रोत्साह द्योतयन्नाह—अन्योन्यमाबद्धाः सङ्गृहीता बाहव. यैस्तैरिति ॥ २ ॥ तदेवाभिनयेन दर्शयति—

॥ श्रीशुक उवाच ॥

इत्थ भगवतो गोप्य' श्रुत्वा वाच. सुपेशला' ॥ जहुर्विरहज ताप तदङ्गोपचिताशिष ॥ १ ॥ तत्राऽऽरभत गोविन्दो रासक्रीडामनुव्रतै. ॥ स्त्रीरत्नैरन्वित प्रीतैरन्योन्याबद्धबाहुभिः ॥ २॥ रासोत्सव' सम्प्रवृत्तो गोपीमण्डलमण्डित' ॥ योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयो. ॥ प्रविष्टेन गृहीतानां कण्ठे स्वनिकट स्त्रिय. ॥ ३ ॥ य मन्येरन्नभस्तावद्विमानशतसङ्कुलम् ॥ दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम्॥४॥

रासोत्सव इत्याद्यक्षरचतुष्टयाधिकेन सार्द्धेन। तासा मण्डलरूपेणावस्थिताना द्वयोर्द्वयोर्मध्ये एकैकरूपेण प्रविष्टेन कृष्णेन कण्ठे गृहीतानामालिङ्गिताना गोपीना मण्डलैर्मण्डितः शोभमानो रासोत्सवः सम्प्रवृत्त इत्यन्वय । 'एव तस्य बहुरूपदर्शने रसाभासः स्यात' इत्याशङ्क्याह—यमिति। य कृष्ण सर्वा. स्त्रियः स्वस्वनिकटस्थ मामेवासावाश्लिष्टवानिति मन्येरस्तेन। ननु 'एकस्य कथ तथा प्रवेशः? सर्वसन्निहितत्वे वा कुतः स्वैकनिकटत्वाभिमानस्तासाम्?' इत्याशङ्क्याह—योगेश्वरेणेति। योगः अचिन्त्यशक्तिर्माया तस्या ईश्वरेण नियन्त्रा। तन्मायामोहेन तासा तथाभिमान इत्याशयः ॥ ३ ॥ यदा रासोत्सव' सम्प्रवृत्तस्तावत् तत्क्षणमेव तद्दर्शनौत्सुक्येन व्याकुलमनसा सस्त्रीकाणा देवाना विमानशतैर्नभ' सङ्कुल सङ्कीर्ण बभूवेत्यन्वयः ॥ ४ ॥

---

१ " त्रिंशत्तमे हरि प्रीता लीला कामकृतामपि ॥ इन्द्रादिदुर्लभा चक्रे स्वानन्दार्थमितीर्यते ॥ १ ॥ अस्या सर्वोपकाराय फलश्रुतिरुदीर्यते। लौकिक्यपि यदा दृष्टिस्तदा सिद्धात ईर्यते ॥ २ ॥ रसात्मकस्तु य काम सोत्यत गूढ एव हि ॥ अत शास्त्र प्रवृत्त हि तृतीयमान्तर तथा ॥ ३ ॥ अतोत्र भगवाश्चक्रे नृत्य कारितवास्तथा ॥ सर्वाङ्गेषु तु यो लीन स यथा व्यक्तता व्रजेत् ॥ ४ ॥ जल वायुश्च सामग्री भूरग्निश्च प्रजायते ॥ अत्रैव लोके प्रकम्माधिदैविकमुत्तमम ॥ ५ ॥ कामाख्य सुखमुत्कृष्ट कृष्णो भुक्ते न चापर' " इति सुबोधिनीकारिकाः।

ततस्तदा रासारम्भे देवैर्वादिता दुन्दुभयो नेदुः, तैः कृताः पुष्पवृष्टयश्च पेतु.। 'नानाविधाना पुष्पाणां भिन्ना भिन्ना बहुशो वृष्टिर्जाता' इति ज्ञापयितु बहुवचनम्। सस्त्रीकाः स्त्रीभि सहिताः गन्धर्वपतय. भगवत्समाजे साधारणगन्धर्वगानस्य रसविशेषाजनकत्वात्तत्र योग्या विश्वावसुप्रभृतयो गन्धर्वश्रेष्ठास्तस्य भगवतः अमल श्रोत्रादिजनाना सकलमलनिवर्तक यशो जगुरित्यन्वयः ॥ ५ ॥ एव बाह्यगीतवाद्यादिकमुक्त्वा नृत्यमध्ये एव रसोपयोगिवादित्राण्याह—वलयानामिति। सप्रियाणा कृष्णसहिताना योषिता गोपीना ये वलयादयः तेषा तुमुल. सङ्कीर्णः शब्दो रासमण्डले अभूत्। वलयानि हस्तभूषणानि। नूपुराणि पादभूषणानि। किङ्किण्यः कटिभूषणानि ॥ ६ ॥ तत्र रासमण्डले हैमाना सुवर्णरचिताना मणीना द्वयोर्द्वयोर्मध्ये महामरकतो नीलमणिरचितादिभि स्वर्णवर्णाभिः श्यामस्वरूपो भगवान् देवकीसुतः अतीव शुशुभे। यद्वा गोपीदृष्ट्यभिप्रायेण मध्यपदावृत्ति विनैवैकवचनम् ॥ ७ ॥ 'यथा ताभिर्भगवानतिशुशुभे तथा तेन ता अपि विरेजुः' इत्याह—पादन्यासैरिति। पादन्यासैः पादविक्षेपैः, भुजविधुतिभिः

ततो दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टय· ॥ जगुर्गन्धर्वपतय सस्त्रीकास्तद्यशोऽमलम् ॥ ५ ॥
वलयानां नूपुराणां किङ्किणीनां च योषिताम् ॥ सप्रियाणामभूच्छब्दस्तुमुलो रासमण्डले ॥ ६ ॥
तत्रापि शुशुभे ताभिर्भगवान् देवकीसुत· ॥ मध्ये मणीनां हैमानां महामरकतो यथा ॥ ७ ॥
पादन्यासैर्भुजविधुतिभि· सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटै कुण्डलैर्गण्डलोलै· ॥ स्विद्यन्मुख्य
कबररशनाग्रन्थयः कृष्णवध्वो गायन्त्यस्त तडित इव ता मेघचक्रे विरेजुः ॥ ८ ॥ उच्चैर्जगुर्नृत्यमाना
रक्तकण्ठ्यो रतिप्रियाः ॥ कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥ ९ ॥

करचालनैः, स्मितेन सहितैः भ्रुवा विलासैश्च, भज्यद्भिर्भज्यमानैर्मध्यै. कटिभागैः, चलैः कुचै. पटैश्च, गण्डेषु लोलैश्चञ्चलै· कुण्डलैश्चोपलक्षिता· स्विद्यन्मुख्यः स्विद्यन्ति स्वेदमुद्गिरन्ति मुखानि यासा ताः। कबरेषु कचेषु रशनासु च दृढा ग्रन्थयो यासा ताः। यद्वा तेषु तासु च अग्रन्थयो निर्मुक्तग्रन्थयो गायन्त्यस्ताः कृष्णवध्वः कृष्णप्रिया गोप्यो मेघचक्रे मेघसमूहे तडित इव विरेजुः। तत्र बहुरूपधरः कृष्णो मेघचक्रमिव, तास्तु बहुविधास्तडित इव, स्वेदस्तुषार इव, गीत गर्जितमिवेति यथासम्भवमूह्यम् ॥ ८ ॥ नृत्यमानाः नृत्यन्त्यस्ता उच्चैर्जगुः। तद्गीतस्याद्भुतत्व सूचयन्नाह—रक्तकण्ठ्य इति। नानारागैरनुरञ्जितकण्ठ्य इति। गाने हेतुमाह—कृष्णस्याभिमर्शेन सस्पर्शेन मुदिता इति। पुनश्च तस्य रतिः प्रीतिरेव प्रिया यासा ता इति। तत्प्रीत्यर्थं जगुरित्याशयः। तद्गानस्योच्चत्वमाह—येन गीतेनेद विश्वमावृत व्याप्तमासीदिति। यद्वा तद्गीतस्य प्रसिद्धत्वमाह—यद्गीतेन लोकनिबद्धगाथादिना इदानीमपि विश्वमावृतमस्ति इति ॥ ९ ॥

काचिद्गोपी मुकुन्देन कृष्णेन सम सह अमिश्रिता कृष्णोन्नीताभिरसङ्कीर्णा. स्वरजाती. उन्नीतवती तदा प्रीयता प्रीयमाणेन तेन कृष्णेन 'साधु साधु' इति वचनेन सा पूजिता सम्मानिता जाता । तदान्या काचिद्गोपी तदेव जात्युन्नयनमेव ध्रुव ध्रुवाख्य तालविशेष कृत्वोन्निन्ये, तस्यै गोप्यै पूर्वगोपीतोऽपि कृष्णो मानमादर बह्वदात् । गानविद्याया चेय पूर्वतोप्यातिनिपुणा ॥ स्वराश्च—" षड्जर्षभौ च गान्धारो मध्यम· पञ्चमस्तथा ॥ धैवतश्च निषादश्च सर्वे स्युः श्रुतिसम्भवा. ॥ मयूरचातकछागक्रौञ्चकोकिलदर्दुराः ॥ मातङ्गश्च क्रमेणाह स्वरानेतान् सुदुर्लभान् " इत्युक्ता ज्ञेयाः । तेषा जातिभेदाश्च बहवो गानशास्त्रतो ज्ञेयाः ॥ १० ॥ एव नृत्यगीतादिना श्रीकृष्णसम्मानिताना तासामतिप्रीतिविलसित वृत्तान्तमाह—काचिदिति । श्लथन्ति हस्ताभ्या वलयानि, शिरसः मल्लिकाकुसुमानि च यस्याः सा । तत्र हेतुमाह—रासेन परिश्रान्तेति । एवभूता काचिद्गोपी स्वपार्श्वस्थस्य गदाभृतः कृष्णस्य स्कन्ध स्वबाहुना

काचित् सम मुकुन्देन स्वरजातीरमिश्रिता ॥ उन्निन्ये पूजिता तेन प्रीयता साधु साध्विति ॥ तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥१०॥ काचिद्रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः ॥ जग्राह बाहुना स्कन्ध श्लथद्वलयमल्लिका ॥ ११ ॥ तत्रैकांऽसगतं बाहुं कृष्णस्योत्पलसौरभम् ॥ चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥ १२ ॥ कस्याश्चिन्नाट्यविक्षिप्तकुण्डलत्विषमण्डितम् ॥ गण्ड गण्डे सन्दधत्या अदात्ताम्बूलचर्वितम् ॥ १३ ॥ नृत्यन्ती गायती काचित् कूजन्नूपुरमेखला ॥ पार्श्वस्थाच्युतहस्ताब्ज श्रान्ताऽधात् स्तनयो· शिवम् ॥ १४ ॥ गोप्यो लब्ध्वाऽच्युतं कान्त श्रिय एकान्तवल्लभम् ॥ गृहीतकण्ठ्यस्तद्दोर्भ्या गायन्त्यस्त विजह्रिरे ॥ १५ ॥

जग्राहेत्यन्वय· ॥ ११ ॥ तत्र तासा मध्ये एका गोपी असगत स्वस्कन्धे निहितमुत्पलस्य सौरभमिव सौरभं यस्य त चन्दनेनाऽऽलिप्त कृष्णस्य बाहुमाघ्राय हृष्टानि पुलकितानि रोमाणि यस्यास्तथाभूता सती चुचुम्बेत्यन्वय· । तद्भाग्यस्याश्चर्य सूचयति—हेति ॥ १२ ॥ नाट्येन नृत्येन विक्षिप्तयोश्चञ्चलयोः कुण्डलयोस्त्विषेण त्विषा मण्डित शोभमानं स्वगण्ड कपोल कृष्णगण्डे सन्दधत्या. संयोजयन्त्याः कस्याश्चिद्गोप्या· कृष्णस्ताम्बूलचर्वितमदात् ॥ १३ ॥ काचित्तु कूजन्ती नूपुरे मेखला च यस्या. सा नृत्यन्ती गायती च अत एव श्रान्ता सती शिव श्रान्तिनिवर्तक सुखकर पार्श्वस्थस्याच्युतस्य एव स्त्रीसमूहे स्थितावपि ज्ञानवैराग्यादिगुणच्युतिरहितस्य कृष्णस्य हस्ताब्ज स्वस्तनयोरधात् ॥ १४ ॥ श्रियो लक्ष्म्याः एकान्तवल्लभमतिप्रियमच्युत कृष्ण कान्त पति लब्ध्वा तस्य दोर्भ्या गृहीताः कण्ठा यासा ता गोप्यस्तमेव गायन्त्यो यथेष्ट विजह्रिरे ॥ १५ ॥

एव विश्रान्ताना पुनः रासः प्रवृत्तस्तमाह—कर्णोति । कर्णोत्पलैः कर्णावतसैश्च अलकविटङ्कैः अलकालङ्कृतैः कपोलैश्च घर्मैः स्वेदबिन्दुभिः वक्त्रे श्री शोभा यासा ता', घोषाः किङ्किण्यः । वलयनूपुरैः तद्घोषैरन्यैश्च वाद्यैर्वादित्रैरुपलक्षितैः स्वकेशेभ्यः स्रस्ताः स्रजो यासा ता गोप्य., भ्रमरा अपि गायकाः यस्या तस्या रासगोष्ठ्या राससभाया भगवता सम सह ननृतुरित्यन्वयः । 'स्वकेशस्रस्तस्रज' इत्यनेन तालगतिसन्तुष्टा. केशाः सशिरःकम्पाः पादेषु पुष्पवृष्टिमिवाकुर्वन्निति उत्प्रेक्षितम् ॥ १६ ॥ एव यथा गोप्यो नानाविभ्रमैर्भगवता सह विजन्हुस्तथा रमेशो लक्ष्मीशो भगवान् अपि परिष्वङ्गादिभिर्नानाविलासैर्व्रजसुन्दरीभिः सह रेम इत्यन्वयः । परिष्वङ्ग आलिङ्गनम्, कराभिमर्शः करेण स्तनोर्वादीना स्पर्शः, स्निग्धेक्षण सानुरागावलोकनम्, उद्दामविलास हासः । चुम्बनादिभिः परिष्वङ्गादिभिश्च क्रीडन् क्रीडामकुर्वन्नित्यर्थः । एव रमणे तस्यापि मोहासक्त्यादिदोषमाशङ्क्य तन्निराकुर्वन् दृष्टान्तमाह— यथेति । स्वप्रतिबिम्बैर्विभ्रम' क्रीडा यस्य सोऽर्भको यथा स्वालङ्कारवस्त्राद्यलङ्कृतै' प्रतिबिम्बै सह रमते तथा भगवानपि स्वीयमेव सर्वकला-

कर्णोत्पलालकविटङ्ककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यै ॥ गोप्य' समं भगवता ननृतुः स्वकेशस्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥ १६ ॥ एव परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दामविलासहासै ॥ रेमे रमेशो व्रजसुन्दरीभिर्यथाऽर्भक' स्वप्रतिबिम्बविभ्रम ॥१७॥ तदङ्गसङ्गप्रमुदाकुलेन्द्रिया' केशान् दुकूल कुचपट्टिका वा ॥ नाञ्ज प्रतिव्योढुमल व्रजस्त्रियो विस्रस्तमालाभरणा' कुरूद्वह ॥ १८ ॥ कृष्णविक्रीडित वीक्ष्य मुमुहु' खेचरस्त्रिय' ॥ कामार्दिता' शशाङ्कश्च सगणो विस्मितोऽभवत् ॥ १९ ॥

कौशल सौगन्ध्यलावण्यमाधुर्यादि च तासु सञ्चार्य स्वयमाप्तकामोऽपि तासा स्वभक्ताना मनोरथपूरणाय ताभिः सह रेमे । परन्तु बालस्याज्ञत्वान्मोहोऽपि भवति, भगवतस्तु सर्वज्ञत्वान्न मोहादिरित्यन्वय ॥ १७ ॥ 'तास्तु भगवतो विलासैर्मोहिता बभूवुः' इत्याह— कृष्णेति । विश्वासार्थं सम्बोधयति-कुरूद्वहेति । तस्य भगवतोऽङ्गसङ्गेन प्रकृष्टा या मुत् हर्षस्तया आकुलानि अवशानीन्द्रियाणि यासा ता., अतएव विस्रस्ता माला आभरणानि च यासा ता व्रजस्त्रिय' विश्लथद्बन्धान् केशादीन् अञ्जसा अनुसन्धानपूर्वक प्रतिव्योढु यथापूर्व धर्तु नाल समर्था न बभूवुरित्यर्थः ॥ १८ ॥ न केवल व्रजस्त्रिय एव मुमुहुः, किन्तु एव कृष्णविक्रीडित वीक्ष्य कामेनार्दिताः पीडिता. खेचराणा देवाना स्त्रियोपि मुमुहुः । तथा सगण. शुक्राङ्गारकगुर्वादिगणसहित शशाङ्कश्चन्द्रश्च तद्वीक्ष्य विस्मितोऽभवत् आश्चर्य प्राप । अनेन विस्मितेन शशाङ्केन स्वगतौ विस्मृताया तत. प्राक्तना. सर्वेपि ग्रहास्तत्र-तत्रैव स्थिता , ततश्चातिदीर्घासु रात्रिषु यथासुख विजन्हुरिति सूचितम् ॥ १९ ॥

एव समुदिताना विहारमुक्त्वा पृथग्विहारमाह— कृत्वेति । " कात्यायनि महामाये महायोगिन्यधीश्वरि ॥ नन्दगोपसुत देवि पतिं मे कुरु ते नमः " इति प्रत्येक ताभिः प्रार्थनात् भगवतापि " याताबला व्रज सिद्धा मयेमा रस्यथ क्षपाः " इति तथैव प्रतिश्रुतत्वात् यावती· यावत्यो गोपयोषितः लीलया अनायासेनैवात्मान तावन्तं तावत्सङ्ख्याक कृत्वा सः सकलशास्त्रतात्पर्यगोचरः सर्वाराध्यो भगवान् ऐश्वर्यादिगुणपरिपूर्णः, अत एवात्मारामोऽपि तासा मनोरथानुसारेण कृपयैव प्रत्येक ताभिः सह रेम इत्यन्वयः ॥ २० ॥ कृपातिशयमेव स्पष्टयति—एव तासामिति । ' लीलारहस्यश्रवणे त्वमधिकारी ' इति सूचयन् सम्बोधयति— अङ्गेति । अतिविहारेण श्रान्ताना तासा गोपीना प्रस्विन्नानि वदनानि स करुणः कृपावान् कृष्णः शन्तमेन निरतिशयसुखकरेण पाणिना प्रेम्णा प्रामृजत् परिमृष्टवान् ॥ २१ ॥ ततोऽतिहृष्टाना गोपीना चरितमाह— गोप्य इति । तस्य भगवतः कररुहैर्नखैः स्पर्शेन प्रमोदो

कृत्वा तावन्तमात्मान यावतीर्गोपयोषितः ॥ रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया ॥ २० ॥
तासामतिविहारेण श्रान्तानां वदनानि स ॥ प्रामृजत् करुण· प्रेम्णा शन्तमेनाङ्ग पाणिना ॥ २१ ॥ गोप्य· स्फुरत्पुरटकुण्डलकुन्तलत्विङ्गण्डश्रिया सुधितहासनिरीक्षणेन ॥ मान दधत्य ऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदा· ॥ २२ ॥ ताभिर्युत· श्रममपोहितुमङ्गसङ्गघृष्टस्रज· स कुचकुङ्कुमरञ्जिताया ॥ गन्धर्वपालिभिरनुद्रुत आविशद्वा· श्रान्तो गजीभिरिभराडिव भिन्नसेतु· ॥ २३ ॥

यासा ताः गोप्यः स्फुरता पुरटस्य सुवर्णस्य कुण्डलाना कुन्तलाना च त्विषा गण्डेषु या श्रीः तया सुधितेन अमृतायितेन हासयुक्तनिरीक्षणेन च ऋषभस्य भर्तुः कृष्णस्य मान विदधत्यः सन्मानं कुर्वन्त्यः पुण्यानि श्रवणकीर्तनादिपराणां पापनिवर्तकानि कृतानि तत्कर्माणि जगुरित्यन्वय· ॥ २२ ॥ अथ तस्य ताभि· सह जलक्रीडामाह— ताभिरिति द्वयेन । तासामङ्गसङ्गेन घृष्टा सम्मर्दिता या स्रक् तस्या स्रज· अतएव तासा कुचकुङ्कुमेन रञ्जिताया· सम्बन्धिभिर्गन्धर्वपालिभिः गन्धर्वपाः गन्धर्वपतय इव गायन्तो ये अलयस्तैरनुद्रुतः अनुगतः, विहारेण श्रान्तः श्रममपोहितुमपाकर्तुं ताभिर्युतः स कृष्णो वार्जलमाविशत् । तत्र दृष्टान्तमाह— गजीभिरिति । भिन्नसेतु· विदारितवप्र· इभराट् गजश्रेष्ठो यथा गजीभिः सह श्रमनिरासार्थं जल प्रविशति, तथातिक्रान्तलोकमर्यादो भगवानपि ताभि· सह जलमाविशदित्यर्थः ॥ २३ ॥

हे अङ्ग राजन् ! प्रहसतीभिर्युवतीभिरितस्ततः सर्वत. अलं अतिशयेन परिषिच्यमान· प्रेम्णेक्षितः कुसुमवर्षिभिर्वैमानिकैरीड्यमानः स्तूयमानः स्वय स्वरति· आत्मारामोऽपि गजेन्द्रस्य लीलेव लीला यस्य स भगवानम्भसि रेम इत्यन्वय· ॥ २४ ॥ जलस्थलक्रीडे दार्शते। वनक्रीडा दर्शयति—ततश्चेति। जलक्रीडानन्तर जलस्थलप्रसूनाना गन्धो यस्मिस्तेनानिलेन जुष्टानि व्याप्तानि दिशा तटानि अन्ता यस्मिंस्तस्मिन् यमुनाया उपवने मृगाणा प्रमदानां च गणैरावृतः कृष्णश्चचारेत्यन्वयः । तत्र दृष्टान्तमाह— यथेति । मदधारास्रावो द्विरदो मतगजो यथा करेणुभिर्वृतो वने विचरेत्तथेति ॥ २५ ॥ रासक्रीडा निगमयति—एवमिति। एवमुक्तप्रकारेण स कृष्णः शरदि भवा· काव्येषु कथ्यमाना ये रसास्तेषामाश्रयभूतास्ता. सर्वा एव निशाः सिषेवेत्यन्वयः। तासु सर्वास्वैव क्रीडितवानित्यर्थः। तासा रसाश्रयत्वे हेतुमाह— शशाङ्कश्चन्द्रस्तस्यांशुभिः किरणैः विराजिता उज्ज्वलीकृता इति। तासु बह्वीषु रात्रिषु रमणे हेतुमाह—अनुरत. प्रीतियुक्तोऽबलागणो यस्मिन्निति। तासा सर्वासा मनोरथपूरणार्थ रेम इत्याशय । 'तर्हि तासु पुत्राद्युत्पत्तिः स्यात्,'

सोऽम्भस्यलं युवतिभि· परिषिच्यमान प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग ॥ वैमानिकैः कुसुमवर्षिभिरीड्यमानो रेमे स्वय स्वरतिरत्र गजेन्द्रलील· ॥ २४ ॥ ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे ॥ चचार भृङ्गप्रमदागणावृतो यथा मदच्युद्द्विरद· करेणुभि ॥ २५ ॥ एवं शशाङ्कांशुविराजिता निशाः स सत्यकामोऽनुरताबलागण· ॥ सिषेव आत्मन्यवरुद्धसौरत. सर्वा· शरत्काव्यकथारसाश्रया· ॥ २६ ॥
राजोवाच ॥ संस्थापनाय धर्मस्य प्रशमायेतरस्य च ॥ अवतीर्णो हि भगवानंशेन जगदीश्वर· ॥ २७ ॥
स कथ धर्मसेतूनां वक्ता कर्ताऽभिरक्षिता ॥ प्रतीपमाचरद्ब्रह्मन् परदाराभिमर्शनम् ॥ २८ ॥ ॥ ॥ ॥

इत्याशङ्क्याह—आत्मन्येवावरुद्धसौरतश्चरमधातुर्नतु स्खलितो यस्य सः इति कामविजय उक्तः। तत्र सामर्थ्यमाह-सत्यकाम इति। सत्यसङ्कल्प इत्यर्थ । ॥ २६ ॥ एव रासलीला श्रुत्वा तत्र विरोधमाशङ्क्य राजा पृच्छति—संस्थापनायेति त्रिभि । धर्मस्य सस्थापनाय इतरस्याधर्मस्य प्रशमाय निरासाय च· अंशेन बलरामेण सह भगवान् कृष्णः अवतीर्ण. । अत्र "धर्मसस्थापनार्थाय सम्भवामि युगे युगे" इत्यादिशास्त्रप्रसिद्धि सूचयति- हीति । धर्मरक्षाया हेतु सामर्थ्य च सूचयन्नाह—जगदीश्वरेति । जगतः पालकत्वात् स्वामित्वान्नियन्तृत्वाच्चेत्याशय. ॥ २७ ॥ सर्वज्ञत्व सूचयन् सम्बोधयति- ब्रह्मन्निति । स कृष्णो धर्मसेतूना धर्ममर्यादानां वक्ता उपदेशेन प्रवर्तकः, कर्ता स्वयमप्यनुष्ठाता, विरोधिनिरसनेनाभितो रक्षिता च सन् परदाराभिमर्शन परस्त्रीसम्भोगात्मक प्रतीप धर्मप्रतिकूलमधर्म कथमाचरत् कृतवान् ? ॥ २८ ॥

एवं धर्ममर्यादोल्लङ्घनेन निन्दितकर्माचरणमनाप्तकामस्यैव दृष्टम् । यदुपति. कृष्णस्त्वाप्तकामः पूर्णमनोरथः, अतः किमभिप्रायः ? केनाभिप्रायेणैतज्जुगुप्सित परदारसम्भोगात्मक निन्दित कर्म कृतवानित्यन्वयः । 'उक्तेऽर्थे न सन्देह ' इति सूचयति—'वै' इति । 'भगवदुपासनालक्षणव्रतानिष्ठत्वात्तव न किञ्चिदविदितम्' इत्याशयेन सम्बोधयति—हे सुव्रतेति । नोऽस्माक श्रोतॄणा सशयमिम छिन्धि निराकुरु ॥ २९ ॥ कैमुत्यन्यायेन भगवति शङ्कित दोष परिहर्तु सामान्यतो महता वृत्तान्तमाह—धर्मव्यतिक्रम इति । ईश्वराणा समर्थाना प्रजापतीन्द्रसोमविश्वामित्रादीना धर्मव्यतिक्रमो धर्ममर्यादोल्लङ्घन साहसं परदाराभिमर्शनाद्यर्थ हठात्प्रवृत्तिरूप च दृष्टम्, परतु तेषा दोषाय पापाय न भवति । तत्र हेतुमाह—तेजीयसामिति । अतितेजस्वित्वेन कर्मास्पर्शित्वादित्यर्थ. । तत्र दृष्टान्तमाह—वन्हेरिति । विष्ठादिसर्वममेध्य प्रदहतोऽपि वन्हेर्यथा तद्दोषसम्बन्धोऽपि न भवति तथेत्यर्थः । ॥ ३० ॥ ननु "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति न्यायेन श्रेष्ठाचरितत्वात् 'अन्योऽपि तदाचरेत्' इत्याशङ्क्याह—नैतदिति । अनीश्वरः कर्मपरवश-

आप्तकामो यदुपति· कृतवान् वै जुगुप्सितम् ॥ किमभिप्राय एतं न सशयं छिन्धि सुव्रत ॥ २९ ॥

॥ श्रीशुक उवाच ॥

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ॥ तेजीयसां न दोषाय वह्ने सर्वभुजो यथा ॥ ३० ॥

नैतत् समाचरेज्जातु मनसाऽपि ह्यनीश्वर· ॥ विनश्यत्याचरन् मौढ्याद्यथाऽरुद्रोऽब्धिज विषम् ॥ ३१ ॥

ईश्वराणां वच· सत्य तथैवाऽऽचरित क्वचित् ॥ तेषां यत् स्ववचोयुक्तं बुद्धिमांस्तत् समाचरेत् ॥ ३२ ॥

स्तेजोहीनो जातु कदाचिदपि एतच्छास्त्रविरुद्ध मनसापि नाचरेत् तच्चिकीर्षामपि न कुर्यादित्यर्थ । विपर्यये बाधकमाह—विनश्यतीति । हि यतो मौढ्यात् अज्ञत्वात् ईश्वरत्वाभिमानमात्राच्छास्त्रविरुद्धमाचरन्ननीश्वरो विनश्यति । तत्र दृष्टान्तमाह—यथेति । अरुद्रो रुद्रव्यतिरिक्त. अनीश्वर. अब्धिज विष भक्षयन् विनश्यति तथेत्यर्थ· । रुद्रस्तु परमेश्वरत्वात् जनोपकाराय भक्षितवान्, न तेन तस्य किमपि वैगुण्य जातमित्याशयः ॥ ३१ ॥ 'कथ तर्हि सदाचारस्य प्रामाण्यम् ?' इत्यपेक्षायामाह—ईश्वराणामिति । ईश्वराणा ज्ञानवैराग्यादिभिस्तेजीयसा वचः आज्ञारूप सत्य प्रमाणम्, तदपि तैस्तात्पर्यवृत्त्योक्त चेत् । अन्यथा परीक्षाद्यर्थमुक्तमश्वत्थामवधमकुर्वतोऽर्जुनस्य गृहपरिवर्तनमकुर्वतीना गोपीना च ईश्वराज्ञोल्लङ्घनदोषप्रसङ्गादिति ज्ञेयम् । तेषामाचरित तु क्वचिदेव किञ्चिदेव तथा प्रमाणमित्यर्थः । 'किं तदाचरित यत्प्रमाणम् ?' इत्यपेक्षायामाह—तेषामिति । तेषामीश्वराणा यदाचरित स्ववचोयुक्त तात्पर्यवृत्त्योपदेशेनोपदेशात्मकेन स्ववचनेनैवाविरुद्ध बुद्धिमांस्तदेव सम्यगादरेणाचरेत् ॥ ३२ ॥

' तेजीयसा न दोषाय ' इति यदुक्त तत् स्पष्टयति—कुशलेति । एषामीश्वराणा कुशलानामिति एषामाचरितेन कुशलाचारेणेत्यर्थ. । जनसङ्ग्रहार्थ धर्मानुष्ठानेन इहलोके चकारात् परलोके च अर्थ. फल सुख न विद्यते नैव भवति, तथा विपर्ययेण अधर्मानुष्ठानेनैषा लोकद्वये अनर्थो दु.खमपि न भवति । तत्र हेतुमाह—निरहङ्कारिणामिति । अनात्मनि देहेन्द्रियादावात्माध्यासरहितानामित्यर्थः । ईश्वरा द्विविधा । तत्रेश्वरावताराणा विरुद्धे प्रवृत्तिर्लीलार्था, ज्ञानवैराग्यवता जीवाना तु प्रारब्धवशादिति ज्ञेयम् । ' त्वमप्येतज्ज्ञाने समर्थोऽसि ' इत्याशयेनाह—हे प्रभो इति ॥ ३३ ॥ कैमुत्यन्यायेन दर्शयति—किमुतेति । यदि ईशितव्याना नियम्याना निरहङ्कारिणा जीवानामपि कुशलाकुशलान्वयो न भवति, तदा तिर्यगादिरूपेण अवस्थितानामखिलाना सत्त्वाना जीवाना ईशितु नियन्तु श्रीकृष्णस्य कुशलाकुशलान्वय· पुण्यपापसम्बन्धो न भवतीति किमिति

**कुशलाचरितेनैषामिह स्वार्थो न विद्यते ॥ विपर्ययेण चाऽनर्थो निरहकारिणां प्रभो ॥ ३३ ॥ किमुताखिलसत्त्वाना तिर्यङ्मर्त्यदिवौकसाम् ॥ ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥ ३४ ॥ यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबन्धा ॥ स्वैर चरन्ति मुनयोऽपि न नह्यमानास्तस्येच्छयात्तवपुष कुत एव बन्धः ॥ ३५ ॥ गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम् ॥ योऽन्तश्चरति सोऽध्यक्ष क्रीडनेनेह देहभाक् ॥ ३६ ॥ अनुग्रहाय भूतानां मानुष देहमास्थितः ॥ भजते तादृशी· क्रीडा या· श्रुत्वा तत्परो भवेत् ॥ ३७ ॥**

वक्तव्यमित्यन्वयः ॥ ३४ ॥ उक्तकैमुत्यन्यायमेव प्रपञ्चयति—यत्पादेति । यस्य भगवतः पादपङ्कजपरागस्य निषेवणेन तृप्ता निवृत्तशब्दादिसमस्तविषयाभिलाषा भक्ताः, तथा योगस्य यत्पादपङ्कजध्यानात्मकस्य प्रभावेण विधुता निवृत्ताः अखिलाः कर्मात्मका बन्धा येषा ते योगिन·, तथा मुनयो ब्रह्मात्मैक्यमननशीला ज्ञानिनश्च न नह्यमानाः बन्धनमप्राप्नुवन्तः स्वैर चरन्ति यथेच्छ शास्त्रोल्लङ्घनेनापि कर्म कुर्वन्ति, तस्य स्वेच्छया आत्तवपुषः स्वीकृतदेहस्यैव विहरतोऽपि कुत एव बन्ध कस्मादेव हेतोर्बन्धः स्यात् ? ॥ ३५ ॥ यदुक्त ' परदाराभिमर्शन धर्मप्रतिकूल कृतवान् ' इति तत्रोत्तरमाह—गोपीनामिति । गोपीना तासा पतीना च तथा सर्वेषामपि देहिना योऽन्तश्चरति नियन्तृतया वर्तते सोऽध्यक्ष सर्वसाक्षी क्रीडनेन हेतुना इहलोके देहभाक् देह स्वीकृतवानिति न तस्य केनापि भेदो येन तासा परदारत्व स्यादित्याशयः ॥ ३६ ॥ यत्पृष्टम् ' आप्तकामो यदुपति'

केनाभिप्रायेण निन्दितमेतत् कृतवान्'' तत्रोत्तरमाह— अनुग्रहाय भूतानामिति । भगवानाप्तकामोपि भूतानि जीवान् अनुगृहीतु यथाकथञ्चित् स्वैकपरान् कृत्वा उद्धर्तुमेव मानुष देहमाश्रितः स्वीकृतवान्, अतस्तादृशीरेव क्रीडा भजते करोति । याः श्रुत्वा तत्परो भवेत् स्वैकपरो निरुद्धो भवेदित्यर्थः ॥ यथा कर्माधिकारिण' कर्मसु प्रवर्तयितु कर्मानुष्ठानं कृतवान् तथाच ज्ञानयोगाधिकारिण' प्रति ज्ञानयोगाद्युपदेश कृतवास्तथा शृङ्गाररसाकृष्टचेतसोऽतिबहिर्मुखानपि स्वपरान् कर्तुं रासलीलामपि कृतवानित्याशयः ॥ ३७ ॥ ननु 'एवमप्येतदनभिज्ञास्तत्पतयः कृष्णाय किमिति नाभ्यसूयन्' तत्राह— नासूयन्निति । खलु अवधारणे । व्रजौकसो गोपीना पतयः कृष्णाय नैवासूयन् दोषबुद्ध्या त नैवापश्यन् । तत्र हेतुमाह— तस्य भगवतो मायया मोहिता इति । मोहमेव स्पष्टयति— स्वान् स्वान् दारान् स्वपार्श्वस्थान् मन्यमाना इति । अनेन लोके यदि केचिद्भ्रष्टाचारास्तदनुयायिनो वा निन्दितं स्वचरितमेवमभिप्रायकमेवेति भगवद्दृष्टान्तेन वदन्ति तदा तद्वचन नाङ्गीकर्तव्यम्, एवविधप्रभावाभावादिति सूचितम् ॥ ३८ ॥ एव

नासूयन् खलु कृष्णाय मोहितास्तस्य मायया ॥ मन्यमाना· स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकस ॥ ३८ ॥
ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिता· ॥ अनिच्छन्त्यो ययुर्गोप्य· स्वगृहान् भगवत्प्रिया ॥ ३९ ॥ विक्रीडितं
व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितोऽनु शृणुयादथ वर्णयेद्यः ॥ भक्तिं परां भगवति प्रतिलभ्य काम हृद्रोगमाश्वपहिनोत्यचिरेण धीर· ॥ ४० ॥ इति श्रीद्भागवते महापुराणे दशमस्कन्धे तामसनिरोधनिरूपणप्रकरणे रासक्रीडानिरूपण
नाम त्रयस्त्रिंशोऽध्याय· ॥ ३३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

प्रासङ्गिकमुक्त्वा प्रकृतमाह— ब्रह्मरात्रे ब्राह्मे मुहूर्ते उपावृत्ते प्राप्ते सति वासुदेवेनानुमोदिता अनुमोदनपूर्वकमाज्ञापिता गोप्यो गन्तुमनिच्छन्त्योऽपि स्वगृहान् प्रतिययुः । अनिच्छाया हेतुमाह— भगवत्प्रिया इति ॥ ३९ ॥ उक्तरासक्रीडादिफलमाह— विक्रीडितमिति । व्रजवधूभिः साकमिद विष्णो' कृष्णस्य विक्रीडित श्रद्धान्वितो यः पुमान् अनु क्रमेण शृणुयात् अथवा वर्णयेत् श्रावयेत् स तस्मिन् भगवति परामुत्कृष्टा भक्तिं प्रतिलभ्य प्राप्य अचिरेण जीवदशायामेव धीरः जितेन्द्रिय सन् हृद्रोगं हृत्स्थरोगवदनर्थकर काममाशु अपहिनोति निरस्यति । चकारः क्रीडान्तरस्यापि कालान्तरसूचनार्थ· ॥ ४० ॥ इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवात्रिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र तामसरोधवर्णने ॥ त्रयस्त्रिंशो गतो वृत्ति रासक्रीडानिरूपक ॥ ३ ॥

चतुस्त्रिंशे त्वहेर्ग्रासान्नन्दस्य तस्य शापतः ॥ शङ्खचूडाच्च गोपीना रक्षण विनिरूप्यते ॥ १ ॥ सर्पग्रस्तनन्दविमोचनात्मक भगवतो लीलान्तर सप्रसङ्ग निरूपयति— एकदेति । देवस्य महादेवस्य पूजार्थं यात्रा गमन देवयात्रा, तस्या जात कौतुकमुत्साहो येषा ते गोपाला नन्दादयः अनडुद्भिर्वृषैर्युक्तैरनोभिः शकटैरम्बिकावन मथुरात. पश्चिमदेशे स्थित तीर्थविशेष ययुरित्यन्वयः ॥ १ ॥ तत्र वने सरस्वत्या नद्या स्नात्वा हे नृप! ते अर्हणैः पूजासाधनैर्गन्धपुष्पादिभि. पशुपति रुद्रमम्बिका देवीं च भक्त्या आनर्चुः पूजयामासुः । पूजने हेतुमाह— विभुमिति । फलदाने समर्थम् ॥ तत्रापि हेतुमाह— देवमिति ॥ २ ॥ 'ततश्च महादेवो नोऽस्माक प्रीयता प्रीतो भवतु ' इत्यभिप्रायेण आदृता' आदरयुक्ताः सर्वे गोपाः गावः गाः हिरण्यं वासासि मधु मधुर मधुसहितमन्न च ब्राह्मणेभ्यो ददुरित्यन्वयः ॥ ३ ॥ ततश्च ते महाभागा नन्दादयो जलमात्रं प्राश्य पीत्वा धृतव्रताः गृहीतब्रह्मचर्यादिनियमास्ता

॥ श्रीशुक उवाच ॥

एकदा देवयात्रायां गोपाला जातकौतुका· ॥ अनोभिरनडुद्युक्तै· प्रययुस्तेऽम्बिकावनम् ॥ १ ॥
तत्र स्नात्वा सरस्वत्यां देव पशुपति विभुम् ॥ आनर्चुरर्हणैर्भक्त्या देवी च नृप तेऽम्बिकाम् ॥ २ ॥
गावो हिरण्यं वासांसि मधु मध्वन्नमादृताः ॥ ब्राह्मणेभ्यो ददु· सर्वे देवो न· प्रीयतामिति ॥ ३ ॥
ऊषु· सरस्वतीतीरे जल प्राश्य धृतव्रताः ॥ रजनी तां महाभागा नन्दसुनन्दकादय·[1] ॥ ४ ॥
कश्चिन्महानहिस्तस्मिन् विपिनेऽतिबुभुक्षितः ॥ यदृच्छयाऽऽगतो नन्द शयानमुरगोऽग्रसीत् ॥ ५ ॥
स चुक्रोशाहिना ग्रस्तः कृष्ण कृष्ण महानयम् ॥ सर्पो मां ग्रसते तात प्रपन्नं परिमोचय ॥ ६ ॥
तस्य चाक्रन्दितं श्रुत्वा गोपाला· सहसोत्थिता ॥ ग्रस्त च दृष्ट्वा विभ्रान्ताः सर्पं विव्यधुरुल्मुकै· ॥ ७ ॥

रजनीं तत्र सरस्वतीतीरे ऊषु· न्यवसन् ॥ ४ ॥ तास्मिन् विपिने यदृच्छया अकस्मादेवागतः कश्चिन्महानहिर्नन्दमग्रसीत् जग्रास । तत्र हेतुमाह— अतिबुभुक्षित इति । तदागमनाज्ञाने हेतुमाह— शयानमिति । अथापि 'यदि पादाघातशब्दः स्यात्तदा जागरण स्यात्, तदपि नास्ति' इत्याशयेनाह— उरग इति । उरसा गच्छन्नित्यर्थ. ॥ ५ ॥ स चाहिना ग्रस्तो नन्दश्चुक्रोश । तदाक्रोशमेव दर्शयति । तत्र सम्भ्रमेण सम्बोधनद्वयम्— कृष्ण कृष्णेति । पुनश्च स्नेहातिशय सूचयन् सम्बोधयति— तातेति । अय महान् सर्पो मा ग्रसते, अतः प्रपन्न शरणागत मा सर्पात्त्व परिमोचयेति ॥ ६ ॥ एव तस्य नन्दस्यातिक्रन्दित दीनवचनं श्रुत्वा चकाराद्रोदन च श्रुत्वा गोपालाः सहसा आशु उत्थिताः, नन्द च सर्पग्रस्त दृष्ट्वा विभ्रान्ता व्याकुलचित्ताः उल्मुकैः ज्वलत्काष्ठैस्त सर्प विव्यधुः ताडयामासु ॥ ७ ॥

[1] सुनन्दो नन्दानुज, स्वार्थे क । 'सनन्दकादय ' इति क्वचित् पाठस्तत्राप्ययमेवार्थ ।

एवमलातैरुल्मुकैर्हन्यमानोप्युरङ्गमः सर्प· तं नन्द यदा नामुञ्चत् न तत्याज तदा सात्वता पतिः भक्ताना पालको भगवान् ऐश्वर्यादिपूर्णः श्रीकृष्ण अभ्येत्य आगत्य सर्प पदाऽस्पृशत् ॥ ८ ॥ स च सर्प· भगवत· श्रीमतः भक्तमनोरथपूरकसम्पद्वतः पादस्य स्पर्शेन हतमशुभ सर्पतापादक शापरूप यस्य तथाभूतः सन् सर्पवपुर्हित्वा विद्याधरैरर्चित सम्माननीय विद्याधररूप भेजे प्राप ॥ ९ ॥ ततश्च प्रणत कृतप्रणाम दीप्यमानेन वपुषा शरीरेण पुरतः समवस्थित पुरुष पुरुषाकार हेममालिन सुवर्णमालाधर तं हृषीकेशः सर्वेन्द्रियनियन्ता साक्षी अपि भगवान् लोकेष्वैश्वर्य प्रकाशयितुमविद्वानिवापृच्छत् ॥ १० ॥ प्रश्नमाह—क इति । य इदानीमद्भुतदर्शनः परया लक्ष्म्या शोभया रोचते प्रकाशते स भवान् कः ? उत्तमस्य तव पारवश्यविना सर्पत्वासम्भवात् । कथमवशः

अलातैर्हन्यमानोऽपि नामुञ्चत्तमुरङ्गम· ॥ तमस्पृशत् पदाऽभ्येत्य भगवान् सात्वतां पति ॥ ८ ॥
स वै भगवत· श्रीमत्पादस्पर्शहताशुभ· ॥ भेजे सर्पवपुर्हित्वा रूप विद्याधरार्चितम् ॥ ९ ॥
तमपृच्छद्धृषीकेश· प्रणत समुपस्थितम् ॥ दीप्यमानेन वपुषा पुरुष हेममालिनम् ॥ १० ॥
को भवान् परया लक्ष्म्या रोचतेऽद्भुतदर्शनः ॥ कथ जुगुप्सितामेतां गति वा प्रापितोऽवश· ॥ ११ ॥

॥ सर्प उवाच ॥

अहं विद्याधर· कश्चित् सुदर्शन इति श्रुतः ॥ श्रिया सुरूपसम्पत्त्या विमानेनाचरन् दिशः ॥ १२ ॥
ऋषीन् विरूपानङ्गिरस· प्राहस रूपदर्पित ॥ तैरिमा प्रापितो योनि प्रलब्धैः स्वेन पाप्मना ॥ १३ ॥

सन्नेता जगुप्सिता निन्दिता सर्पगतिं केन वा प्रापितोसि इति ॥ ११ ॥ एव भगवता पृष्ट आत्मनः सर्पत्वकारण विज्ञापयन् कृतार्थतामाविष्करोति—अहमित्यादिसार्धैः सप्तभिः । सुदर्शन इति विश्रुतः प्रसिद्धः कश्चिद्विद्याधर· देवविशेषोऽह श्रिया कान्त्या सुरूपसम्पत्त्या सौन्दर्यसमृद्ध्या चोपलक्षित. कदाचिद्विमानेन सर्वा दिशः आसमन्तात् चरन् ॥ १२ ॥ ऋषीन् प्राहस हसितवानस्मि । तत्र हेतुद्वय दर्शयन् ऋषीनात्मान च विशिनष्टि— विरूपानिति । अष्टावक्रवद्विरूपानित्यर्थः । अह च रूपेण सौन्दर्येण गर्वित इति । तेषामृषीणा शापे सामर्थ्य सूचयन् विशिनष्टि— अङ्गिरस इति । अङ्गिरोगोत्रोत्पन्नानित्यर्थः । तैरुपहसितैरृषिभिरिमा सर्पयोनिं अह शापेन प्रापितः । तत्र तेषा न कश्चिदपराधः, किंतु स्वेनैव पाप्मना पापेन निमित्तेन ॥१३॥

शापस्तु तैर्ऋषिभिर्मे ममानुग्रहायैव कृतः। 'तेषामनुग्रहकरणे को हेतुः' इत्यपेक्षाया कारुण्यस्वभावत्वात्' इत्याशयेनाह–करुणात्मभिरिति। 'तच्छापेन किं शुभं प्राप्तम्, येन शापस्यानुग्रहार्थत्वम्' इत्यपेक्षायामाह– यदिति। यच्छापाद्धेतोः त्रिलोकगुरुणा सर्वपूज्येन त्वयाऽह पादेन स्पृष्ट इति। 'पादस्पर्शेनापि किम्' इत्यत आह– हताशुभ इति। तव पादस्पर्शेन हतमशुभ पाप यस्य तथा जात इति ॥ १४ ॥ हे अमीवहन् सर्वपापनिवारक! तव स्पर्शाद्धेतोः शापेन निर्मुक्तोऽह सर्वपापनिवारक त्वा आपृच्छे स्वलोक गन्तुमनुज्ञा याचे। 'प्रसन्नतया त्वदनुज्ञाविना गतस्य पुन' शापादि भय स्यात्' इत्याशयेन विशिनष्टि– भवेति। भवेन ससारेण भीतानामत एव प्रपन्नाना शरणागताना भयमपहन्तीति तथा तम् ॥ १५ ॥ 'अहमपि त्वा प्रपन्न. शरणमागतोस्मि, अतो मयि तवानुग्रहो युक्त' इत्याशयेन सम्बोधयति– सत्पते सता भक्ताना पालकेति। पालकत्वे हेतु सूचयन् पुनः सम्बोधयति– सर्वलोकेश्वरेश्वर इति। सर्वलोकेश्वरस्येश्वरो ब्रह्मा, तस्यापीश्वर.। तत्रापि सामर्थ्ये हेतु सूचयन् पुनः सम्बोधयति– महायोगिन्निति। महान् याग' उपायभूतो मायाशक्तिरूपोस्यास्तीति तथाभूतः। तत्रापि हेतु सूचयन् सम्बोधयति– महापुरुष इति। हे महापुरुष पुरुषोत्तम! यत उत्कृष्टोन्यो नास्तीत्यर्थः ॥ 'एवंभूतस्य किं मनुष्यदेहग्रहणेन' इत्याशङ्क्य 'क्रीडार्थमेवेदम्' इत्याशयेन पुनः सम्बोधयति– देवेति। मामनुजानीहि स्वलोकगमनानुज्ञा देहि ॥१६॥ 'एव मनुष्यनाट्यग्रहणेपि न तव केनाप्यशेन च्युतिः' इति सूचयन् सम्बोधयति– हे अच्युत! ते तव दर्शनादेव हेतोः सद्य एव ब्रह्मदण्डात् ब्राह्मणशापादह विमुक्तस्तदेतन्नाश्चर्यमिति शेषः। एतदेव कैमुत्यन्यायेन स्पष्टयति– यन्नामेति। यस्य तव नाममात्रमेव गृह्णन् उच्चरन्पुमान् अखिलान् श्रोतॄनात्मानं च सद्य एव पुनाति, तस्य तव पदा स्पृष्टोऽह पूत इति किं पुनर्वक्तव्यमित्यन्वय। तस्मिन्नर्थे शास्त्रप्रसिद्धिं सूचयति– हीति ॥ १७ ॥

शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभि' ॥ यदह लोकगुरुणा पदा स्पृष्टो हताशुभ ॥ १४ ॥ त त्वाऽह भवभीतानां प्रपन्नानां भयापहम् ॥ आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् ॥ १५ ॥ प्रपन्नोऽस्मि महायोगिन् महापुरुष सत्पते ॥ अनुजानीहि मां देव सर्वलोकेश्वरेश्वर ॥ १६ ॥ ब्रह्मदण्डाद्विमुक्तोऽहं सद्यस्तेऽच्युतदर्शनात् ॥ यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च ॥ सद्यः पुनाति किं भूयस्तस्य स्पृष्ट पदा हि ते ॥ १७ ॥

इत्येव सुदर्शनो विद्याधरः दाशार्हं कृष्णमनुज्ञाप्य पृष्ट्वा परिक्रम्याभिनन्द्य च दिव स्वर्गं यातः गत । नन्दश्च कृच्छ्रात् कष्टान्मोचितो बभूव ॥ १८ ॥ हे नृप ! व्रजौकसो गोपास्तत्पादस्पर्शमात्रेण सर्पान्नन्दस्य, शापात् सुदर्शनस्य च मोक्षलक्षणं कृष्णस्यात्मवैभव स्वकीयमसाधारण प्रभाव निशाम्य दृष्ट्वा विस्मितं चेतो येषा ते तथाभूतास्तस्मिन्नम्बिकावने नियम पूजादिक समाप्यादरयुक्तास्तदेव वैभव कथयन्तस्ततस्थानात् पुनर्व्रज प्रत्याययुरित्यन्वयः ॥ १९ ॥ अथ शङ्खचूडवधात्मक भगवच्चरितान्तर सप्रसङ्ग निरूपयति— कदाचिदिति । अथेति लीलान्तरे । गोविन्दो रामश्च वने रात्र्या व्रजयोषिता मध्यगौ सन्तौ विजह्रतुरित्यन्वयः । एव निर्भयतया विहारे सामर्थ्यमाह— अद्भुतविक्रम इति द्वयोर्विशेषणम् ॥ २० ॥ तावेव वर्णयति— बद्ध सौहृद प्रेम यैस्तैः स्त्रीजनैर्ललित यथा तथा उपगीयमानाविति । स्वलङ्कृतौ च तौ अनुलिप्तानि चन्दनेनानुलिप्तानि अङ्गानि ययोस्तौ च,

इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवन्द्य च ॥ सुदर्शनो दिव यात· कृच्छ्रान्नन्दश्च मोचित ॥ १८ ॥ निशाम्य कृष्णस्य तदात्मवैभव व्रजौकसो विस्मितचेतसस्तत ॥ समाप्य तस्मिन्नियम पुनर्व्रज नृपाऽऽययुस्तत्कथयन्त आदृताः ॥ १९ ॥
कदाचिदथ गोविन्दो रामश्चाद्भुतविक्रम· ॥ विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम् ॥ २० ॥ उपगीयमानौ ललित स्त्रीजनैर्बद्धसौहृदे ॥ स्वलङ्कृतानुलिप्ताङ्गौ स्रग्विणौ विरजोऽम्बरौ ॥ २१ ॥ निशामुख मानयन्तावुदितोडुपतारकम् ॥ मल्लिकागन्धमत्तालिजुष्टं कुमुदवायुना ॥ २२ ॥ जगतु सर्वभूतानां मनःश्रवणमङ्गलम् ॥ तौ कल्पयन्तौ युगपत् स्वरमण्डलमूर्च्छितम् ॥ २३ ॥ गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाविदन्नृप ॥ स्रंसद्दुकूलमात्मान स्रस्तकेशस्रजं तत· ॥ २४ ॥

स्रग्विणौ वनमालाधरौ, विरजसी विरजस्के निर्मले अम्बरे वाससी ययोस्तौ ॥ २१ ॥ तथा उदित· उडुपश्चन्द्रः तारकाश्च यस्मिंस्तत, मल्लिकाना गन्धेन मत्तैरलिभिर्जुष्ट सेवित सहचरितमित्यर्थः, कुमुदगन्धयुक्तेन वायुना च जुष्ट निशामुख निशाप्रवेश मानयन्तौ प्रशसन्तौ ॥ २२ ॥ तौ रामकृष्णौ अनिबद्धत्वादन्यैर्युगपत्कल्पयितुमशक्यमपि स्वरमण्डलस्य स्वरसमूहस्य मूर्च्छित आरोहणावरोहणप्रकार युगपत्कल्पयन्तौ सर्वभूतानां श्रोतॄणां मन.श्रवणयोर्मङ्गल सुखं यथा भवति तथा जगतुः अगायतामित्यन्वयः ॥ २३ ॥ तयोस्तद्गीतमाकर्ण्य श्रुत्वा मूर्च्छिता मोह गता गोप्यस्ततस्तस्मात् मोहात् हे नृप ! स्रंसत् भ्रश्यत् दुकूल यस्मात्स्रस्ताः भ्रष्टा· केशेभ्यः स्रजस्तथाभूतमात्मान देह नाविदन् देहात्पतद्वस्त्राद्यनुसन्धान न कृतवत्य इत्यर्थः ॥ २४ ॥

एव स्वैरं यथेष्टं सप्रमत्तवद्रामकृष्णयोर्विक्रीडतोर्गायतोश्च सतो· शङ्खचूड इति नाम्ना ख्यातः कथितो धनदस्य कुबेरस्यानुचरो भृत्योऽभ्यगात् ॥ २५ ॥ 'इयमपि भगवतो राजलीला' इति सूचयन् सम्बोधयति– हे राजन्निति। तयो रामकृष्णयोर्निरीक्षमाणयोरेव सतोः तावनादृत्य तौ नाथौ स्वामिनौ यस्य त क्रोशन्त रोदनपूर्वकमाह्वयन्तं प्रमदाजनमुदीच्या दिशि कालयामास हठात् प्रेरयामास। तत्र हेतुमाह–अशङ्कितः स्वानर्थशङ्काशून्य' निर्भय इत्यर्थ'। ॥ २६ ॥ त स्वपरिग्रहस्वकीयत्वेन परिगृहीत स्त्रीजन 'हे कृष्ण! हे राम!' इत्येव क्रोशन्त रोदनपूर्वकमाह्वयन्त विलोक्य भ्रातरौ रामकृष्णौ अन्वधावतामि-त्यन्वयः। 'तासा रक्षण धर्म' इति सूचयन् दृष्टान्तमाह–यथेति। दस्युना चौरेण काल्यमाना गाः दृष्ट्वा तद्विमोचनार्थ यथा कश्चिद्धावेत्तथेत्यर्थः ॥ २७ ॥ तत्प्रकारमाह–मेति। मा भैष्ट भयं मा कार्षीरित्येवभूत' अभयः गोपीना भयनिवर्तकः आरावः शब्दः ययोस्तौ, शालहस्तौ हस्ते गृहीतशालवृक्षौ,

एव विक्रीडतो· स्वैर गायतोः सम्प्रमत्तवत् ॥ शङ्खचूड इति ख्यातो धनदानुचरोऽभ्यगात् ॥ २५ ॥
तयोर्निरीक्षतो राजंस्तन्नाथं प्रमदाजनम् ॥ क्रोशन्तं कालयामास दिश्युदीच्यामशङ्कित ॥ २६ ॥
क्रोशन्त कृष्ण रामेति विलोक्य स्वपरिग्रहम् ॥ यथा गा दस्युना ग्रस्ता भ्रातरावन्वधावताम् ॥ २७ ॥
मा भैष्टेत्यभयारावौ शालहस्तौ तरस्विनौ ॥ आसेदतुस्त तरसा त्वरित गुह्यकाधमम् ॥ २८ ॥
स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन् ॥ विसृज्य स्त्रीजनं मूढ' प्राद्रवज्जीवितेच्छया ॥ २९ ॥
तमन्वधावद्गोविन्दो यत्र यत्र स धावति ॥ जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन् स्त्रियो बल' ॥ ३० ॥
अविदूर इवाभ्येत्य शिरस्तस्य दुरात्मन· ॥ जहार मुष्टिनैवाङ्ग सहचूडामणि विभुः ॥ ३१ ॥

तरस्विनौ अतिवेगवन्तौ, अत एव तरसा वेगेन त्वरित यथा भवति तथा गुह्यकेष्वधम नीच त शङ्खचूडं आसेदतुः प्राप्तवन्तौ ॥ २८ ॥ स शङ्खचूडः कालः अनिवार्यो मरणसमयः मृत्युर्मारको देवविशेषः ताविव भयकरौ तौ रामकृष्णौ अनुप्राप्तौ वीक्ष्य उद्विजन् बिभ्यत् जीवितेच्छया स्त्रीजन विसृज्य त्यक्त्वा प्राद्रवत् पलायितः। ननु 'यदि जीवितेच्छा तर्हि कालमृत्युरूपौ दृष्ट्वापि तच्छरणमेव कुतो नागतः?' तत्राह–मूढ इति ॥ २९ ॥ स शङ्खचूडो यत्र यत्र धावति तत्र तत्र गोविन्दः कृष्णस्तमन्वधावत। धावनप्रयोजनमाह–तस्य शिरोरत्न हर्तुमिच्छु' इति। बलरामस्तु स्त्रियो रक्षन् तत्रैव तस्थौ ॥ ३० ॥ अङ्ग हे राजन्! विभु सर्वकरणे समर्थः कृष्ण' अविदूर इव समीप एवाभ्येत्य तदभिमुखमागत्य मुष्टिनैव चूडामणिसाहितं तस्य शङ्खचूडस्य शिरो जहार। पलायितवधस्य अनुचिनत्वमाशङ्क्य तन्निरासायाह–दुरात्मन इति। दारहर्तृत्वेनाततायित्वान्न तद्वधोऽनुचित इत्याशयः ॥ ३१ ॥

एवं शङ्खचूडं निहत्य भास्वरं तेजोयुक्तं तच्छिरोमणिमादायागत्य योषितां पश्यन्तीनां सतीनां प्रीत्याऽग्रजाय रामाय अददत् ददौ। स्वनिकटे मणिस्थापने योषिता मध्ये एकस्यै कस्यैचिद्दाने वा योषिता दौर्मनस्य स्यादतस्तद्रक्षकायाग्रजायैव ददौ। तेन तासा सर्वासा सन्तोष इति ज्ञेयम् ॥ ३२ ॥ इति श्रीविह्लभाचार्य-वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधिराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र तामसरोधवर्णने ॥ चतुस्त्रिंशो गतो नन्दरक्षादिविनिरूपकः ॥ ३ ॥ ॥ ७ ॥ ॥ गोप्य॰ कृष्णे वन याते तस्मिन्नाविष्टचेतसः ॥ कृष्णलीला जगुरेतत् पञ्चत्रिंशे निरूप्यते ॥ १ ॥ 'एव रात्रिषु श्रीकृष्णेन स्वैरमभिरमिताना परमानन्दे निमग्नाना दिवसेषु तद्विराहिताना निस्तारः कथम्' इत्यपेक्षायामाह— गोप्य इति। कृष्णे वन याते सति त कृष्णमनुद्रुत तस्मिन्नासक्त चेतो यासा ता॰ गोप्यः कृष्णलीला एव प्रगायन्त्यो दुःखेन कष्टेन वासरान् दिनानि निन्युः ॥ १ ॥ तासां गानप्रकारमाह—वामबाहुकृतेत्यादिना। अत्र द्वौ द्वौ श्लोकावेकवाक्यतया नेतव्यौ।

शङ्खचूड निहत्यैव मणिमादाय भास्वरम् ॥ अग्रजायाददत् प्रीत्या पश्यन्तीनां च योषिताम् ॥ ३२ ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे शङ्खचूडवधो नाम चतुस्त्रिंशत्तमोऽध्याय॰ ॥ ३४ ॥

॥ श्रीशुक उवाच ॥

गोप्यः कृष्णे वन याते तमनुद्रुतचेतसः ॥ कृष्णलीला प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥ १ ॥

॥ गोप्य ऊचु॰ ॥

वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुम् ॥ कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्द॰ ॥ २ ॥
व्योमयानवनिता॰ सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जा॰ ॥ काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्य ॥ ३ ॥

रहस्यकथने प्रेमाधिक्यं हेतु सूचयन्त्यः सम्बोधयन्ति —गोप्य इति। वामे बाहौ तन्मूले कृत॰ अर्पितो वामकपोलो येन स॰, वल्गिते नर्तिते भ्रुवौ येन सः, मुकुन्द॰ कोमलाभिरङ्गुलिभिराश्रिता मार्गा सप्तस्वरच्छिद्राणि यस्य त अधरे अर्पित वेणु यत्र यदा ईरयति वादयति ॥ २ ॥ तदा व्योम्नि यानं गमनं येषां तेषां सिद्धानां वनितास्तत् वेणुगीतमुपधार्य श्रुत्वा प्रथम विस्मिताः आश्चर्य प्रापास्ततः काममार्गणेभ्य॰ समर्पितानि चित्तानि याभिस्ताः कामबाणपीडिताः सलज्जाश्च सत्यः कश्मल मोह ययुरित्यन्वयः। लज्जायां हेतुमाहुः—सिद्धैः स्वपतिभिः सह वर्तमाना अपि कामपीडिता इति। मोहे लिङ्गमाहु —अपस्मृता विस्मृता नीव्यो याभिस्ताः भ्रश्यद्वस्त्रानुसन्धानरहिता इत्यर्थः। 'अत एवंभूतस्य कृष्णस्य विरह कथं सहामहे ?' इति सर्वत्र वाक्यशेषः ॥ ३ ॥

'यत्र अनधिकारिणा पशूनामपि मोहो भवति तत्राधिकारिणीना देवस्त्रीणा मोहे किमाश्चर्यम्?' इत्याशयेनापरा आहुः—हे अबलाः! इदमस्माभिः कथ्यमान हन्त चित्र अतिचित्र शृणुतेति। हारहासः हारवद्विशदो हासो यस्य स.। यद्वा वेणुवादनार्थमधोवदनेन हसतो हारेषु स्फुरन् हासो यस्य सः, उरसि स्थिरा विद्युदिव लक्ष्मीर्यस्य सः, अय नन्दसूनुः कृष्णो यर्हि आर्तजनाना तद्विरहपीडितानामस्मदादीना नर्मदः सन् सुखयितु कूजितो वादितो वेणुर्यस्य तथाभूतो भवति ॥ ४ ॥ तदा व्रजे गोष्ठे ये वृषा मृगा गावश्च ते आरात् दूरादेव वेणुवाद्येन वेणुनादश्रवणेन हृतानि चेतासि येषा ते वृन्दशः समुदिताः सर्वे एव दन्तैर्दष्टा एव नतु चर्विताः कवलास्तृणग्रासा यैस्ते धृता. श्रवणोन्मुखीकृताः उत्तम्भिताः कर्णा यैस्ते निद्रिताः सञ्जातनिद्रा इव लिखितचित्रमिवासन् तस्थुः॥ ५॥ अपरास्तु 'आस्ता चेतनाना वार्ता, अचेतनासु सत्सु मोह इत्यतिचित्रम्' इत्याहुः—बर्हिण इति। आलि हे सखि! बर्हिणो मयूरस्तबका. पिच्छगुच्छाः धातवो गैरिकादयश्च पलाशानि पल्लवाश्च तैर्बद्धश्चासौ मल्लाना परिबर्हः परिकरश्च तं विडम्बयति अनुकरोति तथा सः बलेन साहितो

हन्त चित्रमबला· शृणुतेद हारहास उरसि स्थिरविद्युत् ॥ नन्दसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणु· ॥ ४ ॥
वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात् ॥ दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवाऽऽसन् ॥ ५ ॥
बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडम्ब· ॥ कर्हिचित् सबल आलि सगोपैर्गा· समाह्वयति यत्र मुकुन्द· ॥ ६ ॥
तर्हि भग्नगतय सरितो वै तत्पदाम्बुजरजोऽनिलनीतम् ॥ स्पृहयतीर्वयमिवाबहुपुण्या· प्रेमवेपितभुजा· स्तिमितापः ॥ ७ ॥
अनुचरै समनुवर्णितवीर्य आदिपूरुष इवाचलभूति· ॥ वनचरो गिरितटेषु चरन्तीर्वेणुनाऽऽह्वयति गा· स यदा हि ॥ ८ ॥

गोपैश्च सह वर्तमानो मुकुन्द कर्हिचित् यदाकदाचित् यत्र देशे वेणुना गाः समाह्वयति ॥ ६ ॥ तदा तर्हि सरितोपि अनिलेन नीत तस्य पदाम्बुजरजः स्पृहयतीः स्पृहयन्त्यो भवन्ति। वै निश्चयम्। तत्र चिह्नमाहु·—भग्ना गति र्यासां ताः। एतदेव स्पष्टयन्ति—स्तिमिताप इति। स्तिमिता निश्चला आपो यासा ताः, प्रेम्णा वेपिताः कम्पिता. भुजा. भुजस्थानीयास्तरङ्गा यासा ताः, स्पृहयन्त्येव केवल न तत्प्राप्नुवन्ति। तत्र हेतुमाहुः—अबहुपुण्या इति। तत्प्राप्तौ पुण्याधिक्यमपेक्षितं तदभावात्। तत्र दृष्टान्तमाहुः—वयमिवेति। वय यथा पुण्यप्रचयाभावात् तत्पदाम्बुजरजः स्पृहयन्त्यो भग्नगतयः प्रेमकम्पितभुजा नेत्रयोः स्तिमितजलाश्च भवामो न तल्लभामहे तथेत्यर्थः ॥ ७ ॥ 'स्थावरेष्वप्यतिचित्र दृश्यते' इत्याहु·—अनुचरैरिति। आदिपूरुष· पुरुषोत्तम इवानुचरैर्गोपैः सम्यगनुवर्णित वीर्य यस्य स., अचला भूति लक्ष्मीर्यस्य सः वनचरः सन् स कृष्णो गिरितटेषु चरन्तीर्गा यदा हि वेणुना तत्तन्नामोपेतेन वेणुगीतेनाह्वयति ॥ ८ ॥

तदात्मनि स्वस्मिन् पूर्णानन्द व्यञ्जयन्त्य इव पुष्पैः फलैश्चाढ्याः युक्ताः, अत एव प्रणता भारेण विटपाः शाखा यासा ताः, प्रेम्णा हृष्टा रोमाञ्चिता इव तनवो यासा ताः वनलताः तरवश्च तथाभूताः मधुधारा ववृषुरित्यन्वयः । ‘स्म’ इति विस्मयं सूचयन्ति ॥ ९ ॥ किञ्च ‘सरसि कमलवनेषु विहरता पक्षिणामपि मनआकर्षक तद्गीतम्, कि पुनरन्येषाम्?’ इत्याशयेनाहुः— दर्शनीयतिलक इति । दर्शनीयानां सुन्दराणा मध्ये तिलक इव मुख्यः वनमालासु या दिव्यगन्धा तुलसी तस्या' मधुना मत्तैः अलिकुलैः अलघु उच्चैः क्रियमाणमभीष्टमनुकूल गीतमाद्रियन् आदरेण गृह्णन् कृष्णः यर्हि अधरे सन्धित-वेणुर्भवति ॥ १० ॥ तर्हि ये सरसि सारसाः हसाः अन्ये च विहङ्गास्ते चारुगीतेन हृत शब्दादिविषयेभ्यः प्रत्याहृत चेतो येषाम्, अत एव यत एकाग्री-कृत चित्त यैस्ते एत्य आगत्य धृत मौन तूष्णींभावो यैस्ते श्रवणसुखेन मीलिते दृशौ यैस्तथाभूताश्च सन्तो हरिमुपासत तत्समीपे उपविविशुरित्यन्वयः ।

वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्या· ॥ प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनव' ससृजु· स्म ॥ ९ ॥
दर्शनीयतिलको वनमालादिव्यगन्धतुलसीमधुमत्तै' ॥ अलिकुलैरलघु गीतमभीष्टमाद्रियन् यर्हि सन्धितवेणु' ॥ १० ॥
सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य ॥ हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौना ॥ ११ ॥
सहबलः स्रगवतसविलास' सानुषु क्षितिभृतो व्रजदेव्यः ॥ हर्षयन् यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम् ॥ १२ ॥
महदतिक्रमणशङ्कितचेता मन्दमन्दमनु गर्जति मेघ· ॥ सुहृदमभ्यवर्षत् सुमनोभिश्छायया च विदधत् प्रतपत्रम् ॥ १३ ॥

‘हन्त’ इति भगवद्विरहजं स्वरभेद सूचयन्ति ॥ ११ ॥ ‘मेघोऽपि कृष्णं सेवते’ इत्याहुः— सहबल इति । भो व्रजदेव्यो गोप्यः ! स्रग्भिर्निर्मिताभ्या अवतंसाभ्या कर्णभूषणाभ्यां विलासः शोभातिशयो यस्य सः, सहबलः बलेन सहितः, क्षितिभृतः गोवर्धनगिरेः सानुषु तटेषु वर्तमानः, स्वय जातहर्षः श्रीकृष्णो यर्हि यदा विश्व हर्षयन् वेणुरवेण उपरम्भति निनादयति नादेनापूरयति ॥ १२ ॥ तदा महतः ब्रह्मादिपूज्यस्य कृष्णस्यातिक्रमणे शङ्कित चेतो यस्य स मेघस्तदुपरि न याति न चोच्चैर्गर्जति, किंतु तत्रैव स्थितः सन् वेणुरवमनु मन्दं मन्द गर्जति । किंच विश्वतापनिवर्तकत्वश्यामत्वादि-साम्यात् सुहृद सखाय श्रीकृष्णं स्वच्छायया प्रतपत्रं प्रतपात् आतपात् त्रायत इति प्रतपत्र छत्र विदधत् कुर्वन् सुमनोभिरभ्यवर्षत् । अदृश्यैर्देवैः क्रियमाणकुसुमवर्षमेव कल्पयित्वेदमुक्तम् ॥ १३ ॥

आश्चर्यान्तरमाहुः— विविधेति । हे सति यशोदे! विविधेषु गोपचरणेषु गोपक्रीडासु विदग्धो निपुण. वस्तुतः तव सुतः कृष्णः अधरबिम्बे बिम्बतुल्ये रक्ते अधरे दत्तो निहितो वेणुर्येन तथाभूत' सन् वेणुवाद्यविषये उरुधा बहुप्रकारा निजैव शिक्षा यासु ता' न त्वन्यत' शिक्षिता स्वरजातीः निषादर्षभादिस्वरालापभेदान् यदा अनयत् ॥ १४ ॥ तदा शक्रप्रभृतयो सुरेशाः तच्चा. स्वरजातीः सवनशो मन्द्रमध्यतारभेदेन क्रमशः यतो गीतध्वनि-रागतः ततः आनता कन्धरा ग्रीवा चित्त च येषा ते उपधार्य सम्यगाकर्ण्य कवयः अतिनिपुणा अपि ते न निश्चित तत्त्व तद्भेदो यैस्ते कश्मल मोह ययु-रित्यन्वयः ॥ १५ ॥ 'अस्माक तु मोहे किं ब्रूम' इत्याहुः— निजपदेति। ध्वजादीनि विचित्राणि ललामानि चिह्नानि येषा तैः निजानि पदान्येवाब्जदलानि

विविधगोपचरणेषु विदग्धो वेणुवाद्य ऊरुधा निजशिक्षाः॥ तव सुत. सति यदाऽधरबिम्बे दत्तवेणुरनयत् स्वरजाती. ॥ १४ ॥
सवनशस्तदुपधार्य सुरेशा. शक्रशर्वपरमेष्ठिपुरोगा. ॥ कवय आनतकन्धरचित्ता. कश्मलं ययुरनिश्चिततत्त्वाः ॥ १५ ॥
निजपदाब्जदलैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामै. ॥ व्रजभुव' शमयन् खुरतोदं वर्ष्मधुर्यगतिरीडितवेणु. ॥ १६ ॥
व्रजति तेन वय सविलासवीक्षणार्पितमनोभववेगा ॥ कुजगतिं गमिता न विदाम. कश्मलेन वसन कबर वा ॥ १७ ॥
मणिधर क्वचिदागणयन् गा मालया दयितगन्धतुलस्या ॥ प्रणयिनोऽनुचरस्य कदांऽसे प्रक्षिपन् भुजमगायत यत्र ॥ १८ ॥
क्वणितवेणुरववञ्चितचित्ता. कृष्णमन्वसत कृष्णगृहिण्य. ॥ गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥ १९ ॥

तैर्व्रजभुवः खुरतोद गोखुराक्रमणव्यथा शमयन् वर्ष्मणा धुर्यो गजस्तद्वत् गतिर्यस्य स कृष्णः ईडितवेणुः वादितवेणुः ॥ १६ ॥ यत् व्रजति तेन निमित्तेन सविलासनिरीक्षणेन चार्पितो मनोभवस्य कामस्य वेगो यासु ता वय कुजाना वृक्षाणा गति दशा निश्चेष्टता गमिताः सत्यः कश्मलेन मोहेन वसन कबर वा न विदामः । विगलद्वस्त्रस्य मुक्तकबरस्य चानुसन्धानरहिता भवाम इत्यर्थ. ॥ १७ ॥ किंच मणिधर इति । मणीन् ग्रथितान् गोगणनार्थं धारयतीति मणिधरः, तथा दयितः प्रियो गन्धो यस्यास्तस्यास्तुलस्या' मालयोपलक्षितः, क्वचिद्देशे तैर्मणिभिर्गाः आ समन्तात् गणयन्, प्रणयिनः प्रियस्य अनुचरस्य सख्युरसे स्कन्धे स्वभुज प्रक्षिपन् स्थापयन् यत्र यदा कदाचिदगायत ॥ १८ ॥ तदा तत्र क्वणितस्य वादितस्य वेणो रवेण शब्देन वञ्चितानि अपहृतानि चित्तानि यासा ताः कृष्णस्य हरिणस्य गृहिण्यो भार्या हरिण्यस्त गुणगणार्ण माधुर्यादिगुणसमूहाना समुद्र कृष्णमनुगत्य प्राप्य अन्वसत अन्वासत सर्वत आवृत्य स्थिता इत्यर्थ ।ननु 'चञ्चलस्वभावाना पतिभि सह वने विचरन्तीना कथमेव स्थिति. सम्भवति?' तत्राहु'— विमुक्त-

गृहाशा इति । तत्र दृष्टान्तमाहु:—गोपिका इवेति ॥ १९ ॥ तदेव वृन्दावनप्रदेशेषु क्रीडित्वा मध्याह्ने गोधनानि परावृत्य यमुनाया क्रीडत-स्तस्य सौभाग्यमनुवर्णयन्ति— कुन्देति । 'तव निर्दोषत्वमेव पुत्रस्य गुणवत्त्वे हेतुः' इति सूचयन्त्यो यशोदा सम्बोधयन्ति— अनघे इति । सहैव बह्वयः कथयन्त्यः काश्चित्तव वत्सः पुत्र इति, काश्चिन्नन्दसूनुरिति चाहु । कुन्ददामाभि कुन्दपुष्परचिताभिर्मालाभिः कृतः कौतुकेन उत्सवेन वेषो-ऽलङ्कारो येन सः गोपैर्गोधनैश्च वृतो यदा यमुनाया विजहार क्रीडति स्म, पूर्णकामस्याप्येव विहारे प्रयोजन सूचयन्त्य आहुः—प्रणयिना प्रेमवता गोपाना नर्मदः हर्षदः हर्षप्रदानार्थमित्यर्थः ॥ २० ॥ तदा मलयजस्पर्शेन मलयस्य चन्दनस्यैव सुरभिः शीतश्च यः स्पर्शस्तेन त कृष्ण मानयन् मन्दो वायु· अनुकूल यथा भवति तथा उपवाति वीजयति । किंच बन्दिन इव स्तावकाः सन्तः ये उपदेवगणाः गन्धर्वादिगणास्ते वाद्यादिभिस्त कृष्ण परिवव्रु·

कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् ॥ नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥ २० ॥
मन्दवायुरुपवात्यनुकूल मानयन् मलयजस्पर्शेन ॥ बन्दिनस्तमुपदेवगणा ये वाद्यगीतबालिभि· परिवव्रु ॥ २१ ॥
वत्सलो व्रजगवां यदगध्रो वन्द्यमानचरण पथि वृद्धैः ॥ कृत्स्नगोधनमुपोह्य दिनान्ते गीतवेणुरनुगेडितकीर्ति ॥ २२ ॥
उत्सव श्रमरुचाऽपि दृशीनामुन्नयन् खुररजश्छुरितस्रक् ॥ दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराज· ॥ २३ ॥

परित उपासत ॥ २१ ॥ आयान्तमालोक्य हृष्यन्त्य· परस्परमूचुः— वत्सल इति । व्रजे स्थिताना गवामिवानुकम्प्यानामस्माक वत्सल· हितकृत्, तत्र ज्ञापकमाहुः—यत् यस्मात् अगध्रः अस्मद्रक्षार्थ गोवर्धनमुद्धृतवान्, एतच्च बहुशो रक्षणस्योपलक्षणम् । वृद्धैर्ब्रह्मादिभिः पथि मार्गे वन्द्यमान-चरणः, अनुगैर्गोपैरीडिता कीर्तिर्यस्य सः, गीतयुक्तो वेणुर्यस्य सः, दिनान्ते सायकाले कृत्स्न गोधनमुपोह्य एकीकृत्य ॥ २२ ॥ श्रमरुचा श्रमयुक्तयाऽपि कान्त्या दृशीनामस्मन्नेत्राणामुत्सव हर्षमुन्नयन् उच्चै· प्रापयन् खुररजोभिश्छुरिता व्याप्ताः स्रजो यस्य देवक्या जठरे भवतीति देवकीजठरभूः स एव उडुराजः निर्वृतिहेतुत्वाच्चन्द्रः सुहृदामस्माकमाशिष मनोरथस्य दित्सया दातुमिच्छया एष एति आगच्छति । यद्यपि नायकगता श्रमरुक् नायि-काना सुखकरी न भवति, तथापि यदि भगवान् श्रान्तो न भवेत्, शीघ्रमेव गच्छेत्तदा दर्शनसुख न स्यात् । 'अतो मन्दगमनहेतुत्वात् सा गोपीनां सुखकर्यैव जाता' इति अपिशब्देन ज्ञेयम् ॥ २३ ॥

समीपमायान्तमनुवर्णयन्ति— मदेति । ईषन्मदेन विघूर्णिते विह्वलिते लोचने यस्य सः, बदरपाण्डुवदनः ईषत्पक्वबदरवत् पाण्डुरं वदनं यस्य सः, अत्र हेतुमाहुः— मृदू गण्डौ यस्मिंस्तद्वदन कनककुण्डलयोर्लक्ष्म्या कान्त्या मण्डयन् शोभयन्, वनपुष्पमालाधृक्, स्वसुहृदा निजस्नेहवता भक्ताना मानद. सन्मानकर्ता ॥ २४ ॥ द्विरदराजो गजश्रेष्ठः तद्वद्विहारो गतिर्यस्य सः, मुदितवक्त्र' प्रसन्नवदन , दिनान्ते सायकाले यामिनीपतिश्चन्द्र' यथा दिनताप मोचयन् आयाति तद्वद्व्रजगवामस्माक दुरन्त एतद्दर्शन विना दुर्निवार दिनविरहज ताप मोचयन्नेष यदुपतिः उपयाति समीपमायाति ॥ २५ ॥ उपसहरति । गोपीना स्नेहातिशयं सूचयन् सम्बोधयति— राजन्निति । तस्मिन् कृष्ण एव चित्त चेतना जीवित यासा ता., तथा तस्मिन्नेव मनः सङ्कल्पात्मक यासा ता', अतएव महान् उदय उत्सवो यासा ता व्रजस्त्रियः अह.सु तद्विरहेऽपि एव कृष्णलीला एवानुगायती' गायन्त्यो रेमिरे इत्यन्वयः ॥ २६ ॥ इतिश्रीवल्लभाचार्य—वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका

मदविघूर्णितलोचन ईषन्मानद' स्वसुहृदां वनमाली ॥ बदरपाण्डुवदनो मृदुगण्डं मण्डयन् कनककुण्डललक्ष्म्या ॥ २४ ॥
यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते ॥ मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापम् ॥ २५ ॥

॥ श्रीशुक उवाच ॥

एवं व्रजस्त्रियो राजन् कृष्णलीलानुगायती' ॥ रेमिरेऽहस्सु तच्चित्तास्तन्मनस्का महोदया' ॥ २६ ॥

इति श्रीमद्भा० महापु० दशमस्कन्धे तामसनिरोधनिरूपणप्रकरणे युग्मगीतनिरूपण नाम पञ्चत्रिंशोऽध्याय ॥ ३५ ॥

॥ श्रीशुक उवाच ॥

अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः ॥ मही महाककुत्काय कम्पयन् खुरविक्षताम् ॥ १ ॥ ॥

बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र तामसरोधवर्णने ॥ पञ्चत्रिंशो गतो वृत्ति युग्मगीतनिरूपकः ॥ ३ ॥ ॥ छ ॥ एव तामसभक्ताना निरोधो विनिरूपितः ॥ अग्रे राजसभक्ताना निरोधो विनिरूप्यते ॥ १ ॥ अथारिष्टवधः कृष्ण-ज्ञान कसस्य तेन हि ॥ अक्रूराज्ञापन चेति षट्त्रिंशे विनिरूप्यते ॥ २ ॥ एव भगवज्जन्मारभ्य नानाविधतल्लीलादर्शनादिना व्रजवासिना परमानन्दो निरूपितः, अतोऽग्रेऽरिष्टागमनादिना तथानन्दो नास्तीति पूर्वोक्तविरुद्धार्थान्तर सूचयन्नाह—अथेति । यत्तदोर्नित्यसबन्धात् यदा चेद्भगवान् पुन. रासार्थमुद्यतस्तर्हि अरिष्टनामा वृषभाकृतिरसुर. स्वखुरैर्विक्षता विदारिता महीं कम्पयन् गोष्ठ व्रजमागत इत्यन्वयः । एव चोक्त विष्णुपुराणे—"प्रदोषार्द्धे कदाचित्तु रासासक्ते जनार्दने । त्रासयन् समदो गोष्ठमरिष्ट समुपागतः" ॥ महीकम्पने हेतु सूचयन्नाह— महान्तौ ककुत्कायौ यस्य स इति ॥ १ ॥

त वर्णयति— रम्भमाण इति त्रयेण । खरतर कर्कश यथा भवति तथा रम्भमाण' वृषजातिब्द कुर्वन् पदा च महीं विलिखन् विदारयन् पुच्छमुद्यम्य ऊर्ध्वे कृत्वा विषाणाग्रेण वप्राणि उन्नतस्थलानि चोद्धरन् उत्क्षिपन् ॥ २ ॥ किञ्चित् किञ्चित् ईषदीषत् शकृत पुरीष मुञ्चन् तथा मूत्रयन् मूत्रमुत्सृजन् स्तब्धे निमेषरहिते लोचने यस्य सः, हे अङ्ग राजन्! यस्य निष्ठुरेण भयकरेण निर्ह्रादितेन शब्देन गवा नृणा नारीणा च ॥ ३ ॥ अकालतः प्रसूतिसमय विनैव भयेन गर्भाः स्रवन्ति पतन्ति च। स्रावपातविभागश्च "आचतुर्थाद्भवेत् स्रावः पातः पञ्चमषष्ठयोः। अत ऊर्ध्वं तु नारीणा प्रसवः परिकीर्तित" इति वचनाज्ज्ञेयः। तस्य महत्त्व सूचयन्नाह—यस्य ककुदि गलपृष्ठमासपिण्डे अचलशङ्कया घना निर्विशन्तीति ॥ ४ ॥ तीक्ष्णशृङ्ग तमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसु'। हे राजन्! पशवश्च त वीक्ष्य भीताः सन्तो गोकुल सन्त्यज्य दुद्रुवुः पलायिताः ॥ ५ ॥ हे कृष्ण! हे कृष्ण! रक्ष रक्षेति वदन्तस्ते गोपादयः सर्वे

रम्भमाण· खरतरं पदा च विलिखन् महीम् ॥ उद्यम्य पुच्छं वप्राणि विषाणाग्रेण चोद्धरन् ॥ २ ॥ किञ्चित् किञ्चिच्छकृन्मुञ्चन् मूत्रयस्तब्धलोचन· ॥ यस्य निर्ह्रादितेनाङ्ग निष्ठुरेण गवां नृणाम् ॥ ३ ॥ पतन्त्यकालतो गर्भा स्रवन्ति स्म भयेन वै ॥ निर्विशन्ति घना यस्य ककुद्यचलशङ्कया ॥ ४ ॥ तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः ॥ पशवो दुद्रुवुर्भीता राजन् सन्त्यज्य गोकुलम् ॥ ५ ॥ कृष्ण कृष्णेति ते सर्वे गोविन्द शरणं ययु' ॥ भगवानपि तद्वीक्ष्य गोकुलं भयविद्रुतम् ॥ मा भैष्टेति गिराऽऽश्वास्य वृषासुरमुपाह्वयत् ॥ ६ ॥ गोपालै· पशुभिर्मन्द त्रासितै· किमसत्तम ॥ बलदर्पहाऽहं दुष्टानां त्वद्विधानां दुरात्मनाम् ॥ ७ ॥ इत्यास्फोट्याच्युतोऽरिष्टं तलशब्देन कोपयन् ॥ सख्युरसे भुजाभोगं प्रसार्यावस्थितो हरि' ॥ ८ ॥

गोविन्दं शरण ययुः। अथ तेषामार्तवचनश्रवणानन्तर भयेन विद्रुत व्याकुल तद्गोकुल वीक्ष्य मा भैष्ट भय मा कार्ष्टेति गिरा आश्वास्य भगवान् वृषासुरमुपाह्वयत् स्वसमीपमाकारितवान् ॥ ६ ॥ तत्प्रकारमाह—गोपालैरिति। मन्द हे मन्दबुद्धे! असत्तम हे दुष्ट! शब्देनैव त्वया त्रासितैर्गोपालैः पशुभिश्च तव किं फलम्? न किमपि। यतस्त्वविधानां दुष्टानां परोद्वेजकाना दुरात्मना दुर्बुद्धीना यो बलप्रयुक्तो दर्पः गर्वस्त हन्तीति तथाभूतोऽहम्। त्व बलगर्वितश्चेत्तर्हि ममाग्रे आगच्छेति शेषेणान्वयः ॥ ७ ॥ हरिर्भक्तदुःखहर्ता भगवान् कृष्ण इत्येव वदन् आस्फोट्य करतलेन बाहुमाहत्य तेन तलशब्देन तमरिष्ट कोपयन् भुजा भुजः स एव भोगः सर्पदेहस्त सर्पदेहाकार भुज सख्युरसे स्कन्धे प्रसार्य सस्थाप्यावस्थितः। एव निर्भयतयाऽवस्थाने हेतुमाह— अच्युत इति। अप्रतिहतप्रभाव इत्यर्थः ॥ ८ ॥

एवमाक्षेपवचनेन कोपित., अतः क्रुद्धः सोऽरिष्टोऽपि खुरेण अवनिमुल्लिखन् विदारयन् हन्तु कृष्णमुपाद्रवत् आजगाम। तस्य महत्त्व वेगातिशय चाह– उद्यता ऊर्ध्वं गच्छता पुच्छेन भ्रमन्तो मेघा यस्मिन् सः ॥ ९ ॥ आगमनप्रकारमाह– अग्रेति । अग्रे न्यस्ते विषाणाग्रे येन सः, स्तब्धे असृग्वद्रक्ते लोचने यस्यः सः, कटाक्षिप्य कटाक्षेण तिर्यङ् निरीक्ष्य अच्युत कृष्ण प्रति तूर्णं शीघ्रमाद्रवत्। तस्य वेगातिशय सूचयन् दृष्टान्तमाह– इन्द्रेण मुक्त. अशनिर्वज्र यथा गच्छेत्तथेति ॥ १० ॥ स भगवान् कृष्ण शृङ्गयोस्त गृहीत्वा अष्टादश पदानि प्रत्यपोवाह प्रतिलोम व्यनुदत्। तस्य प्रबलत्व सूचयन् दृष्टान्तमाह–गजमिति। गजश्रेष्ठो यथा गज प्रति नुदेत्तथेत्यर्थ. ॥ ११ ॥ ततश्च सोऽरिष्टो भगवता अपविद्धः अपक्षिप्त' पुनः सत्वरः शीघ्रमुत्थाय आपतत् वेगेन कृष्णाभिमुखमाजगामेत्यन्वयः । तत्र हेतु.– क्रोधेन मूर्छितो व्याप्तः। तत्र लिङ्गमाह–स्विन्नानि स्वेदयुक्तानि सर्वाङ्गानि

> सोऽप्येवं कोपितोऽरिष्ट· खुरेणावनिमुल्लिखन् ॥ उद्यत्पुच्छभ्रमन्मेघ क्रुद्ध· कृष्णमुपाद्रवत् ॥ ९ ॥ अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् ॥ कटाक्षिप्याद्रवत्तूर्णमिन्द्रमुक्तोऽशनिर्यथा ॥ १० ॥ गृहीत्वा शृङ्गयोस्तं वा अष्टादशपदानि सः ॥ प्रत्यपोवाह भगवान् गज प्रति गज यथा ॥ ११ ॥ सोऽपविद्धो भगवता पुनरुत्थाय सत्वर ॥ आपतत् स्विन्नसर्वाङ्गो निःश्वसन् क्रोधमूर्च्छित· ॥ १२ ॥ तमापतन्त स निगृह्य शृङ्गयो· पदा समाक्रम्य निपात्य भूतले ॥ निष्पीडयामास यथाऽऽर्द्रमम्बर कृत्वा विषाणेन जघान सोऽपतत् ॥ १३ ॥ असृग् वमन् मूत्रशकृत् समुत्सृजन् क्षिपश्च पादाननवस्थितेक्षण· ॥ जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरन्तो हरिमीडिरे सुरा ॥ १४ ॥

यस्य स., निःश्वसन् श्वासानुच्चैर्मुञ्चन् ॥ १२ ॥ स श्रीकृष्ण आपतन्त तमरिष्ट शृङ्गयोर्निगृह्य गृहीत्वा भूतले निपात्य पदा समाक्रम्य निष्पीडयामास। तत्र दृष्टान्तमाह–यथेति। यथा रजकादिर्जनः अम्बरमार्द्र वस्त्र पदा समाक्रम्य हस्तेन निष्पीड्य ततो जल निःसारयति, तथा त निष्पीड्य तद्रोमच्छिद्रेभ्यो रुधिर निःसारितवानित्यर्थः। ततश्च तद्विषाण कृत्वा उत्पाट्य तेन विषाणेन त जघान, स च तेन हननेनापतत ॥ १३ ॥ ततश्च स मुखतोऽसृक् रुधिर वमन् मूत्र शकृच्च एकवद्भावस्तदुभय समुत्सृजन् विमुञ्चन् पादाश्च क्षिपन् इतस्ततश्चालयन् अनवस्थिते चलिते ईक्षणे नेत्रे यस्य सः कृच्छ्रं कष्टं यथा भवति तथा निर्ऋतेर्मृत्योः क्षय जगाम। मृत इत्येव विवक्षितम्, भगवतः सन्मुख तद्धस्तेन मृतस्य यमस्थानगमनासम्भवात्। एव मृताना मुक्तिकथनाच्च ॥ अथानन्तर सुरा देवाः पुष्पै. हरि किरन्त आच्छादयन्त' ईडिरे तुष्टुवु. ॥ १४ ॥

१ 'वै' इति छेद ।

एव ककुद्मिन वृषभासुर हत्वा स्वज्ञातिभिर्गोपैर्वनेषु स्तूयमान. गोपीना नयनोत्सवो यस्मात् सबलः बलेन सहितः श्रीकृष्णः गोष्ठ विवेश ॥ १५ ॥ एव कृष्णेन अरिष्टे दैत्ये निहते सति अथ अनन्तर नारद' कसायाहेत्यन्वयः । 'भगवता अरिष्टो निहतः, किंतु व्रजे रिष्टः सस्थापितः, तत्प्रभृतिदु खाधिक्यस्यैव निरूपणीयत्वात्' इति सूचयन्नाह— अद्भुतकर्मणेति । ननु 'व्रजे स्वैर क्रीडतः सततस्तद्विरुद्ध नारदः कथमाह' इत्याशङ्क्याह— देवदर्शन इति । 'एव कथिते सति कसवधादिना देवकार्य भविष्यति' इति देवेषु दर्शन कृपादृष्टिर्यस्य सः । 'कथ तस्य भाविज्ञान' तत्राह— भगवानिति । सर्वज्ञ इति ॥ १६ ॥ किमाह इत्यपेक्षायामाह— यशोदाया इति । देवक्या अष्टमगर्भतया प्रसिद्धा कन्या यशोदाया. सुतामाह, यशोदायाः सुतत्वेन प्रसिद्ध कृष्ण देवक्याः सुतमाह, रोहिणीपुत्र राम च देवक्याः सप्तमसुतमाह । 'एव वसुदेवसुतौ चेत् कथ व्रज गतौ' तत्राह— त्वत्तो बिभ्यता वसुदेवेन

एवं ककुद्मिनं हत्वा स्तूयमान· स्वज्ञातिभिः[1] ॥ विवेश गोष्ठं सबलो गोपीनां नयनोत्सव' ॥१५॥ अरिष्टे निहते दैत्ये कृष्णेनाद्भुतकर्मणा ॥ कसायाथाऽऽह भगवान्नारदो देवदर्शन' ॥ १६ ॥ यशोदाया सुतां कन्यां देवक्या· कृष्णमेव च ॥ रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ॥ न्यस्तौ स्वमित्रे नन्दे वै याभ्या ते पुरुषा हता ॥ १७ ॥ निशम्य तद्भोजपति· कोपात् प्रचलितेन्द्रिय' ॥ निशातमसिमादत्त वसुदेवजिघांसया ॥ १८ ॥ निवारितो नारदेन तत्सुतौ मृत्युमात्मन' ॥ ज्ञात्वा लोहमयै· पाशैर्बबन्ध सह भार्यया ॥ १९ ॥ प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम् ॥ प्रेषयामास हन्येतां भवता रामकेशवौ ॥ २० ॥

स्वमित्रे नन्दे न्यस्तौ गुप्ततया स्थापितौ । याभ्या रामकृष्णाभ्या ते तव पुरुषा. पूतनादयः दैत्या हताः ॥ १७ ॥ तन्नारदेन वर्णित निशम्य श्रुत्वा कोपात् प्रचलितानि व्याकुलानीन्द्रियाणि यस्य सः भोजपतिः कस वसुदेवजिघासया निशातमसि खड्गमादत्त गृहीतवान् ॥ १८ ॥ तदा च 'वसुदेवे हते सति तच्छ्रुत्वा तौ पलायेता तदा शत्रुभूतयोस्तयोर्वधो न स्यात्, अतो वसुदेव बद्ध्वा प्रथम तयोर्वधोपायः कर्तव्य' इति मन्त्र वदता नारदेन निवारित । एवं च नारदवाक्येन तस्य वसुदेवस्य सुतौ आत्मन आत्माश्रयदेहस्य मृत्यु मृत्युरूपौ ज्ञात्वा लोहमयै' पाशै' भार्यया देवक्या सह वसुदेव बबन्धेत्यन्वयः ॥ १९ ॥ देवर्षौ नारदे प्रतियाते तु कस' केशिनमाभाष्य हे केशिन् इति सम्बोध्य 'गोकुल गत्वा राममाधवौ भवता हन्येताम्' इत्याज्ञाप्य त व्रजे प्रेषयामासेत्यन्वयः ॥ २० ॥

---

१ 'स्वजातिभि' इति पाठान्तरम् ।

ततः केशिप्रेषणानतर भोजराट् कसो मुष्टिकादनि समाहूयाहेत्यन्वयः ॥ २१ ॥ यदाह तद्दर्शयति— भो भो इति । 'भो भो वीर ' इति सामान्यसम्बोधनद्विरुक्त्या सर्वेषामेव सम्बोधन लक्ष्यते । तत्रापि मुख्यौ सम्बोधयति— चाणूरमुष्टिकौ इति । एतन्मदाज्ञापन निशम्यता श्रूयताम् । एव सावधानीकृत्याह— नन्देति । नन्दव्रजे रामकृष्णौ आनकदुन्दुभे सुतावासाते । किलेति नारदोक्त प्रमाण सूचयति ॥ २२ ॥ तत किमत आह— तत इति । ततस्ताभ्या मह्य मम मृत्युर्नारदेन निदर्शित' । 'ततः कि कर्तव्यम्' इत्यत आह— इह सम्प्राप्तौ तौ भवद्भ्या चाणूरमुष्टिकाभ्या मल्ललीलया हन्येतामिति ॥२३॥ मल्लरङ्ग- परिश्रिता मल्लयुद्धभूमि सर्वतः सल्लग्नाः विविधा मञ्चा उत्तुङ्गस्तम्भादिरचितस्थानानि क्रियन्ता विरच्यन्ताम् । 'किमर्थम्' इत्यपेक्षायामाह— पौराः पुरवासिनः जानपदा बहिर्देशवासिनश्च सर्वे तत्रोपविष्टाः स्वैर यथेष्ट सयुग युद्ध पश्यन्त्विति ॥ २४ ॥ एव मल्लान् रामकृष्णौ हन्तुमादिश्य तत्रापि तद्धनन आशङ्कित-

ततो मुष्टिकचाणूरशलतोशलकादिकान् ॥ अमात्यान् हस्तिपाश्चैव समाहूयाऽऽह भोजराट् ॥ २१ ॥
भो भो निशम्यतामेतद्वीर चाणूरमुष्टिकौ ॥ नन्दव्रजे किलाऽऽसाते सुतावानकदुन्दुभे ॥ २२ ॥
रामकृष्णौ ततो मह्य मृत्यु· किल निदर्शित· ॥ भवद्भ्यामिह सम्प्राप्तौ हन्येतां मल्ललीलया ॥ २३ ॥
मञ्चाः क्रियन्तां विविधा मल्लरङ्गपरिश्रिताः ॥ पौरा जानपदा· सर्वे पश्यन्तु स्वैरसंयुगम् ॥ २४ ॥
महामात्र त्वया भद्र रङ्गद्वार्युपनीयताम ॥ द्विप· कुवलयापीडो जहि तेन ममाहितौ ॥ २५ ॥
आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि ॥ विशसन्तु पशून् मेध्यान् भूतराजाय मीढुषे ॥ २६ ॥

चित्तो हस्तिपं प्रत्युपायान्तरमाज्ञापयति— महामात्रेति । त प्रोत्साहयितु पुनः सम्बोधयति— भद्रेति । त्वया कुवलयापीडो द्विपो हस्ती रङ्गद्वार्युपनी- यताम् । 'किमर्थम् ?' इत्यपेक्षाया ता पूरयन्नाह— तेन हस्तिना ममाहितौ शत्रुभूतौ इहागतौ रामकृष्णौ जहि ॥ २५ ॥ एव लौकिकमुपायमुक्त्वा अलौकिकमाह—आरभ्यतामिति । अय हि मम शत्रुर्विष्णवश इति नारदात् पूर्वमेव ज्ञातम्, अतोऽतिप्रबलस्तत्प्रतिपक्षयोग्य एव कश्चिदाराधनीय इति, तादृशश्च शिव एव, अतः स एवाराध्य । तत्रापि तस्य यागा बहवः सन्ति, तन्मध्ये युद्धे विजयाकाङ्क्षिभिः शैवतन्त्रप्रसिद्धः यत्र धनुषि शिवः पूज्यते स धनुर्यागः कर्तव्यः। चतुर्दशी हि शिवतिथिः, अतः स तस्यामेव यथाविधि तन्त्रोक्तप्रकारेण कर्तव्यः। तत्र मीढुषे कामपूरकाय शिवाय त प्रसादयितु मेध्यान् तद्योग्यान् शुद्धान् पशून् विशसन्तु मारयन्तु । पशुहननाविना तत्सन्तोषो न स्यात् । 'पशुहनने तु तत्परिकरभूता भूतादयोऽपि तेन सन्तुष्टाः साहाय्य करिष्यन्ति' इत्याशयेनाह— भूतराजायेति ॥ २६ ॥

इत्येवमुपायान् कर्तुमाज्ञाप्य तौ समानेतुं यदुपुङ्गव यादवेषु श्रेष्ठ अक्रूरमाहूय सम्मानार्थं स्वपाणिना तत्पाणिं गृहीत्वा ततश्च हेति हर्षेण उवाचेत्यन्वयः। तच्चातुर्यमाह— अर्थतन्त्रज्ञ इति । इद कार्यमनेनैव भविष्यतीति रहस्यज्ञ इत्यर्थः। यद्वा 'ननु ततो मृत्यु ज्ञात्वा किमिति तदानयनाय आज्ञप्तवान्' तत्राह— अर्थतन्त्रज्ञ इति। आग्रहात् स्वप्रयोजनमेव विचारयति, फलानुसन्धान तु तस्य नास्तीत्यर्थ. ॥ २७ ॥ तदुक्तिमाह— भो भो इति । द्विरुक्तिरादरार्था। 'यथान्यद्दान करोषि, तथा मत्प्रार्थितमपि सम्पादय' इत्याशयेन सम्बोधयति— दानपते इति। मह्य मम मैत्र मित्रकृत्य त्वया क्रियताम्, यस्मात्त्वत्तोऽन्यो भोजवृष्णिषु मध्ये आदृतः आदरयुक्तः हिततमश्च न विद्यते इति॥ २८ ॥ अत कारणात् हे सौम्य हे प्रिय! कार्यगौरवस्य गुरुतरकार्यस्य साधने निमित्तेऽहं त्वामाश्रितः। ननु 'महतस्तव कथ निकृष्टाश्रयण युक्तम्' इत्याशङ्क्य तस्य गुणाधिक्येन योग्यत्व सूचयन् दृष्टान्तमाह—

इत्याज्ञाप्यार्थतन्त्रज्ञ आहूय यदुपुङ्गवम् ॥ गृहीत्वा पाणिना पाणिं ततोऽक्रूरमुवाच ह ॥ २७ ॥
भो भो दानपते मह्यं क्रियतां मैत्रमादृत. ॥ नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥ २८ ॥
अतस्त्वामाश्रित· सौम्य कार्यगौरवसाधने ॥ यथेन्द्रो विष्णुमाश्रित्य स्वार्थमध्यगमद्विभु ॥ २९ ॥
गच्छ नन्दव्रज तत्र सुतावानकदुन्दुभे· ॥ आसाते ताविहानेन रथेनाऽऽनय मा चिरम् ॥ ३० ॥
निसृष्ट· किल मे मृत्युर्देवैर्वैकुण्ठसश्रयै· ॥ तावानय समं गोपैर्नन्दाद्यै साभ्युपायनै· ॥ ३१ ॥
घातयिष्य इहानीतौ कालकल्पेन हस्तिना ॥ यदि मुक्तौ ततो मल्लैर्घातये वैद्युतोपमै· ॥ ३२ ॥

यथेति। विभुर्महानपि इन्द्रो यथा विष्णुं कनिष्ठमपि वामनमाश्रित्य स्वार्थमभ्यगमत् बलिनाऽपहृता त्रिलोकीं पुन· प्राप्तवानित्यर्थ ॥ २९ ॥ एव सम्प्रार्थ्य 'किं मैत्र मया कार्यम्?' इत्यपेक्षायामाह— गच्छेति। नन्दस्य व्रज त्व गच्छ, तत्र च आनकदुन्दुभेर्वसुदेवस्य सुतावासाते, तौ अनेन मदीयेन रथेनेहानय। मा चिर विलम्बो न कार्य इत्यर्थ· ॥ ३० ॥ नारदोक्त प्रमाण सूचयति— किलेति। वैकुण्ठो विष्णुः सश्रयः आश्रयो येषा तैर्देवैस्ताभ्या मे मम मृत्युर्निसृष्टः प्रकल्पितः, अतो नन्दाद्यैर्गोपैः सम सह तावानय। 'मदभिप्राय सङ्गोप्य धनुर्मखनिरीक्षणार्थमुपायन गृहीत्वा राजाज्ञया चलनीयमिति वक्तव्यम्' इत्याशयेनाह— साभ्युपायनैरिति ॥ ३१ ॥ 'ततः किं करिष्यसि' तत्राह— इहानीतौ तौ कालकल्पेन मृत्युतुल्येन हस्तिना घातयिष्ये। यदि कथंचित्ततो हस्तितो मुक्तौ भविष्यतस्तर्हि वैद्युतोपमै. अशनितुल्यैर्मल्लैश्चाणूरादिभिर्घातये घातयिष्ये ॥ ३२ ॥

तयो रामकृष्णयोर्निहतयोः सतोस्ततो वसुदेवपुरोगमान् तद्बन्धून् वृष्ण्यादींश्च हनिष्यामि । 'तेषा हनन सुकरमेव, तद्वियोगदुःखेन सन्तप्तत्वात्' इत्याशयेनाह– तस्मानिति ॥ ३३ ॥ उग्रसेन स्वपितर च हनिष्यामि । तत्र हेतुमाह– स्थविर वृद्धमपि राज्यकामुकमिति । देवक च हनिष्यामि । तत्र हेतुमाह– तद्भ्रातरमिति । तत्पक्षपातिनमित्यर्थः । तथा येऽन्ये मम विद्विषस्तांश्च सर्वान् हनिष्यामि ॥ ३४ ॥ ततश्च हे मित्र ! एषा मही नष्टकण्टका शत्रुभीतिरहिता भवित्री भविष्यति । एतदेव स्पष्टयति– जरासन्धो मम गुरुः पूज्यश्च, श्वशुरत्वात् । द्विविदाख्यो वानरो मम दयितः सखा ॥ ३५ ॥ शम्बरादयो दैत्याश्च सर्वे मय्येव कृत सौहृद स्नेहो यैस्तथाभूताः । अतस्तैर्जरासन्धादिभिः सहितोऽह सुरपक्षीयान् नृपान् हत्वा सर्वां महीं भोक्ष्ये ॥ ३६ ॥ एतन्मच्चिकीर्षित ज्ञात्वापि 'धनुर्मखनिरीक्षणार्थ तथा यदुपुरस्य मथुरायाः श्रिय शोभा द्रष्टु च राजाहूतवान्' इत्युक्त्वा अर्भकौ वसुदेवपुत्रौ रामकृष्णाविह

तयोर्निहतयोस्तस्मान् वसुदेवपुरोगमान् ॥ तद्बन्धून्निहनिष्यामि वृष्णिभोजदशार्हकान् ॥ ३३ ॥
उग्रसेन च पितर स्थविर राज्यकामुकम् ॥ तद्भ्रातर देवक च ये चान्ये विद्विषो मम ॥ ३४ ॥
ततश्चैषा मही मित्र भवित्री नष्टकण्टका ॥ जरासन्धो मम गुरुर्द्विविदो दयितः सखा ॥ ३५ ॥
शम्बरो नरको बाणो मय्येव कृतसौहृदाः ॥ तैरह सुरपक्षीयान् हत्वा भोक्ष्ये महीं नृपान् ॥ ३६ ॥
एतज्ज्ञात्वाऽऽनय क्षिप्र रामकृष्णाविहार्भकौ ॥ धनुर्मखनिरीक्षार्थं द्रष्टु यदुपुरश्रियम् ॥ ३७ ॥

॥ अक्रूर उवाच ॥

राजन् मनीषित सम्यक् तव स्वावद्यमार्जनम् ॥ सिद्ध्यसिद्ध्योः सम कुर्याद्दैवं हि फलभावनम् ॥ ३८ ॥
मनोरथान् करोत्युच्चैर्जनो दैवहतानपि ॥ युज्यते हर्षशोकाभ्यां तथाप्याज्ञां करोमि ते ॥ ३९ ॥

क्षिप्र शीघ्रमानयेत्यन्वयः ॥ ३७ ॥ एवमुक्तोऽक्रूर आह– राजन्निति । राजन्निति सम्बोधनेन तदाज्ञापालनस्यावश्यकत्व सूचयति । स्वावद्यस्य स्वमरणस्य मार्जन परिहारः सम्यक् मनीषित विचारितम् । तथाप्यत्राभिनिवेशो न कार्य, यतः फलसिद्धौ तदसिद्धौ वा जनश्चित्त सम कुर्यात् । हि यस्मात् दैव फलभावन परमेश्वराधीनमेव फलमित्यर्थः ॥ ३८ ॥ श्रीकृष्णे आगते सति धनुर्भङ्गाद्युपद्रवस्यावश्यभावित्वात् कसस्य च दुष्टस्वभावत्वात् कदाचित् 'मत्कर्तृकानयनेनोपद्रवो जात इति मत्वा, अयं मय्येव कुपितो भवेत्' इत्याशङ्क्य स्वदोषपरिहारार्थमुक्तमीश्वराधीनत्वमेव स्पष्टयति– मनोरथानिति । अय जनः प्राणी दैवहतान् एकदा दैवेन प्रारब्धफलदात्रेश्वरेण हतान् निम्नितान् मनोरथानुच्चैः करोति मनोरथान् कृत्वा तदुपायेषु प्रवर्तते । फललाभालाभयोरीश्वराधीनत्वात्तल्लाभे हर्षेण तदलाभे च वृथा साधनक्लेशात् शोकेन च युज्यते । यद्यप्येव व्यवहारो लोके प्रसिद्धः, तथापि ते तवाज्ञामह करोमि सेवकत्वात्तवाज्ञया तावानेतु गच्छामि, फल तु दैवाधीनमित्यर्थः ॥ ३९ ॥

एवमक्रूर चकारात्केश्यादीन् ग्रामादिवासिजनानानेतुमन्याश्चादिश्य मन्त्रिणश्च विसृज्य गृह प्रस्थाप्य स कस. स्वगृह प्रविवेश । तथा अक्रूरोपि स्वमालय गृहं गतः ॥ ४० ॥ इति श्रीवल्लभाचार्य–वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्द-सिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने ॥ षट्त्रिंशोऽपि गतोऽरिष्टघातादिविनिरूपकः ॥ ३ ॥ सप्तत्रिंशे हय हत्वा नारदेन स्तुतो हरिः ॥ व्योमासुर जघानेति शुकेन विनिरूप्यते ॥ १ ॥ 'कंसः केशिनमाहूय प्रेषयामास' इत्युक्त तत्र 'प्रेषितः स किमकरोत्' इत्यपेक्षायामाह– केशी त्विति । तुशब्देन तस्य बलपराक्रमयोराधिक्य सूचयति । स तु कसेन प्रहित. प्रेषितः केशी महाहयः सन् महीं कम्पयन् खुरैर्निर्जरयन् विदारयन् नन्दस्य व्रज जगामेति द्वयोरन्वयः । प्रबलत्व महत्त्व च स्पष्टयन् विशिनष्टि– मनसः जव इव जवो वेगो यस्य सः, सटा-

श्रीशुक उवाच ॥ एवमादिश्य चाक्रूरं मन्त्रिणश्च विसृज्य स । प्रविवेश गृहं कंसस्तथाऽक्रूर स्वमालयम् ॥ ४० ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे राजसनिरोधनिरूपणप्रकरणेऽरिष्टवधनिरूपण नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ केशी तु कसप्रहित· खुरैर्मही महाहयो निर्जरयन् मनोजव ॥ सटावधूताभ्रविमानसङ्कुल कुर्वन्नभो हेषितभीषिताखिल ॥ १ ॥ विशालनेत्रो विकटास्यकोटरो बृहद्गलो नीलमहाम्बुदोपम· ॥ दुराशय· कसहित चिकीर्षुर्व्रज स नन्दस्य जगाम कम्पयन् ॥ २ ॥ त त्रासयन्त भगवान् स्वगोकुल तद्धेषितैर्वालविघूर्णिताम्बुदम् ॥ आत्मानमाजौ मृगयन्तमग्रणीरुपाह्वयत् स व्यनदत् मृगेन्द्रवत् ॥ ३ ॥

भिः स्कन्धकेशैः अवधूतानि इतस्ततः क्षिप्तानि यानि अभ्राणि विमानानि च तैः सङ्कुल सङ्कीर्ण नभ कुर्वन्, हेषितैरश्वजातिशब्दैर्भीषितमखिल विश्व येन सः ॥१॥ विशाले नेत्रे यस्य सः, विकटमास्यकोटर मुखच्छिद्र यस्य सः, बृहत्पीनो दीर्घश्च गलो यस्य स·, नीलो महाश्च अम्बुदो मेघ उपमा यस्य स., कसहित कृष्णरामवध चिकीर्षुः कर्तुमिच्छुः, तत्र हेतुमाह–दुराशयः दुष्टचित्त. ॥ २ ॥ तद्धेषितैः तैरतिनिष्ठुरैर्हेषितै. स्वगोकुल स्वकीय गोकुलवासिजन त्रासयन्त वालै· पुच्छरोमभि· विघूर्णिता· परिभ्रामिता· अम्बुदाः येन तमाजौ सङ्ग्रामार्थमात्मान कृष्ण मृगयन्तमन्वेषयन्त त केशिनमग्रणी. पुरो निर्गतः सन् भगवान् कृष्ण उपाह्वयत् स्वसमीपमाजुहाव । स च केशी तन्निशम्य मृगेन्द्रवत् व्यनदत नादमकरोत ॥ ३ ॥

ततश्च स केशी त कृष्णं निशाम्य दृष्ट्वा अत्यमर्षणः तदुत्कर्षमत्यन्तमसहमान अभिमुख. सन् मुखेन खमाकाश पिबन्निव मुख व्यादाय अभ्यद्रवत् आजगाम । तत. प्रत्यक् पद्भ्यामरविन्दलोचन कृष्ण जघान ताडयामास। ननु 'तर्ह्यन्यै' कुतो न स निवारित' ' इत्याशङ्क्याह—दुरत्यय इति। अन्यै-रत्येतुमशक्यः ॥ तत्र हेतुमाह—दुरासद इति । तत्समीपगमनमप्यशक्यम्, तन्निराकरणस्य का कथा ? तत्रापि हेतुमाह—चण्डजव इति। महावेग इत्यर्थः ॥ ४ ॥ अधोक्षज इन्द्रियागोचरो भगवान् तत्तस्य हनन वञ्चयित्वा रुषा त केशिन हननाय प्रसारितयोः पादयोः दोर्भ्यां हस्ताभ्या प्रगृह्य परिविध्य भ्रामयित्वा धनुःशतपरिमितदेशे सावज्ञ उत्सृज्य प्रक्षिप्य व्यवस्थितः यथासुख स्थितो बभूव । तत्र दृष्टान्तमाह—यथेति । तार्क्ष्यसुतो गरुड यथा अनायासेनैव उरग क्षिप्त्वा निर्भयतयाऽवतिष्ठते तद्वदित्यर्थ' ॥ ५ ॥ एव भगवत्प्रक्षिप्त' केशी प्रथम मूर्छित पुनश्च लब्धा सज्ञा स्मृतिर्येन स.

**स त निशाम्याभिमुखो मुखेन ख पिबन्निवाभ्यद्रवदत्यमर्षण ॥ जघान पद्भ्यामरविन्दलोचन दुरासदश्चण्डजवो दुरत्यय. ॥ ४ ॥ तद्वञ्चयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयो' ॥ सावज्ञमुत्सृज्य धनु.शतान्तरे यथोरग तार्क्ष्यसुतो व्यवस्थित. ॥ ५ ॥ स लब्धसंज्ञ. पुनरुत्थितो रुषा व्यादाय केशी तरसाऽऽपतद्धरिम् ॥ सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन् प्रवेशयामास यथोरगं बिले ॥ ६ ॥ दन्ता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयस्पृशो यथा ॥ बाहुश्च तद्देहगतो महात्मनो यथाऽऽमयः सववृधे उपेक्षित ॥ ७ ॥ समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् ॥ प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लेण्ड विसृजन् क्षितौ व्यसु' ॥ ८ ॥**

पुनरुत्थितः सन् रुषा क्रोधेन मुखं व्यादाय तरसा वेगेन हरिं ग्रसितुमापतत् आजगाम। स हरिरपि स्मयन् हसन् एवास्ये वक्त्रे उत्तर वाम भुज प्रवेशयामास । तत्र दृष्टान्तमाह— यथा मूषकग्रहणार्थ तद्बिले सर्पः प्राविशति तथा तत्प्राणग्रहणाय तन्मुखे भगवान् स्वभुज प्रवेशितवान् इत्यर्थः । ॥ ६ ॥ ततश्चर्वणाय भगवद्भुजं स्पृशन्तीति तथा ते केशिनो दन्ता निपेतुः । तत्र दृष्टान्तमाह—तप्तमयो लोहपिण्ड स्पृशो यथा पतन्ति तद्वदिति । तस्य देहगतो भगवतो बाहुश्च ववृधे । तत्र दृष्टान्तमाह— उपेक्षित. अचिकित्सितः आमयो जलोदरादि रोगो यथा वर्धते तथेति ॥ ७ ॥ सम्यगेधमानेन कृष्णभुजेन निरुद्ध' प्राणवायुर्यस्य स केशी चरणान् विक्षिपन् इतस्ततश्चालयन् प्रस्विन्न प्रस्वेदयुक्त गात्र यस्य स' परिवृत्ते परिभ्रममाणे लोचने यस्य स. लेण्ड् पुरीष विसृजन् व्यसुः प्राणरहितः सन् भूमौ पपात ॥ ८ ॥

व्यसोः विगतप्राणस्य केशिनो देहात् महान्तौ भुजौ यस्य स कृष्ण. स्वभुजमपाकृष्य निःसार्य अविस्मितो गर्वरहित एवावस्थितः । तदा उत्स्मयै तादृशदैत्यस्य अनायासेनैव वधादाश्चर्ययुक्तैर्दिविजैर्देवैः प्रसूनवर्षैः पुष्पवृष्टिभि. सह अभिष्टुतः स्तूयमानो जात. । ' महाबलपराक्रमस्य हनने कुतो न तस्य गर्वोऽभूत् ' इत्यपेक्षायामाह—अयत्नहतारिरिति । अयत्नेनैव हतोरिर्येन सः । नहि तृणे छिन्ने वरिस्य गर्वो युक्तः, भगवतोऽग्रे तस्य तृणतुल्यत्वात् । ननु ' वालविघूर्णिताम्बुदम् ' इत्युक्तेस्तस्य महत्त्वमुक्तम्, तथा ' महाभुज ' इति भगवतोऽपि तादृक्प्राणनिरोधकमहाभुजत्वमुक्तम्, तथाच तस्मिन् मृतेऽपि "ततो भुजनिःसारण एव महानायासः सम्भवति, कथमयत्नहतारित्वम् " इति शङ्का दृष्टान्तेन निरस्यति— कर्कटिकाफलोपमादिति । कर्कटिकाफल हि पक्व विदीर्णं भवति, तद्वद्विदीर्णाद्देहादनायासेनैवाकृष्येत्यर्थः । ' प्रसूनवर्षैर्दिविषद्भिरीडित ' इति पाठान्तरम् ॥ ९ ॥ ' नारदविज्ञप्ति. सावधानतया श्रोतव्या ' इत्याशयेन सम्बोधयति—नृपेति । देवर्षिः देवपक्षपाती नारदः केशिवधानन्तर रहसि एकान्ते कृष्णमुपसङ्गम्य एतद्वक्ष्यमाणमभाषतेत्य-

**तद्देहत कर्कटिकाफलोपमाद्व्यसोरपाकृष्य भुज महाभुज· ॥ अविस्मितोऽयत्नहतारिरुत्स्मयै प्रसूनवर्षैर्दिविजैरभिष्टुत· ॥ ९ ॥ देवर्षिरुपसङ्गम्य भागवतप्रवरो नृप ॥ कृष्णमक्लिष्टकर्माण रहस्येतदभाषत ॥ १० ॥ कृष्ण कृष्णाप्रमेयात्मन् योगेश जगदीश्वर ॥ वासुदेवाखिलावास सात्वतां प्रवर प्रभो ॥ ११ ॥**

न्वय· । ' नारदस्यैतद्भाषणे किं प्रयोजनम् ? ' इत्यपेक्षाया ' मथुरादिनिवासिभक्तमनोरथपूरणार्थम् ' इत्याशयेनाह— भागवतप्रवर इति । ' भगवानपि तत्प्रार्थित किमिति करिष्यति ' इत्यपेक्षाया ' तस्यापि दुष्टवधसाधुरक्षाया अभिप्रेतत्वात् ' इत्याशयेनाह— अक्लिष्टकर्माणमिति ॥ १० ॥ नारदोक्तिमेवाह— चतुर्दशभिः । आदर सूचयति । सम्बोधयति— कृष्ण कृष्णेति । ' मया कस प्रति रहस्यसूचने कृतेऽपि तव भय नास्ति ' इत्याशयेन पुन· सम्बोधयति—अप्रमेयात्मन्निति । न प्रमेय आत्मा स्वरूपं यस्य सः । ' योगिनोऽप्येवंभूता भवन्ति, किं पुनस्तत्फलदाता ' इत्याशयेन पुन· सम्बोधयति—योगेशेति । तत्र हेतु सूचयन् सम्बोधयति—जगदीशेति । ' जगदीश्वरत्व न केवल नियन्तृत्वमात्रम्, किंतु तदाधारत्वमपि ' इत्याशयेन सम्बोधयति—अखिलावासेति । ' वसुदेवपुत्रस्य तव वसुदेवरक्षाप्युचितैव ' इत्याशयेन सम्बोधयति—वासुदेवेति । एतदवतारप्रयोजनमपि ' भक्तरक्षैव ' इत्याशयेन पुन. सम्बोधयति— सात्वता प्रवर भक्ताना पालकेति । एव पूर्वोक्ते सर्वत्र सामर्थ्य सूचयन् सम्बोधयति—प्रभो अचिन्त्यमायास्वामिन् ! ॥ ११ ॥

'सर्वान्तरात्मत्वेनापि तव भयं नास्ति' इत्याशयेनाह—त्वमेक एव सर्वभूतानामात्मेति। 'तर्हि कुतो न तथात्वेन सर्वैर्दृश्य' इत्याशङ्क्याह— गूढ इति। तत्र हेतुमाह—गुहाशय इति। तत्र दृष्टान्तमाह—एधसा काष्ठानामन्तर्ज्योतिरिवेति। 'सर्वबुद्धिवृत्तिज्ञश्च त्वम्, अतः किं बहु विज्ञापनीयम्' इत्याशयेनाह—साक्षीति। 'ब्रह्मादिसर्वाराध्यः सर्वोत्तमश्च त्वमेवासि' इत्याह—महापुरुष इति। तत्र हेतुमाह—ईश्वर इति। इष्टानिष्टफलदाने समर्थः ॥ १२ ॥ 'सर्वाधारस्याप्याधारः कश्चिदन्यः स्यात्' इत्याशङ्क्याह—आत्माश्रय इति। उक्त जगदीश्वरत्वमेव स्पष्टयति—आत्मना स्वरूपभूतया मायया प्रकृत्या पूर्व सत्त्वादिगुणास्त्व ससृजे, तैश्च गुणैरिद विश्व सृजसि उत्पादयसि, अवसि रक्षसि, अत्सि उपसहरसि। अतस्त्व जगदीश्वरः। 'तत्रापि तवायासो नास्ति, सङ्कल्पेनैव कर्तृत्वात्' इत्याह—सत्यसङ्कल्प इति ॥ १३ ॥ 'सात्वता प्रवर' इत्यनेन सूचितमवतारप्रयोजन स्पष्टयति—स इति। स परमेश्वर एव त्व

त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम् ॥ गूढो गुहाशयः साक्षी महापुरुष ईश्वर ॥ १२ ॥
आत्मनाऽऽत्माश्रय· पूर्व मायया ससृजे गुणान् ॥ तैरिद सत्यसङ्कल्पः सृजस्यत्स्यवसीश्वरः ॥ १३ ॥
स त्व भूधरभूतानां दैत्यप्रमथरक्षसाम् ॥ अवतीर्णो विनाशाय सेतूनां रक्षणाय च ॥ १४ ॥
दिष्ट्या ते निहतो दैत्यो लीलयाऽय हयाकृति· ॥ यस्य हेषितसन्त्रस्तास्त्यजन्त्यनिमिषा दिवम् ॥ १५ ॥
चाणूर मुष्टिक चैव मल्लानन्यांश्च हस्तिनम् ॥ कस च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो ॥ १६ ॥
तस्यानु शङ्खयवनमुराणा नरकस्य च ॥ पारिजातापहरणमिन्द्रस्य च पराजयम् ॥ १७ ॥

भूधरभूतानां भुव धरतीति भूधरा राजानः तद्रूपाणा दैत्यादीना विनाशाय, सेतूना धर्ममर्यादारूपाणां साधूना रक्षणायावतीर्णोसीत्यन्वयः ॥ १४ ॥ उपलक्षणविधया केशिवधमभिनन्दति—दिष्ट्येति। अयं हयाकृतिः अश्ववेषधरो दैत्यस्ते त्वया निहतः तत् दिष्ट्या। तेन सर्वेषा भद्रमेव जातमित्यर्थः। 'कुत' इत्यपेक्षाया तस्य भयकरत्वमाह—यस्येति। यस्य हेषितेन शब्दमात्रेण सन्त्रस्ता भीताः सन्तः अनिमिषा देवाः दिव स्वर्ग त्यजन्ति स्म। ईदृशस्यापि हनने यदि भगवतः प्रयासः स्यात्तदापि भक्ताना तदायासस्मरणेन तादृश आनन्दो न स्यात्, सोपि न जातोऽतो महानानन्द इत्याशयेनाह—लीलयेति ॥ १५ ॥ 'एव व्रजे यत् कर्तुमुचित तद्भवान् कृतवान्' इत्युक्त्वा इदानीं चाणूरादिदुष्टहननेन वसुदेवादिभक्तरक्षा कुर्वीति भाव्यपि योगजज्ञानेन सिद्धवत् कृत्वा विज्ञापयति—चाणूरमित्यादिना। अद्यैवाऽक्रूर एष्यति, श्वो मथुरा गन्तासि, परश्वश्चाणूरादींस्त्वया निहतान् द्रक्ष्यामि। हे प्रभो समर्थ'॥ १६ ॥ तस्य अनु तदनन्तर शङ्खादीना वधादिक द्रक्ष्यामीति श्लोकपञ्चकस्यान्वयः। शङ्खः पञ्चजनः ॥ १७ ॥

वीर्यं स्वप्रभावप्रदर्शनमेव शुल्कादिलक्षणं प्रदेयद्रव्यादिरूप यस्मिंस्तथाभूत वीरकन्यानामुद्वाह हे जगत्पते ' पापात् ब्राह्मणगोहरणजनितात् कृकलासयोनिनिमित्तात् ॥ १८ ॥ भार्यया जाम्बवत्या सह स्वधामतो महाकालपुरत 'आनीय' इति शेष. ॥ १९ ॥ महाक्रतौ युधिष्ठिरराजसूये चैद्यस्य शिशुपालस्य च निधन वधम् ॥ २० ॥ 'एवकर्मकरण भाविश्रोत्रादिजनोद्धारार्थम्' इत्याशयेनाह— कविभिर्भुवि गेयानि इति ॥ २१ ॥ अथानन्तरममुष्य भूभारस्य कर्माणि षष्ठी भूभार क्षपयिष्णोः अपचिकीर्षोस्ते तव अक्षौहिणीना निधन विनाशरूप कर्म द्रक्ष्यामीत्यन्वयः । भूभारहरणे सामर्थ्यमाह—कालरूपस्येति । 'तदपि भूभारहरणमर्जुनादिद्वारा' इत्याशयेनाह—अर्जुनसारथेरिति । 'अत्र सन्देहो नास्ति' इत्याशयेनाह—वा इति ॥ २२ ॥ एव विज्ञाप्य कृताभिनन्दन भगवन्त शरण व्रजति—विशुद्धेति। वय भक्तास्त्वामीमहि शरण व्रजेम । 'त्वमेव शरणयोग्यो, नान्य' इत्याशयेन विशिनष्टि—

**उद्वाहं वीरकन्यानां वीर्यशुल्कादिलक्षणम् ॥ नृगस्य मोक्षण पापाद्द्वारकायां जगत्पते ॥ १८ ॥ स्यमन्तकस्य च मणेरादान सह भार्यया ॥ मृतपुत्रप्रदानं च ब्राह्मणस्य स्वधामत' ॥ १९ ॥ पौण्ड्रकस्य वध पश्चात् काशिपुर्याश्च दीपनम् ॥ दन्तवक्रस्य निधनं चैद्यस्य च महाक्रतौ ॥ २० ॥ यानि चान्यानि वीर्याणि द्वारकामावसन् भवान् ॥ कर्ता द्रक्ष्याम्यहं तानि गेयानि कविभिर्भुवि ॥ २१ ॥ अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै ॥ अक्षौहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथे. ॥ २२ ॥ विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवाञ्छितम् ॥ स्वतेजसा नित्यनिवृत्तमायागुणप्रवाह भगवन्तमीमहि ॥ २३ ॥ त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताशेषविशेषकल्पनम् ॥ क्रीडार्थमद्यात्तमनुष्यविग्रह नतोऽस्मि धुर्यं यदुवृष्णिसात्वताम् ॥ २४ ॥ श्रीशुक उवाच ॥ एवं यदुपति कृष्णं भागवतप्रवरो मुनि' ॥ प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सव' ॥ २५ ॥**

विशुद्धविज्ञानघन केवलज्ञानैकमूर्तिम, अत एव स्वसस्थया स्वरूपसम्यक्स्थित्यैव निरतिशयानन्दस्वात्मानुभवरूपया सम्यगाप्ताः प्राप्ताः सर्वे अर्थाः कामा यस्य तम्, अमोघ वाञ्छित यस्य तम् । ननु 'वाञ्छास्ति चेत्तर्हि तदधीनः ससारोऽपि दुर्वार' इत्याशङ्क्याह—स्वतेजसेति । चिच्छक्त्या नित्यनिवृत्तो मायाकार्यरूपो गुणप्रवाह' ससारो यस्मात्तम्, अतएव भगवन्त निरतिशयैश्वर्यपूर्णम् ॥ २३ ॥ एव शरणमागत्य प्रणमति—यदुवृष्णिसात्वतां धुर्यं श्रेष्ठ त्वामहं नतोऽस्मीत्यन्वय' । श्रेष्ठत्वे हेतुमाह—ईश्वरमिति । ईश्वरत्वमेव स्पष्टयति—आत्ममायया स्वेच्छयैव विनिर्मिता ये अशेषा. सर्वे विशेषा' महदादयस्तै' कल्पना देवादिसृष्टिर्येन तम्, अद्य क्रीडार्थमात्तः स्वीकृतो मनुष्यविग्रहो येन तम् ॥ २४ ॥ तस्य कृष्णस्य दर्शनेनोत्सव आनन्दो यस्य स भागवतप्रवरो मुनिर्नारद एव यदुपति कृष्ण प्रणिपत्य तेनाभ्यनुज्ञातो ययावित्यन्वयः ॥ २५ ॥

भगवानपि आहवे युद्धे केशिन हत्वा बालैर्गोपैः सह पशून् गाः अपालयत्। 'तत्पालनमप्यावश्यकम्' इत्याशयेनाह—गोविन्द इति। गवामिन्द्रतया इन्द्रादिभिरभिषिक्तः। अपिशब्देन सूचित भक्तवात्सल्य स्पष्टयन्नाह—व्रजसुखावह इति। व्रजजनस्य सुखमावहतीति तथा। तेषा भक्ति दर्शयति—प्रीतैरिति ॥ २६ ॥ प्रातरेव केशिवधानन्तर नारदोक्तमङ्गीकृत्य पशून् पालयता श्रीकृष्णेन व्योमो हतः तत्सप्रसङ्गमाह—एकदेत्यादिना। एकदा ते रामकृष्णादयो गोपालाः अद्रेः गोवर्धनस्य सानुषु तटप्रदेशेषु पशून् चारयन्त. चोरपालापदेशतः चोरपालव्याजेन निलीय चोरयित्वा स्थापन यासु ता निलायनाख्या' क्रीडाश्चक्रुरित्यन्वयः ॥ २७ ॥ ताः क्रीडाः स्पष्टयति—तत्रेति। तेषु गोपेषु केचिच्चोरा आसन्। केचित् रामकृष्णादयो मुख्या पालाः स्वामिनः आसन्। एके च दुर्बला मेषायिताश्चासन्। तत्र चौरा मेषायिताश्चोरयन्ति, पालाश्च तान् विचिन्वते। एवमकुतोभया निर्भयाः

भगवानपि गोविन्दो हत्वा केशिनमाहवे ॥ पशूनपालयत् पालैः प्रीतैर्व्रजसुखावहः ॥ २६ ॥
एकदा ते पशून् पालाश्चारयन्तोऽद्रिसानुषु ॥ चक्रुर्निलायनक्रीडाश्चोरपालापदेशत· ॥ २७ ॥
तत्राऽऽसन् कतिचिच्चोरा पालाश्च कतिचिन्नृप ॥ मेषायिताश्च तत्रैके विजह्रुरकुतोभया· ॥ २८ ॥
मयपुत्रो महामायो व्योमो गोपालवेषधृक् ॥ मेषायितानपोवाह प्रायश्चोरायितो बहून् ॥ २९ ॥
गिरिदर्यां विनिक्षिप्य नीत नीत महासुर· ॥ शिलया पिदधे द्वार चतु·पञ्चावशेषिता· ॥ ३० ॥
तस्य तत् कर्म विज्ञाय कृष्ण शरणद· सताम् ॥ गोपान्नयन्त जग्राह वृकं हरिरिवौजसा ॥ ३१ ॥
स निज रूपमास्थाय गिरीन्द्रसदृश बली ॥ इच्छन् विमोक्तुमात्मान नाशक्नोद्ग्रहणातुर· ॥ ३२ ॥

सन्तः सर्वे विजह्रुः ॥ २८ ॥ तदा च महामायावी महामायावित्वेन प्रसिद्धस्य मयस्य पुत्रो व्योमाख्योऽसुरो गोपालवेषधरः स्वय प्रायशश्चोरायितः सन् मेषायितान् बहून् गोपान् अपोवाह अपकृष्य निनाय ॥ २९ ॥ एव नीत नीत गोप गिरेर्दर्यां गुहाया स महासुरो निर्दयो व्योमो विनिक्षिप्य तस्या द्वार शिलया पिदधे आच्छादितवान्। ततश्च मेषायिता गोपाश्चत्वारः पञ्च वाऽवशेषिताः तदानीं नीयमानेन सह पञ्च नो चेच्चत्वारः अवशिष्टाः ॥ ३० ॥ तदस्य व्योमस्य तत् गोपपिधानरूप कर्म विज्ञाय गोपान्नयन्त त व्योम कृष्णो जग्राह। तत्र वृक यथा हरिः सिह. ओजसा बलेन गृह्णाति तथेति। तद्ग्रहणे हेतुमाह—सता निजभक्ताना गोपाना शरणद आश्रयप्रद इति ॥ ३१ ॥ तदा गोपरूप विहाय गिरीन्द्रसदृश पर्वतश्रेष्ठतुल्य निजरूपमास्थाय स्वीकृत्य स बलवानपि व्योम आत्मानं विमोक्तु विमोचयितुमिच्छन्नपि मोचयितु नाशक्नोत्। तत्र हेतुमाह— ग्रहणातुर इति। तद्ग्रहणेन व्याकुल इत्यर्थः ॥ ३२ ॥

अच्युतो बलप्रभावच्युतिरहितः कृष्णस्त व्योम दोर्भ्यां भुजाभ्या निगृह्य भूतले पातयित्वा दिवि अन्तरिक्षे स्थिताना देवाना पश्यता पशुमारं यथा भवति तथा यज्ञीयपशुमिव मुष्टिभिरमारयत् । ' पशुमारम् ' इत्यनेन ' तस्य मारण धर्म ' इति सूचितम् । ' देवाना पश्यताम् ' इत्यनेन तस्य देवभयकरत्व सूचितम् ॥ ३३ ॥ ततश्च भगवान् गुहायाः पिधानमाच्छादन निर्भिद्य कृच्छ्रतः तन्निरोधजात् कष्टात् गोपान्निःसार्य तैः सुरैश्च स्तूयमानः स्वगोकुल प्रविवेशेत्यन्वयः ॥ ३४ ॥ इति श्रीवल्लभाचार्य–वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने ॥ सप्तत्रिंशो गत. केशि–वधादिविनि-

तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले ॥ पश्यतां दिवि देवानां पशुमारममारयत् ॥ ३३ ॥
गुहापिधानं निर्भिद्य गोपान्नि सार्य कृच्छ्रत ॥ स्तूयमान· सुरैर्गोपै· प्रविवेश स्वगोकुलम् ॥ ३४ ॥
इति श्रीमद्भा॰ महापु॰ दश॰ राजसनिरूपणप्रकरणे केशिवधादिनिरूपणं नाम सप्तत्रिंशोऽध्याय ॥ ३७ ॥

॥ श्रीशुक उवाच ॥

अक्रूरोऽपि च तां रात्रि मधुपुर्यां महामति ॥ उषित्वा रथमास्थाय प्रययौ नन्दगोकुलम् ॥ १ ॥
गच्छन् पथि महाभागो भगवत्यम्बुजेक्षणे ॥ भक्ति परामुपगत एवमेतदचिन्तयत् ॥ २ ॥
कि मयाचरित भद्र कि तप्तं परम तप ॥ किं वाऽथाप्यर्हते दत्तं यद्द्रक्ष्याम्यद्य केशवम् ॥ ३ ॥

रूपकः ॥ ३ ॥ ॥ ६९ ॥ ॥ अष्टत्रिंशे यथाक्रूरः कृतवान् स्वमनोरथम् ॥ तथैव रामकृष्णाभ्या सत्कृतश्चेति वर्ण्यते ॥ १ ॥ ' कसेनाज्ञप्तोऽक्रूर. किं कृतवान् ' इत्यपेक्षायामाह–अक्रूरोऽपीति । यस्या रात्रौ कसेन समादिष्टस्ता रात्रिं मधुपुर्यामेवोषित्वा महामति. महती सूक्ष्मा परमार्थग्रहणे समर्था मतिर्बुद्धिर्यस्य सोऽक्रूरोपि प्रात.काले रथमास्थाय नन्दस्य गोकुल प्रति ययौ प्रतस्थे । ' महामतिः ' इत्यनेन सूक्ष्मबुद्धित्वात् कसस्यार्थोऽनर्थो वा भवतु, मम तु तावद्भगवद्दर्शनादिना कृतार्थता भविष्यत्येवेति गमने तदभिप्रायः सूचितः ॥ १ ॥ पथि गच्छन्नम्बुजवच्छोभमाने कृपादृष्टयैव सन्तापहारके ईक्षणे यस्य तस्मिन् भगवति परा भक्तिमुपगतः, अत एव महाभागोऽक्रूर. एव वक्ष्यमाणप्रकारेण एतद्वक्ष्यमाणमचिन्तयत् ॥ २ ॥ तत्रादौ भगवद्दर्शन निश्चित्य तत्कारण स्वभाग्य बहुधा तर्कयति–किमिति । भद्र यज्ञादि मया किमाचरितम् ? किं वा परम तपः व्रतोपवासादि तप्त कृतम् ? अथवा किमर्हते पूज्याय पात्राय दत्तम् ? । कुत एतन्मया कृतमिति सम्भावयति । तत्राह–यदिति । यस्मादद्य केशव ब्रह्मरुद्रयोरपि पूज्य कृष्ण द्रक्ष्यामि । अन्यथैतन्न सम्भाव्यते इति भाव· ॥ ३ ॥

स्वस्य श्रीकृष्णदर्शनासम्भवमाशङ्कते—ममेति । एतदुत्तमश्लोकस्य अविद्यानिवर्तकयशसो दर्शन मम दुर्लभं मन्ये । 'कुत एतत् ?' इत्याशङ्क्य तत्राधिकार्यभावमाह—विषयात्मन इति । विषयाक्रान्तचित्तस्य तदसम्भवादित्यर्थ' । तत्र दृष्टान्तमाह—यथेति । शूद्राज्जन्म यस्य तस्य यथा ब्रह्मणो वेदस्य कीर्तनमध्ययन दुर्लभ तत्राधिकाराभावात्तथेत्यर्थः ॥ ४ ॥ एवमाशङ्क्य पुनर्दर्शन सम्भावयति—मैवमिति । दर्शन न स्यादिति न, किं त्वधमस्य विषयाविष्टचित्तत्वेन नीचस्यानधिकारिणोऽपि ममाच्युतस्य दर्शन स्यादेव । 'कुत' इत्यपेक्षायामाह—ह्रियमाण इति । यथा नद्या ह्रियमाणाना तृणादीना किञ्चित्, कदाचित्तरति कूल प्राप्नोति, तथा कर्मवशेन कालेन ह्रियमाणाना जीवाना मध्येऽपि कश्चित्तरेदिति । ममापि ससारसागरतरण सम्भवतीति भावः ॥ ५ ॥ किञ्च अद्य ममामङ्गल ससारदु खकारण पाप नष्ट अय च मे मम भवो जन्म फलवान् परमफलमोक्षवान् । 'कुत

ममैतद्दुर्लभ मन्य उत्तमश्लोकदर्शनम् ॥ विषयात्मनो यथा ब्रह्मकीर्तन शूद्रजन्मन· ॥ ४ ॥ मैव ममाधमस्यापि स्यादेवाच्युतदर्शनम् ॥ ह्रियमाण कालनद्या क्वचित्तरति कश्चन ॥ ५ ॥ ममाद्यामङ्गल नष्ट फलवांश्चैव मे भव· ॥ यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥ ६ ॥ कंसो बताऽद्याकृत मेऽत्यनुग्रह द्रक्ष्येऽङ्घ्रिपद्म प्रहितोऽमुना हरे ॥ कृतावतारस्य दुरत्यय तम पूर्वेऽतरन्यन्नखमण्डलत्विषा ॥ ७ ॥ यदर्चित ब्रह्मभवादिभि· सुरैः श्रिया च देव्या मुनिभि ससात्वतै ॥ गोचारणायानुचरैश्चरद्वने यद्गोपिकानां कुचकुङ्कुमाङ्कितम् ॥ ८ ॥

एव निश्चयः ?' तत्राह—यदिति । यस्माद्भगवतो योगिभि· केवल ध्येयमेव नतु दृश्यमङ्घ्रिपङ्कजं नमस्ये ॥ ६ ॥ अघटितघटनातोऽपि स्वोद्धार सम्भावयति—कस इति । 'बत' इत्याश्चर्यम् । भगवद्भक्तद्रोह्यपि कसोऽद्य मे ममात्यनुग्रहमकृत कृतवान् । यस्मात् यस्य चरणकमलस्य नखमण्डलस्य त्विषा नखसमूहकान्त्या हृदि ध्यायमानया पूर्वे ध्यातारोम्बरीषादयः दुरत्यय तमः दुस्तर ससारमतरन् । तत्कृतावतारस्य हरेरङ्घ्रिपद्ममसुना कसेन प्रहितः प्रस्थापितोऽह द्रक्ष्ये इत्यन्वय ॥ ७ ॥ चरणस्य सर्वत उत्कर्षमाह—यदिति । यच्छब्दयोस्तद्द्रक्ष्ये इति पूर्वेणान्वय' । यच्चरणकमल ब्रह्मादिभिः सुरैरर्चितमित्यैश्वर्यातिशयम्, श्रिया देव्या चार्चितमिति सौभाग्यातिशयम्, ससात्वतैर्भक्तसहितैर्मुनिभिश्चार्चितमिति परमपुरुषार्थत्वम्, अनुचरै सखिभिः सह गोचारणाय यद्वनेऽचरदिति कृपालुत्वम्, यद्गोपिकाना कुचकुङ्कुमाङ्कितमिति भाक्तिमता सुलभत्व च दर्शितम् ॥ ८ ॥

तदानीमेव शुभसूचक शकुनमिति दृष्ट्वा मनोरथपूर्ति निश्चिनोति—द्रक्ष्यामीति । प्रसिद्धिं द्योतयन्नाह—वै इति । यतो मृगा मे मम प्रदक्षिण यथा भवति तथा प्रचरन्ति गच्छन्ति ततो नून निश्चितं नात्र सन्देहः, शोभनौ कपोलौ तथाभूता नासिका च यस्मिंस्तत् । स्मितसहित. अवलोकश्च यस्मिन् अरुणे कञ्जवल्लोचने यस्मिंस्तच्च तच्च गुडालकैर्वक्रकेशैर्वृत मुकुन्दस्य ससारविमुक्तिप्रदस्य कृष्णस्य मुख द्रक्ष्यामीत्यन्वय. ॥ ९ ॥ पुनरन्यच्चिन्तयति——अप्य-द्येति । भुवो भारावताराय निजेच्छया मनुजत्वमीयुषोर्मनुष्यनाट्य स्वीकृतवतो लावण्यस्य सौन्दर्यातिशयस्य धाम्न. आश्रयस्य विष्णोरपि यदि अद्य उपलम्भन दर्शनं भविता भविष्यति तर्हि मह्य मम दृशो लोचनस्य फल न स्यादिति न अपि तु स्यादेवेत्यर्थ. ॥ १० ॥ य ईक्षितेत्यादिचतुर्णा-मेक कुलकम् । तत्रैव शङ्का--ननु ' अस्मदादिवदेव कर्तृत्वभोक्तृत्वादिधर्मैस्तत्र तत्र प्रतीयमानस्य कथ विष्णुत्वम ? ' इतीमा शङ्का श्लोकत्रयेणापाकुर्वन्

द्रक्ष्यामि नून सुकपोलनासिक स्मितावलोकारुणकञ्जलोचनम् ॥ मुख मुकुन्दस्य गुडालकावृत प्रदक्षिण मे प्रचरन्ति वै मृगा ॥ ९ ॥ अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया ॥ लावण्यधाम्नो भवितोपलम्बन मह्य न न स्यात् फलमञ्जसा दृश. ॥ १० ॥ य ईक्षिताऽहरहितोऽप्यसत्सतो. स्वतेजसाऽपास्ततमोभिदाभ्रम ॥ स्वमायया-ऽऽत्मन्रचितैस्तदीक्षया प्राणाक्षधीभि. सदनेष्वभीयते ॥ ११ ॥ यस्याखिलामीवहभिः सुमङ्गलैर्वाचो विमिश्रा गुणकर्म-जन्मभिः ॥ प्राणन्ति शुम्भन्ति पुनन्ति वै जगद्यास्तद्विरक्ता' शवशोभना मता ॥ १२ ॥

चतुर्थेन तमह द्रक्ष्यामीति मनोरथ करोति—यः सदसतोः कार्यकारणयो' ईक्षिता—ईक्षणमात्रेण कर्तापि अहरहित तत्राहममाभिमानरहित' । तत्र हेतुमाह—स्वतेजसा सच्चिदानन्दस्वरूपप्रकाशेनैवापास्ता तमोभिदाभ्रमा येन सः । तमः स्वरूपाज्ञान, भिदा तत्कृतो भेद , भ्रम अनात्मन्यात्मबुद्धि । एवभूतोपि सदनेषु गोपीगृहवृन्दावनादिषु विहरस्तदीक्षया तेषा जीवाना दृष्ट्या स्वमायया स्वेच्छया आत्मन् आत्मनि स्वस्मिन् रचितै प्रकाशितै' प्राणादि-भिर्युक्तोऽस्मदादिवदभीयते प्रतीयते ॥ ११ ॥ ननु ' सर्वथाऽहङ्कारादिरहितस्यात्मारामस्य अवतारो विहारो वा कुत ' इत्याशङ्क्य 'परानुग्रहार्थ एव' इत्याशयेनाह—यस्येति द्वाभ्या । यस्य भगवतो गुणादिभिर्विमिश्रा युक्तास्तत्प्रतिपादिका वाचो जगत वक्तृश्रोत्रादिप्राणिमात्र प्राणन्ति जीवयन्ति सफ-लजीवन कुर्वन्ति, शुम्भन्ति सज्जनसभासु शोभयन्ति, पुनन्ति पवित्रयन्ति । ' नात्र सन्देह ' इति सूचयन्नाह—वै इति । तत्र गुणाः कृपालुत्वादय., कर्माणि गोवर्धनोद्धरणादीनि, जन्मानि रामकृष्णादीनि । पवित्रीकरणे हेतुमाह—अखिलानि यान्यमीवानि वक्रादीना पापानि तानि घ्नन्तीति तथा

तैरिति । शोभादिकरणे हेतुमाह—सुमङ्गलैरिति । शोभनानि मङ्गलानि धर्मादिपुरुषार्था वक्त्रादीना येभ्यस्तै । विपक्षे दोषमाह—या इति । या वाचस्तैर्भगवद्गुणादिभिर्विरक्तास्तत्प्रतिपादनरहिता' तास्तु विचित्रै' पदैः रागादिभिश्च स्वलङ्कृता अपि वस्त्राद्यलङ्कृतशववच्छोभमाना मता. सता सम्मता. । यथा शवालङ्कारवस्त्रादिदर्शनग्रहणाद्यधिकारिणो नीचा एव नोत्तमास्तथा भगवद्यशोव्यतिरिक्तप्रतिपादना वाक् श्रवणाद्यधिकारिणोऽपि विषयाविष्टचित्ता नीचा एव, नोत्तमा इति ज्ञेयम् ॥ १२ ॥ 'च' इत्यवधारणे । स एव सात्वतान्वये यादवकुले श्रीकृष्णरूपेणावतीर्णः सन् व्रजे आस्ते । अवतारप्रयोजनमाह—यशो वितन्वन् विस्तारयन् । तत्प्रयोजनमाह—स्वसेत्विति । स्वय रचितान् सेतून् वर्णाश्रमधर्मान् पालयताममरवर्याणा शर्मकृत । दैत्यादिवधेन सुखकर्ता सन् । प्रयोजनान्तरमप्याह—गायन्तीति । अशेषाणा सर्वेषा श्रोत्रादीना मङ्गल वाञ्छित फल यस्मात्तत् यद्यशो देवा गायन्ति । भवत्वेव लोकप्रयोजनम्, तस्य तु कि 'प्रयोजन ? येनावतारादि करोति' तत्राह—ईश्वर इति । ईश्वरत्वात् स्वप्रयोजनाभावेपि जीवाना पुरुषार्थसिध्यर्थ अवतारादि करोति इत्याशयः ॥ १३ ॥ त श्रीकृष्ण त्वद्य नूनमह द्रक्ष्यामीत्यन्वयः । 'कथमेव निश्चय' इत्यपेक्षाया तत्र ज्ञापकमाह—उषसः प्रभात-

स चावतीर्णं किल सात्वतान्वये स्वसेतुपालामरवर्यशर्मकृत ॥ यशो वितन्वन् व्रज आस्त ईश्वरो गायन्ति देवा यदशेषमङ्गलम् ॥ १३ ॥ त त्वद्य नून महतां गति गुरु त्रैलोक्यकान्तं दृशिमन्महोत्सवम् ॥ रूप दधानं श्रिय ईप्सितास्पद द्रक्ष्ये ममासन्नुषस सुदर्शना ॥ १४ ॥ अथावरूढ सपदीशयो रथात् प्रधानपुसोश्चरण स्वलब्धये ॥ धिया धृत योगिभिरप्यह ध्रुव नमस्य आभ्यां च सखीन् वनौकस ॥ १५ ॥

समयाः मम सुदर्शना आसन् शुभसूचका बभूवुरित्यर्थः । तद्दर्शनेनात्मन कृतार्थता सूचयन्नाह—महता साधूना गति प्राप्यमिति । ननु 'गुरुविना कथ कृतार्थता' इत्याशङ्क्याह—गुरुमिति । महता गुरुरुपदेष्टापि स एवेति । तद्दर्शनाद्यर्थमेव तन्मार्गोपदेष्टा गुरुरपेक्षितस्तद्दर्शनादौ जाते तु न गुर्वन्तरापेक्षा इत्याशयः । तद्दर्शनेनैव कृतार्थताया परमानन्दजनक तत्स्वरूपसौन्दर्यातिशय हेतुमाह—श्रियो लक्ष्म्या ईप्सितमास्पदमाश्रयभूत स्वरूप दधानमिति । श्रिय ईप्सितत्वहेतुमाह—दृशिमता चक्षुष्मता महानुत्सवो हर्षो यस्मादिति । तथात्वेऽपि हेतुमाह—त्रैलोक्ये एकमेव कान्तमिति ॥ १४ ॥ किञ्च अथास्य दर्शनानन्तर सपदि झटित्येव रथादवरूढः अवतीर्णोऽह प्रधानपुसोः पुरुषोत्तमयोः रामकृष्णयोश्चरण तथा आभ्या अनयोः सखीन् वनौकसो व्रजवासिनश्च नमस्ये इति ध्रुव निश्चितमत्र सन्देहो नास्तीति अहो मे भाग्यम् । पुरुषोत्तमत्वे हेतुमाह—ईशयोरिति । तच्चरणदर्शनस्पर्शादेर्दुर्लभत्वमाह—स्वलब्धय इति । अनाद्यविद्याच्छादितस्वपरमार्थरूपप्रकाशाय योगिभिरपि केवल धिया धृत चिन्तित न त्वेव साक्षाद्दृष्टमित्यर्थ ॥ १५ ॥

किञ्च न केवल नमस्कारादिलाभमात्रम्, किंतु स्वाङ्घ्रिमूले पतितस्य मे मम शिरसि विभुर्महत्तमत्वात् कृष्णो निजहस्तपङ्कज अधास्यत् आधास्यति तेनाप्यह कृतार्थ एव स्याम् । तत्र हेतुमाह—दत्तेति । काल एव भुजङ्ग अजगरस्तस्य रहसा वेगेन प्रोद्वेजितानामत्यन्तभीतानाम्, अतएव शरणैषिणा स्वरक्षकत्वेनाङ्गीकृतानां नृणा दत्तमभय येन तत् ॥ १६ ॥ एव हस्तकमलस्य मुमुक्षूणा मोक्षप्रदत्वमुक्तम् । अथ सकामानामभ्युदयप्रदत्वमाह—समर्पणमिति । कौशिक कौशिकगोत्रोत्पन्नः इन्द्र, कश्चित् पूर्वजन्मति तथा बलिश्च वैरोचनिः पदत्रयपरिमितभूतलदानसमये यत्र यस्मिन् हस्तकमले अर्हण जलमात्र निधाय समर्प्य जगत्त्रयेन्द्रतामवाप । कौशिकेन किञ्चित्कदाचिद्भगवद्धस्ते दत्तम्, येनेन्द्रत्व लब्धमिति पुराणान्तराज्ज्ञेयम् । अथानुरक्ताना परमानन्दजनकत्वमाह—यद्वेति । वाशब्दः आश्चर्ये । सौगान्धिकस्य कमलविशेषस्य गन्ध इव गन्धो यस्य तथाभूत यत् विहारे रासक्रीडाया व्रजयोषिता विहारज श्रम स्पर्शेनापानुदत् दूरीचकार ॥ १७ ॥ ननु ‘ शत्रुणा कसेन प्रेषितस्त्वमपि शत्रुरेव, अत' कथ त्वय्येवमनुग्रह करिष्यति ? ’

**अप्यङ्घ्रिमूले पतितस्य मे विभु शिरस्यधास्यन्निजहस्तपङ्कजम् ॥ दत्ताभय कालभुजङ्गरहसा प्रोद्वेजितानां शरणैषिणां नृणाम् ॥ १६ ॥ समर्हण यत्र निधाय कौशिकस्तथा बलिश्चाप जगत्त्रयेन्द्रताम् ॥ यद्वा विहारे व्रजयोषितां श्रम स्पर्शेन सौगन्धिकगन्ध्यपानुदत् ॥ १७ ॥ न मय्युपैष्यत्यरिबुद्धिमच्युत कंसस्य दूत प्रहितोऽपि विश्वदृक् ॥ योऽन्तर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥ १८ ॥ अप्यङ्घ्रिमूलेऽवहित कृताञ्जलि मामीक्षिता सस्मितमार्द्रया दृशा ॥ सपद्यपध्वस्तसमस्तकिल्बिषो वोढा मुद वीतविशङ्क ऊर्जिताम् ॥ १९ ॥**

इत्याशङ्क्याह—नेति । यद्यप्यह कसेन प्रहित प्रेषितस्तथाप्यच्युत' श्रीकृष्णो मय्यय कसस्य दूतः कार्यसाधकः इत्यरिबुद्धि नोपैष्यति न करिष्यति इत्यर्थ । यतो विश्वदृक् सर्वसाक्षी । तत्राप्यच्युतज्ञानत्व हेतुरच्युतपदेन सूचितः । एतदेव स्पष्टयति—य इति । य. क्षेत्रज्ञ. साक्षी अमलेन यथार्थग्रहणे समर्थेन चक्षुषा चिच्छक्त्या चेतसोन्तर्बहिश्च स्थितस्य प्राणिजातस्येहित चेष्टितमीक्षते । तथाचाह बहिरेव कसानुवर्ती, अन्ततस्तु तत्सेवक एव, अत सर्वज्ञः स मयि नारिबुद्धिं करिष्यतीति भाव' ॥ १८ ॥ अतोऽपि यदि अङ्घ्रिमूले चरणोपान्ते अवहित सयत रचिताञ्जलिं मा सस्मित यथा भवति तथा कृपामृतेनार्द्रया दृशा दृष्ट्या ईक्षिता द्रक्ष्यति तर्हि सपदि तत्क्षण एवापध्वस्तो विनष्ट' समस्तकिल्बिषो दुरित पाप यस्य, वीता निवृत्ता पुनर्जन्मादिशङ्का यस्य तथाभूतश्च सन्नहमूर्जिता वृद्धा मुद वोढा प्राप्स्यामीत्यन्वयः ॥ १९ ॥

किञ्च अथ दर्शनानन्तर स यदि बृहद्भ्या दोर्भ्या भुजाभ्या मा परिरप्स्यते आलिङ्गयिष्यति तदैव मे ममात्मान्तःकरणविशिष्टो जीवस्तीर्थीक्रियते पवित्रीकरिष्यते । ' कुत ' इत्यत आह—अत' अस्मात् तदालिङ्गनाद्धेतो. कर्मात्मको बन्धश्च उच्छ्वसिति शिथिलीभविष्यति । ' परमेश्वरस्त्वा कथ परिरप्स्यते ' इत्याशङ्क्य तद्योग्यता सूचयन्नात्मान विशिनष्टि— सुष्ठु हृत यस्य स सुहृत अतिशयेन सुहृदिति सुहृत्तमस्त तद्विषयककापट्यरहित ज्ञातिपितृव्य न विद्यते यस्मात् अन्यदैवत यस्य तमनन्यभक्त चेति । किञ्च यदा उरुश्रवा. महायशाः श्रीकृष्णः लब्धोऽङ्गसङ्गः परिरम्भो येन त प्रणत बद्धाञ्जलि च मा हे अक्रूर हे तातेति च वक्ष्यते प्रेम्णा सम्बोधयिष्यति तदा वय जन्मभृत. सफलजन्मानो भविष्यामः । स्वकुटुम्बाभिप्रायेण बहुवचनम् । ' उरुश्रवा ' इत्यनेनैव दीनेष्वनुग्रहेणैव तद्यशोविस्तारस्त्वन्यथा न स्यादिति सूचितम् । व्यतिरेके दोषमाह— यस्तु पुमान् महीयसा सर्वपूज्येन भगवता नैवादृतः स्वकीयत्वेन गृहीत. अमुष्य पुसः तज्जन्म धिक् निन्द्यमित्यर्थः ॥ २० ॥ २१ ॥ ननु ' सुहृदादिषु परिष्वङ्गसम्प्रश्नादयो

सुहृत्तम ज्ञातिमनन्यदैवत दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम् ॥ आत्मा हि तीर्थीक्रियते तदैव मे बन्धश्च कर्मात्मक उच्छ्वसित्यत' ॥ २० ॥ लब्धाङ्गसङ्गं प्रणत कृताञ्जलि मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवा ॥ तदा वय जन्मभृतो महीयसा नैवादृतो यो धिगमुष्य जन्म तत् ॥ २१ ॥ न तस्य कश्चिद्दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एवा ॥ तथाऽपि भक्तान् भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थद ॥ २२ ॥ किञ्चाग्रजो माऽवनतं यदूत्तम स्मयन् परिष्वज्य गृहीतमञ्जलौ ॥ गृहं प्रवेश्याप्तसमस्तसत्कृत सम्प्रक्ष्यते कसकृत स्वबन्धुषु ॥ २३ ॥

विषमस्य जीवस्य धर्मास्तस्मिन्नीश्वरे कथ सङ्गच्छन्ते ? तस्य समत्वादन्यथा वैषम्य स्यात ' इत्याशङ्क्याह— नेति । यद्यपि तस्य प्रियादयो न सन्ति तथापि ये भक्तास्त यथा भजन्ते तान् भक्तान् सोऽपि तथैव भजते, अतो न वैषम्यमित्यन्वय. । तत्र दृष्टान्तमाह— सुरद्रुमः कल्पतरुः यद्वत् यथा उपाश्रिताना भजतामेवार्थदः फलप्रदो भवति न सर्वेषा न ह्येतावता तस्य वैषम्य भवति तद्वदित्यर्थः । दयितः प्रियः । अस्यैव विवरण सुहृत्तम इति मित्रमित्यर्थः । तथाऽप्रियः अस्य विवरण द्वेष्यो द्वेषविषयः, आप्तकामत्वात । ' तर्ह्युपेक्ष्य एव कश्चित् स्यात् ' इत्याशङ्क्याह— उपेक्ष्य एवेति, सर्वपालकत्वादित्याशय ॥ २२ ॥ एव श्रीकृष्णविषयकान् मनोरथान् कृत्वा रामविषयक मनोरथ करोति—किञ्चेति । यदूत्तम' अग्रजो राम. स्मयन् हसन् अवनत कृतप्रणाम मा परिष्वज्य तदा यो मयाञ्जलि करिष्यते तस्मिन्नेव गृहीत मा गृह प्रवेश्य तत्राप्तानि लब्धानि सत्कृतानि अर्घ्यादीनि येन त मा प्रति स्वबन्धुषु कसकृतमपकारादिक सम्प्रक्ष्यते इत्यन्वयः ॥ २३ ॥

इत्येव श्वफल्कतनयोऽक्रूर. अध्वनि मार्गे कृष्णमेवानुचिन्तयन् रथेन गोकुल प्राप्तः सूर्यश्चास्त प्राप्तः। ‘ इयमक्रूरावस्था चान्येषा दुर्लभा ’ इति सूचयन् सम्बोधयति—नृपेति । यद्यपि गोकुलमथुरयोरन्तरा क्रोशत्रयमेवाक्रूरस्तु प्रभातसमय एव रथारूढो मथुरातः प्रतस्थेऽतः शीघ्रमेव तदागमन युक्त, तथापि मनोरथपरवशस्तत्र तत्र विलम्बयन् सायकाले गोकुल प्राप्तः इति ज्ञेयम् ॥ २४ ॥ तत्र च क्षिते कौतुकानि अलङ्काररूपाणि अब्जादिरेखाभिर्विलक्षितानि अङ्कितानि अखिलैर्लोकपालैः किरीटेषु जुष्टाः सेविताः अमला' अविद्यादिसकलमलनिवर्तकाः पादरेणवो यस्य तस्य भगवतः सम्बन्धीनि पदानि ददर्शेत्यन्वयः॥ २५ ॥ तेषा पदाना दर्शनेन य आल्हादस्तेन विवृद्धः सम्भ्रमो व्याकुलत्व यस्य सः, तथा प्रेम्णा ऊर्ध्वानि उदञ्चितानि रोमाणि यस्य स , तथा अश्रूणा हर्षजाना कलाभिर्लेशैराकुले ईक्षणे यस्य सोऽक्रूरः । अहो इति दुर्लभता द्योतयति । ब्रह्मादीनामपि दुर्लभानि

**श्रीशुक उवाच ॥ इति सञ्चिन्तयन् कृष्ण श्वफल्कतनयोऽध्वनि ॥ रथेन गोकुल प्राप्त सूर्यश्चास्तगिरिं नृप ॥ २४ ॥ पदानि तस्याखिललोकपालकिरीटजुष्टामलपादरेणो ॥ ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवाङ्कुशाद्यै· ॥ २५ ॥ तद्दर्शनाह्लादविवृद्धसम्भ्रम· प्रेम्णोर्ध्वरोमाऽश्रुकलाकुलेक्षण ॥ रथादवस्कन्द्य स तेष्वचेष्टत प्रभोरमून्यङ्घ्रिरजांस्यहो इति ॥ २६ ॥ देहभृतामियानर्थो हित्वा दम्भं भिय शुचम् ॥ सन्देशाद्यो हरेर्लिङ्गदर्शनश्रवणादिभि ॥ २७ ॥ ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ ॥ पीतनीलाम्बरधरौ शरदम्बुरुहेक्षणौ ॥ २८ ॥**

अमूनि प्रभोः कृष्णस्याङ्घ्रिरजासीति विभावयन् रथादवस्कन्द्य अवप्लुत्य तेषु पादरजस्सु अचेष्टत व्यलुठदित्यन्वय· ॥ २६ ॥ प्रसङ्गादक्रूरभक्तेः परम पुरुषार्थत्वमाह—देहभृतामिति । सन्देशात् गुरूपदेशात् दम्भ मनस्यन्यथा सत्त्वेपि बहिरन्यथाप्रकाशन, भिय भय, शुच शोक च हित्वा हरेर्लिङ्गाना मूर्तीना दर्शन गुणाना श्रवणमादिपदेन कीर्तनस्मरणादिग्रहण देहभृता प्राणिनामियानेतावानेवेत्यर्थः परमपुरुषार्थः । ‘कोसौ ’ इत्यपेक्षायामाह—य इति । कसादेशादारभ्य यो भक्तिविशेषोऽक्रूरस्य जात स इत्यर्थ· ॥ २७ ॥ ततश्च स व्रजे कृष्ण राम च ददर्श । तौ वर्णयति—गावो दुह्यन्त्यस्मिन्निति गोदोहन दोहस्थान गतौ प्राप्तौ पीताम्बरधरः कृष्ण. नीलाम्बरधर. राम. शरत्कालीनाम्बुरुहवदीक्षणे ययोस्तौ ॥ २८ ॥

श्रियो लक्ष्म्याः शोभायाश्च निकेतौ आश्रयभूतौ बृहद्भुजौ पीनवर्तुलदीर्घभुजयुक्तौ बालो यो द्विरदो गजस्तद्वद्विक्रमो गतिर्ययोस्तौ ॥ २९ ॥ ध्वजादिदिरेखाभिश्चिह्नितैरङ्घ्रिभिर्व्रज शोभयन्तौ महात्मानौ सुस्वभावौ अनुक्रोशोनुकम्पा तद्विलसितस्मितयुक्तमीक्षण ययोस्तौ ॥ ३० ॥ उदारा· श्रोत्रादिजनाना वाञ्छितफलप्रदाः रुचिरा मनोहराः क्रीडा ययोस्तौ, स्रग्विणौ रत्नादिमालाधरौ, वनमालिनौ पुष्पमालाधरौ, पुण्य सुष्ठु गन्धो यस्य ते चन्दनेनानुलिप्तानि अङ्गानि ययोस्तौ, विरजे निर्मले वाससी ययोस्तौ ॥ ३१ ॥ प्रधानपुरुषौ पुरुषोत्तमौ। तत्र हेतु.—जगद्धेतू इति। जगत्कारणभूतावित्यर्थ· ॥ तत्रापि हेतुमाह—आद्याविति। सृष्टेः पूर्वमपि विद्यमानौ जगत पती पालकौ, अतो जगत्यर्थे जगत्पालनार्थं स्वांशेन मूर्तिभेदेनावतीर्णौ बलकेशवौ बलाधिक्याद्बल·

किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ ॥ सुमुखौ सुन्दरवरौ बालद्विरदविक्रमौ ॥ २९ ॥
ध्वजवज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजम् ॥ शोभयन्तौ महात्मानौ सानुक्रोशस्मितेक्षणौ ॥ ३० ॥
उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ ॥ पुण्यगन्धानुलिप्ताङ्गौ स्नातौ विरजवाससौ ॥ ३१ ॥
प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती ॥ अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ॥ ३२ ॥
दिशो वितिमिरा राजन् कुर्वाणौ प्रभया स्वया ॥ यथा मारकत· शैलो रौप्यश्च कनकाचितौ ॥ ३३ ॥
रथात्तूर्णमवप्लुत्य सोऽक्रूर स्नेहविह्वल ॥ पपात चरणोपाते दण्डवद्रामकृष्णयो ॥ ३४ ॥
भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षण ॥ पुलकाचिताङ्ग औत्कण्ठ्यात् स्वाख्याने नाशकन्नृप ॥ ३५ ॥

केशौ ब्रह्मरुद्रौ वाति उत्पादयतीति केशव· । ‘क इति ब्रह्मणो नाम ईशोऽह सर्वदेहिनाम् ॥ आवा तवाङ्गसम्भूतौ तस्मात् केशवनामवान्’ इति रुद्रेण केशवशब्दार्थनिरुक्ते. तौ ॥ ३२ ॥ ‘तयोरेव स्वरूप सदा प्रयत्नेन ध्येयम्’ इत्याशयेन सम्बोधयन्ति—राजन्निति। स्वया प्रभया दिशा विगततिमिराः कुर्वाणौ। तत्र दृष्टान्तमाह—यथा कनकेन व्याप्तो मारकत इन्द्रनीलपर्वत इति कृष्णस्योपमा तथाभूतो रौप्यश्च भवपर्वत इति रामस्योपमेति विवेक. । एवभूतौ ददर्शेति पूर्वेण सम्बन्ध. ॥ ३३ ॥ तदा स्नेहेन विह्वलः सोऽक्रूरः तूर्ण शीघ्रमेव रथादवप्लुत्य रामकृष्णयोश्चरणोपान्ते दण्डवत् पपातेत्यन्वयः ॥ ३४ ॥ भगवद्दर्शनेन यः आल्हादस्तेन यद्बाष्प तेन परितः आकुले ईक्षणे यस्य स·, पुलकैरुत्थितरोमभिराचित व्याप्तमङ्ग यस्य सः अक्रूरः हे नृप ! औत्कण्ठ्यात् बाष्पेन कण्ठनिरोधात् स्वाख्याने अक्रूरोऽह नमस्करोमीति कथने नाशकत् न प्रबभूव ॥ ३५ ॥

१ ‘महात्मानावनुक्रोश’इति पाठातरम् ।

भगवान् कृष्णस्तमभिप्रेत्य 'अक्रूरोऽस्मदानयनार्थमागत' इति ज्ञात्वा प्रीतः सन् कसहननसामर्थ्यं द्योतयन् रथाङ्गेन चक्रेण अङ्कितस्तत्किणयुक्तो य· पाणिस्तेन तमभ्युपाकृष्य सम्मुख समीपमाकृष्य परिरेभे आलिङ्गितवान् । यतः प्रणवत्सलः ॥ ३६ ॥ तत· सङ्कर्षणोपि कृतप्रणतिमक्रूरमुपगुह्य आश्लिष्य महामनाः हृष्टमना· स्वपाणिना तस्य पाणी अञ्जलिरूपेण सहतौ हस्तौ गृहीत्वा सानुजः कृष्णेन सहितो गृहमनयत् ॥ ३७ ॥ अथ तत· स्वागत पृष्ट्वा तस्मै अक्रूराय प्रवरं श्रेष्ठमासन निवेद्य समर्प्य यथाविधि पादौ प्रक्षाल्य मधुपर्कार्हणमाहरत् आनीय समर्पितवान् ॥ ३८ ॥ ततश्च आदृतः आदरयुक्तो विभुः रामः अतिथये तस्मै अक्रूराय गा समर्प्य श्रान्त त सवाह्य पादसवाहनादिना तच्छ्रममपनीय मेध्य विशुद्ध बहुगुणोपेत षड्सयुक्तमन्न श्रद्धयोपाहरत् समर्पयामास ॥ ३९ ॥ भुक्तवते तस्मै अक्रूराय रामः प्रीत्या मुखवासैः कर्पूरताम्बूलादिभि· गन्धमाल्यैश्च पुन· परा

भगवांस्तमभिप्रेत्य रथाङ्गाङ्कितपाणिना ॥ परिरेभेऽभ्युपाकृष्य प्रीत प्रणतवत्सल· ॥ ३६ ॥
सङ्कर्षणश्च प्रणतमुपगुह्य महामना ॥ गृहीत्वा पाणिना पाणी अनयत् सानुजो गृहम् ॥ ३७ ॥
पृष्ट्वाऽथ स्वागतं तस्मै निवेद्य च वरासनम् ॥ प्रक्षाल्य विधिवत् पादौ मधुपर्कार्हणमाहरत् ॥ ३८ ॥
निवेद्य गां चातिथये संवाह्य श्रान्तमादृत· ॥ अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद्विभु ॥ ३९ ॥
तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित् ॥ मुखवासैर्गन्धमाल्यै· परां प्रीति व्यधात् पुनः ॥ ४० ॥
पप्रच्छ सत्कृत नन्द· कथ स्थ निरनुग्रहे ॥ कसे जीवति दाशार्ह सौनपाला इवावय ॥ ४१ ॥

निर्वृति तदागमनजन्य सुख मत्त्वा प्रीतिं व्यधात् उदपादयत्। तत्र हेतुमाह—परमधर्मविदिति। अतिथिपूजनस्य परमधर्मतत्त्वज्ञ इत्यर्थः ॥ ४० ॥ ततः सत्कृतमक्रूर नन्दः पप्रच्छ। तत्प्रश्नमेवाह—'कथम्' इत्यादिपादोनाभ्यां—द्वाभ्याम्। वशस्य प्रशस्तत्वात् तन्नाम्ना प्रशसा द्योतयन् सम्बोधयति दाशार्हेति। निरनुग्रहे अतिक्रूरे कसे जीवति सति यूय कथ केन प्रकारेण स्थ जीवथेत्यर्थ·। तत्र दृष्टान्तमाह— सौनपाला इवेति। सूना हिसा तत्पर· सौनः पशुघाती मासविक्रयी स एव पालको येषामवीनां मेषाणा ते इव तत्तुल्या यूयमित्यर्थ·। यथा तन्निकटे तेषा जीवन दुर्घट तथा कसनिकटे युष्माक जीवनमपि दुर्लभमित्याशयः ॥ ४१ ॥

१ 'प्रणतम' इति ख—पुस्तकपाठ।

ननु 'कुशलप्रश्न विहाय कथ जीवनप्रकारप्रश्न कृतः ?' इत्यपेक्षाया तस्य निरनुग्रहत्वमेव स्पष्टयन्नुत्तरमाह—य इति। यः खलः परोद्वेजक' कंसः क्रोशन्त्या रुदन्त्या' स्वस्य स्वसुर्भगिन्यास्तोकान् अपत्यानि अवधीत्, तस्य प्रजाना वो युष्माक तावज्जीवनमेव दुर्लभम्, कुशल सुख तु कि स्वित् विमृशामहे विचारयामेत्यन्वय'। खलत्वे हेतुमाह—असुतृप् इति। असून् प्राणानेव तर्पयतीति तथा सः ॥४२॥ प्रथम कुशल परिपृष्टेन नन्देनेत्थ सूनृतया मधुरया वाचा पृष्टः सुसभाजितः सत्कृतश्चाक्रूरः अध्वपरिश्रम जहावित्यन्वयः ॥ ४३ ॥ इति श्रीवल्लभाचार्य-वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्द-रायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २॥ रचिता दशमे तत्र राजस-रोधवर्णने ॥ अष्टत्रिंशो गतोऽक्रूरागमनादिनिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ गच्छति मथुरा कृष्णे विलापो व्रजयोषिताम् ॥ अक्रूरेण च वैकुण्ठदर्शन

योऽवधीत् स्वस्वसुस्तोकान् क्रोशन्त्या असुतृप् खल ॥ कि नु स्वित्तत्प्रजानां व· कुशलं विमृशामहे ॥ ४२ ॥ इत्थं सूनृ-तया वाचा नन्देन सुसभाजितः ॥ अक्रूर· परिपृष्टेन जहावध्वपरिश्रमम् ॥ ४३ ॥ इति श्रीमद्भागवते महापुराणे दश-मस्कन्धे राजसनिरूपणप्रकरणेऽक्रूरागमनादिनिरूपण नामाऽष्टत्रिंशत्तमोध्याय· ॥ ३८ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ सुखोपविष्ट' पर्यङ्के रामकृष्णोरुमानितः ॥ लेभे मनोरथान् सर्वान् पथि यान् स चकार ह ॥ १ ॥ किमलभ्य भगवति प्रसन्ने श्रीनिकेतने ॥ तथाऽपि तत्परा राजन्न हि वाञ्छन्ति किञ्चन ॥ २ ॥ सायन्तनाशनं कृत्वा भगवान् देवकीसुत ॥ सुहृत्सु वृत्तं कसस्य पप्रच्छान्यच्चिकीर्षितम् ॥ ३ ॥ श्रीभगवानुवाच ॥ तात सौम्याऽऽगत· कच्चित् स्वागतं भद्रमस्तु व· ॥ अपि स्वज्ञातिबन्धूनामनमीवमनामयम् ॥ ४ ॥

विनिरूप्यते ॥ १ ॥ 'भगवद्भक्तानामेव मनोरथा सत्या भवन्ति, नान्येषाम्' इत्याशयेनाह— सुखेति। एव पृष्ट्वा नन्दे गते सति रामकृष्णाभ्यामुरु अधिक यथा तथा मानित', अत एव सुख यथा स्यात्तथोपविष्टः सोऽक्रूरो यान् मनोरथान् पथि चकार तान् सर्वाँल्लेभे। 'ह' इति भगवत्प्रसाद-स्याश्चर्यं सूचयति ॥ १ ॥ श्रीनिकेतने लक्ष्मीपतौ। तत्परा भगवद्भक्ताः। 'तवाप्येतत् सम्मतम्' इत्याशयेन सम्बोधयति— राजन्निति। स्पष्टमन्यत्। ॥ २ ॥ तदा देवकीसुतो भगवान् कृष्णः सायकालोचित भोजन कृत्वा स्वसुहृत्सु वसुदेवादिषु कसस्य वृत्त वर्तनप्रकार अन्यच्च यच्चिकीर्षित तत् पप्रच्छ ॥ ३ ॥ प्रश्नमेव दर्शयति—ताततेति चतुर्भिः। पितृव्यत्वात् तन्महत्त्व सूचयन् सम्बोधयति—तातेति। तत्रापि स्वप्रीति सूचयन् सम्बोधयति—सौम्येति। 'कच्चित्' इति परिप्रश्ने। स्वागत निर्विघ्नमागमन यथा भवति तथा त्वमागत. कच्चित्? तदस्मादिष्टम् वो युष्माक भद्रमस्तु सदा सर्वत्र कुशलमेव

भूयात् । स्वीयानामात्मीयाना ज्ञातीना सपिण्डाना बन्धूनामसपिण्डाना च अपि किमनमीवं दुष्टकसादिनिकटवर्तित्वात् प्रत्यह पापाचरण सम्भवति तद्राहित्य तथा अनामयमारोग्यमस्ति ॥ ४ ॥ ' एव प्रश्नोऽपि मम नातीव सङ्गच्छते ' इत्याह्– कि न्विति । ' युष्मद्दुःख मयि प्रतिफलति ' इत्याशयेन सम्बोधयति– अङ्गेति । मातुलनाम्नि नाममात्रेण मातुले वस्तुतस्तु नोऽस्माक कुलस्यामये रोगतुल्ये कसे एधमाने सति नोऽस्माक स्वाना ज्ञातीना तत्प्रजासु च कि नु कुशल पृच्छे ॥ ५ ॥ ' अहो ' इति स्वखेद सूचयति । अस्मत् अस्मत्तो निमित्तात् आर्ययोः पूज्ययोः पित्रोर्मातापित्रोः भूरि वृजिन दुःखमभूत् । एतदेव प्रपञ्चयति– यत् यस्मात् अस्मत्तो निमित्तात् तयोः पुत्राणा मरण जात यस्माच्च अस्मत्तो हेतोस्तयोर्बन्धन प्राप्तमिति । किञ्च सौम्य हे प्रिय ! मह्य मम स्वाना स्वकीयाना वो युष्माक दर्शन तत्रत्यवृत्तपरिज्ञानार्थं बहुकालत. काङ्क्षित तदद्य इदानीं सञ्जातमिति दिष्ट्या। महानानन्दो ममाभूत्, अतो हे तात ! तवागमनस्य कारण वर्ण्यतामिति ॥ ६ ॥ ७ ॥ एव भगवता पृष्टो माधवो मधुवंशप्रभवोऽक्रूरः सर्वं वर्णयामास ।

कि नु न· कुशल पृच्छे एधमाने कुलामये ॥ कसे मातुलनाम्न्यङ्ग स्वानां नस्तत्प्रजासु च ॥ ५ ॥
अहो अस्मदभूद्भूरि पित्रोर्वृजिनमार्ययो । यद्धेतो पुत्रमरण यद्धेतोर्बन्धनं तयो ॥ ६ ॥
दिष्ट्याऽद्य दर्शन स्वानां मह्य व सौम्य काङ्क्षितम् ॥ सञ्जात वर्ण्यतां तात तवाऽऽगमनकारणम् ॥ ७ ॥

॥ श्रीशुक उवाच ॥

पृष्टो भगवता सर्वं वर्णयामास माधव· ॥ वैरानुबन्धं यदुषु वसुदेववधोद्यमम् ॥ ८ ॥
यत्सन्देशो यदर्थं वा दूत· सम्प्रेषित स्वयम् ॥ यदुक्त नारदेनास्य स्वजन्माऽऽनकदुन्दुभे ॥ ९ ॥
श्रुत्वाऽक्रूरवच कृष्णो बलश्च परवीरहा ॥ प्रहस्य नन्द पितर राज्ञादिष्ट विजज्ञतु ॥ १० ॥

सर्वशब्दविवक्षितमेव प्रपञ्चयति–' वैरानुबन्धम् ' इति सार्धेन । यदुषु विषयभूतेषु कसस्य वैरानुबन्ध वैरमप्रीतिस्तामनुबध्यत इति वैरानुबन्ध , स्तत्कार्यं क्लेशापादन तथा वसुदेववधस्योद्यम प्रयत्नम् ॥ ८ ॥ य. धनुर्यागच्छद्मा सन्देशो यस्य स तदर्थं चाणूरादिभिर्घातनार्थं सोपायनसमानयनार्थं स्वय दूतः दूतीकृत. कसेन व्रजे सम्प्रेषितश्च यच्चानकदुन्दुभेः सकाशात् स्वस्य कृष्णस्य जन्म नारदेनोक्त तत्सर्वमस्य कृष्णस्याग्रे वर्णयामासेत्यन्वय । अनेन यथार्थकथनेन भगवति तस्य निष्कपटत्व दर्शितम् ॥ ९ ॥ इत्यक्रूरस्य वचः श्रुत्वा कृष्णो रामश्च प्रहस्य राज्ञादिष्ट स्ववधादि राज्ञोऽभिप्रेत सङ्गोप्य ' धनुर्यागनिरीक्षणाथ वय राज्ञाहूता ' इति नन्दप्रति विजज्ञतु' विशेषेण ज्ञापयामासतुः । तत्र हेतुमाह–पितरमिति । अन्यथा स तत्र गमन प्रति निरोध कुर्यात्तौ गृहीत्वा पलायेतैवेत्याशयः । ननु ' कसस्य वधोद्यम श्रुत्वापि कथ तत्र गमने उत्सुकौ ' इत्याशङ्क्याह– परवीरहेति । परान् शत्रुभूतान् वीरान् हन्तीति तथेति द्वयोर्विशेषणम् , अतो भयाभावादित्याशयः ॥ १० ॥

स नन्दोऽपि गोपान् समादिशत् आज्ञापयामास । 'आज्ञापयामास' इत्यत्र आज्ञापनमेवाह— गृह्यतामित्यादिना । गोरसः क्षीरादिः गृह्यताम्, तथोपायनानि राज्ञे दातुं योग्यानि उत्तमवस्तूनि गृह्णीध्व, शकटानि च वृषभैर्युज्यन्ताम् ॥ ११ ॥ 'किमर्थमेतत् कर्तव्यम्' इत्यपेक्षायामाह— यास्याम इति । श्वः समनन्तरदिने मधुपुरीं प्रति गमिष्यामः, नृपतेः कंसस्य गोरसान् क्षीरघृतादीन् दास्यामः । 'किमर्थं तत्र गन्तव्यम्?' इत्यपेक्षायामाह— द्रक्ष्याम इति । सुमहत्पर्व धनुर्यागमहोत्सवं द्रक्ष्यामः । 'न चेदानीं यागः समाप्तः, न चात्र कापट्यं किञ्चित्' इत्याशयेनाह— जानपदा इति । जानपदाः सर्वदेशनिवासिनो निमन्त्रिता यान्ति गच्छन्ति इति नात्र सन्देहः । 'प्रसिद्धमेतत्' इति सूचयन्नाह— किलेति । एवं नन्दगोपः क्षत्त्रा व्रजरक्षाधिकृतेन गोकुले अघोषयत् सर्वत्र अघोषितवान् ॥ १२ ॥ तत्तदा ताः कृष्णैकजीवना गोप्यो रामकृष्णौ पुरीं प्रति नेतुम् क्रूरं व्रजमागत-

गोपान् समादिशत् सोऽपि गृह्यतां सर्वगोरसः ॥ उपायनानि गृह्णीध्वं युज्यन्तां शकटानि च ॥ ११ ॥
यास्यामः श्वो मधुपुरीं दास्यामो नृपते रसान् ॥ द्रक्ष्यामः सुमहत् पर्व यान्ति जानपदाः किल ॥ एव-
माघोषयत् क्षत्त्रा नन्दगोपः स्वगोकुले ॥ १२ ॥ गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिता भृशम् ॥ रामकृष्णौ
पुरीं नेतुमक्रूरं व्रजमागतम् ॥ १३ ॥ काश्चित्तत्कृतहृत्तापश्वासम्लानमुखश्रियः ॥ स्रंसद्दुकूलवलयकेश-
ग्रन्थ्यश्च काश्चन ॥ १४ ॥ अन्याश्च तदनुध्याननिवृत्ताशेषवृत्तयः ॥ नाभ्यजानन्निमं लोकमात्मलोकं गता
इव ॥१५॥ स्मरन्त्यश्चापराः शौरेरनुरागस्मितेरिताः ॥ हृदिस्पृशश्चित्रपदा गिरः सम्मुमुहुः स्त्रियः ॥ १६ ॥

मुपश्रुत्य भृशमत्यन्तं व्यथिता बभूवुरित्यन्वयः ॥ १३ ॥ व्यथालिङ्गान्याह— पञ्चभिः । काश्चिद्गोप्यस्तेन श्रवणेन कृतो यो हृत्तापस्तेन यः श्वासस्तेन म्लाना मुखश्रीर्यासां ताः तथाभूता बभूवुः । काश्चन गोप्यस्तु दुकूलानि च वलयानि च केशग्रन्थयश्च स्रंसिताः दुकूलादयो यासां तास्तथाभूता बभूवुः ॥ १४ ॥ अन्यास्तु गोप्यस्तस्य भगवतोऽनुध्यानेन निवृत्ता अशेषाश्चक्षुरादिवृत्तयो यासां ता इमं लोकं स्वदेहमपि नाभ्यजानन् । तत्र दृष्टान्तमाह— आत्मैव लोकस्तं गता आत्मसाक्षात्कारिण्यो योगारूढाश्च यथा देहानुसन्धानमपि न कुर्वन्ति तथेति ॥ १५ ॥ अपराश्च स्त्रियः अनुरागेण यत् स्मितं तेन ईरिताः, हृदि स्पृशन्तीति तथा मनोज्ञाः विचित्राणि पदानि यासु तथाभूताः, शौरेः कृष्णस्य गिरः स्मरन्त्यो मुमुहुरित्यन्वयः ॥ १६ ॥

मुकुन्दस्य सुललिता सुन्दरतरा गति तथाभूता चेष्टा रासक्रीडाद्यात्मिका स्निग्धो यो हासस्तद्युक्तमवलोकन च शोकमपघ्नन्तीति तथाभूतानि नर्माणि परिहासवाक्यानि प्रोद्दामानि अत्युन्नतानि गोवर्धनोद्धरणादीनि चरितानि च ॥ १७ ॥ चिन्तयन्त्य । तत्र हेतुः—भीता इति। तत्रापि हेतुः—मुकुन्दस्य भाविना विरहेण कातरा विह्वलाः, अत एवाश्रूणि मुखेषु यासा ताः। व्याकुलताया हेतुमाह— अच्युते श्रीकृष्णे एवाशयो यासा ता' गोप्यः सङ्घशः स्वस्वसमुदायेन समेताः मिलिताः सत्यः प्रोचुरिति द्वयोरन्वयः॥ १८ ॥ तदुक्तिमेव दर्शयति—'अहो' इत्यादिभि'। तत्र तावच्छ्रीकृष्णवियोगेहेत्वन्तर अपश्यन्त्यो विधातारमेवोपालभन्ते— अहो इति। 'सर्वाधिष्ठातृत्वात्तवैव तदाचरणं न युक्तम्, आश्चर्यकर च' इति सूचितम्। हे विधातः स्तव क्वचित् क्वाप्यशे दया नास्ति। 'कथम्' इत्यपेक्षायामाह— मैत्र्या हिताचरणेन प्रणयेन स्नेहेन देहिनो जनान् सयोज्य अकृतार्थान् अपूर्णमनोरथानेव तान्

गति सुललितां चेष्टां स्निग्धहासावलोकनम् ॥ शोकापहानि नर्माणि प्रोद्दामचरितानि च ॥१७॥ चिन्तयन्त्यो मुकुन्दस्य भीता विरहकातरा' ॥ समेता सङ्घश' प्रोचुरश्रुमुख्योऽच्युताशया ॥ १८ ॥ गोप्य ऊचु ॥ अहो विधातस्तव न क्वचिद्दया सयोज्य मैत्र्या प्रणयेन देहिनः ॥ तांश्चाकृतार्थान् वियुनङ्क्ष्यपार्थक विक्रीडित तेऽर्भ-कचेष्टितं यथा ॥ १९ ॥ यस्त्वं प्रदर्श्यासितकुन्तलावृत मुकुन्दवक्त्र सुकपोलमुन्नसम् ॥ शोकापनोदस्मितलेश-सुन्दर करोषि पारोक्ष्यमसाधु ते कृतम् ॥ २० ॥ क्रूरस्त्वमक्रूरसमाख्यया स्म नश्चक्षुर्हि दत्तं हरसे बताज्ञवत् ॥ येनैकदेशेऽखिलसर्गसौष्ठवं त्वदीयमद्राक्ष्म वयं मधुद्विष ॥ २१ ॥

वियुनङ्क्षि वियोजयसि। चकार एवकारार्थ'। 'नच तद्वियोजनात्तव किञ्चित्प्रयोजनमस्ति' इत्याह— अपार्थक प्रयोजनशून्यमेव तवेद विक्रीडितमिति। तत्र दृष्टान्तमाह— अर्भकस्य चेष्टित यथा भवति तथेति ॥ १९ ॥ विगर्हित च तवेद कर्मेत्यर्थः य इति। असितैर्नीलै. कुन्तलैरावृत शोभनौ कपोलौ यस्मिंस्तत् उन्नता नासिका यस्मिंस्तत् शोकमपनुदति इति शोकापनोदस्तथाभूतो यः। स्मितलेशः गूढहासस्तेन सुन्दर मुकुन्दस्य वक्त्रमस्माक प्रदर्श्य यस्त्व पुनस्तस्य पारोक्ष्यमदृश्यता करोषि तस्य ते तव कृत कर्म असाधु निन्द्यमित्यर्थः ॥ २० ॥ 'किञ्च दत्तापहारित्वेनापि क्रूरस्त्वम' इत्याहुः— क्रूरस्त्वमिति। हि यस्मात् स्वेनैव दत्त नोऽस्माक चक्षुस्त्व हरसेऽत. क्रूरइत्यन्वय। 'अज्ञानाद्धरणेऽपि कथ क्रूरता' इत्याशङ्क्याहु'—अज्ञवदिति। परदुःखानभिज्ञ मूर्खवद्धरसे, न तु त्व तथा, सर्वाधिपतित्वेन चतुरत्वात्। ननु 'अक्रूरो हरति, नाहम्' इति चेत्तत्राहु— आख्यरसमक्र्येति। नह्यत्र

कर्तुमन्य. प्रभवत्यतो नामान्तरेण त्वमेवागतोसीत्यर्थः । ' स्म ' इत्येवकारार्थे । ' बत ' इति खेदे । सर्वाधिष्ठात्रा त्वया यद्येव निन्द्य क्रियते तर्हि अन्यः को वा न कुर्यादिति महत्कष्टमित्याशय । ननु ' कृष्णमेव हरामि, नतु युष्मच्चक्षु ' इत्याशङ्क्याहु.—येनेति । येन त्वद्दत्तेन चक्षुषा मधुद्विषः श्रीकृष्णस्यैकदेशे नेत्रवक्त्रादौ त्वदीय सर्वसृष्टिनैपुण्य वयमद्राक्ष्म अत एतद्वियोगेऽन्यस्य दर्शनीयस्य अभावात् अस्मद्रहस्यमेताभि सर्वं ज्ञातमित्यमर्षेण कृष्ण वियोजयन् अस्मानन्धीकरोष्येवेत्याशयः ॥ २१ ॥ एव विधातारमुपालम्भ्य त विहाय परस्परमाहु'— न नन्दसूनुरिति । ' बत ' इति खेदे । नन्दसूनुर्नोऽस्मान् न समीक्ष्यते । ' अस्मदीक्षण तस्योचितमेव ' इत्याशयेनाहु'— स्वकृतातुरा इति । स्ववियोगेनै वव्याकुला इत्यर्थः । एव व्याकुलताया हेतुमाहु'— गेहादीन् विहाय अद्धा साक्षात् तस्यैव दास्य गता इति । एवभूतानामपि निरीक्षणाभावे हेतु कल्पयन्ति—क्षणभङ्ग अस्थिर सौहृद प्रेम यस्य स इति । तत्रापि हेतुमाहु —नवप्रिय इति । नवो नव' स्त्रीजनः प्रियो यस्य सः ॥ २२ ॥ सेर्ष्यमाहु.—सुखमिति । पुरयोषिता

**न नन्दसूनु· क्षणभङ्गसौहृद· समीक्षते न स्वकृतातुरा बत ॥ विहाय गेहान् स्वजनान् सुतान् पतीस्तद्दास्यमद्धोपगता नवप्रिय· ॥ २२ ॥ सुखंप्रभाता रजनीयमाशिष सत्या बभूवु पुरयोषितां ध्रुवम् ॥ या· सम्प्रविष्टस्य मुख व्रजस्पते पास्यन्त्यपाङ्गोत्कलितस्मितासवम् ॥ २३ ॥ तासां मुकुन्दो मधुमञ्जुभाषितैर्गृहीतचित्त· परवान् मनस्व्यपि ॥ कथ पुनर्न प्रति यास्यतेऽबला ग्राम्या सलज्जस्मितविभ्रमैर्भ्रमन् ॥ २४ ॥**

मथुरापुरस्थस्त्रीणामिय रजनी रात्रि. सुखप्रभाता सुखसूचकानि शकुनानि प्रभातकाले यस्यास्तथा बभूव । तथा तासामाशिष मनोरथाः सत्या बभूवुः । निश्चितत्वात् भाविवृत्तस्यापि भूतत्वेन निर्देश । ' मनोरथाना कथ सत्यता ? ' इत्यपेक्षायामाहुः— या इति । याः पुरयोषितः पुर्या प्रविष्टस्य व्रजस्पते सुडागम आर्षः श्रीकृष्णस्य मुख पास्यन्ति । ' मुखस्य पान कथम् ? ' इत्यत आहु'— अपाङ्गेन नेत्रप्रान्तेन उत्कलितमुज्जृम्भितं स्मिनमेव आसवो मादकत्वात् रसविशेषो यस्मिस्तदिति । पान चात्र सादर दर्शनमेव ॥ २३ ॥ ननु ' द्वित्राणि दिनानि भवन्त्वेवम् , तथाप्यस्मत्स्नेहाकृष्टः पित्रादिभिश्च परावर्तितः पुनरागमिष्यति इति, किं सन्तापेन ? ' इत्याशङ्क्याहुः— तासामिति । ' सावधानतया विचारणीयम् ' इत्याशयेन सम्बोधयन्ति— हे अबला इति । स्वतो मनस्वी धीरोऽपि परवान् नन्दादिपरवशोऽपि मुकुन्दस्तासा पुरस्त्रीणा मधुवन्मनोहरैर्मञ्जुभिर्भाषितैर्वशीकृताचित्तस्तथा तासा सलज्जस्मितैर्विभ्रमै रम्यैश्च विलासैर्भ्रमन् तास्वेवासक्तिं कुर्वन् ग्राम्याः अविदग्धा नोऽस्मान् प्रति कथ पुनर्यास्यते ? न कथञ्चिदित्यर्थ ॥ २४ ॥

किञ्च ' अस्मदुत्सवभाजोऽन्य एवाद्य भविष्यन्ति ' इत्याहु — अद्येति। तत्र पुरे अध्वनि मार्गे गच्छन्त श्रीरमण लक्ष्मीकान्त गुणास्पद सौन्दर्यमाधुर्यादि-गुणानामाश्रयभूत देवकीसुत ये द्रक्ष्यन्ति तेषा दाशार्हाणा तत्प्रभृतीना दृशो दृष्टेरद्य महानुत्सवो भविष्यति । आत्मनेपदमार्षम्। ' अत्र सन्देहो नास्ति ' इत्याहुः— ध्रुवमिति । यद्वा दृश इति द्वितीयाबहुवचनम्। दृशो नेत्राणि प्रति महानुत्सवः प्राप्स्यते इत्यर्थः ॥ प्राप्त्यर्थस्य भवतेरात्मने-पदत्वात् ॥ २५ ॥ ' अक्रूर शपन्त्य ' इत्याहुः— मैतद्विधस्येति । एषा दुष्टा विधा विधानं कर्म यस्य तस्य अकरुणस्य कृपारहितस्य ' अक्रूर ' इत्येतत् शोभन नाम माभूत् न युक्तम्। ' कुत ' इत्यत आहु.—अतीव दारुण इति। अतिभयकर. अत क्रूरः व्यपदेष्टव्य इत्याशयः। इत्यत भयकरत्वमेव स्पष्ट-यन्ति— य इति। योसावक्रूरः सुतरा दुःखित जनमस्मत्समुदायात्मकमनाश्वास्य असान्त्वयित्वा प्रियात् प्राणादपि प्रिय कृष्णमध्वन. पार अस्मद्दृग्गोचर-मतिदूरदेश प्रति नेष्यतीत्यर्थः ॥ २६ ॥ तदा च श्रीकृष्णमालक्ष्याहु·— अनार्द्रधीरिति। अनार्द्रा स्नेहरहिता धीर्यस्य स एष कृष्णो रथमास्थितः गन्तु

अद्य ध्रुव तत्र दृशो भविष्यते दाशार्हभोजान्धकवृष्णिसात्वताम् ॥ महोत्सव श्रीरमणं गुणास्पद द्रक्ष्य-न्ति ये चाध्वनि देवकीसुतम् ॥ २५ ॥ मैतद्विधस्याकरुणस्य नाम भूदक्रूर इत्येतदतीव दारुण ॥ यो-ऽसावनाश्वास्य सुदुःखितं जन प्रियात् प्रिय नेष्यति पारमध्वनः ॥ २६ ॥ अनार्द्रधीरेष समास्थितो रथ तमन्वमी च त्वरयन्ति दुर्मदाः ॥ गोपा अनोभि· स्थविरैरुपेक्षित दैव च नोऽद्य प्रतिकूलमीहते ॥ ॥ २७ ॥ निवारयामः समुपेत्य माधव किं नोऽकरिष्यन् कुलवृद्धबान्धवा· ॥ मुकुन्दसङ्गान्निमिषार्धदुस्त्य-जाद्दैवेन विध्वसितदीनचेतसाम् ॥ २८ ॥

रथमधिरूढः, तमनुसृत्य अमी अनोभिः शकटैरुपलक्षिता गोपाः त्वरयन्ति ' शीघ्र गन्तव्यम् ' इति वदन्ति। यतो दुर्मदाः उत्साहितचित्ता । ' त पुं-पनन्दादयो वृद्धाः कुतो न निवारयन्ति ? ' तत्राहु.— स्थविरैरिति । एषामविनयमालक्ष्य वृद्धैरुपेक्षित गमननिवारण न कृतमित्यर्थः। किञ्च दैव-मप्यद्य नोऽस्माक प्रतिकूल यथा स्यात्तथा ईहते चेष्टते, अन्यथा गमने कश्चिदपि विघ्नः स्यादिति भावः ॥ २७॥ एव परस्पर सम्मन्त्र्य साहस-मधिरुह्याहुः— निवारयाम इति। माधव लक्ष्मीपति कृष्ण सम्यक् विनयपूर्वकमुपेत्य गमनान्निवारयाम । ननु ' एव लज्जात्यागेन तन्निवारणे वृद्धानां कोप. स्यात् ' इत्याशङ्क्याहु — किमिति । निमिषार्धमपि दुस्त्यजान्मुकुन्दस्य सङ्गाद्विध्वसितानि वियोजितानि, अत एव दीनानि चेतांसि यासा तासा नोऽस्माक मृत्युतोऽपि भयाभावात् कुलवृद्धा बान्धवा· अन्ये च सम्बन्धिनो किमकरिष्यन् किमनिष्ट करिष्यन्तीत्यर्थः ॥ २८ ॥

'इतोप्यवश्य साहसमवलम्बनीयम्' इत्याहुः—यस्येति। 'युष्माकमप्येतत् सम्मतमेव' इत्याशयेन सम्बोधयति—गोप्य इति। ललित सुन्दर स्मित च वल्गु मन्त्रः मनोहररहः सलापश्च लीलावलोकः कटाक्षनिरीक्षणं च परिम्भण च तानि यस्यानुरागेणैवैतानि यस्या तस्या रासगोष्ठ्या रासक्रीडासभाया नोऽस्माभि' क्षणदा बह्व्यो रात्रयः क्षणमिव नीता' क्रमितास्तममु कृष्ण विना दुरन्तं तमः दुःसह विरहदुःख कथ न्वतितरेम न कथञ्चिदपि तत्सोढु शक्यमित्यर्थः ॥ २९ ॥ 'आस्ता तावद्दुःखविरहचिन्ता, जीवनमेव तावत् कथ स्यात्' इत्याहुः—य इति। अनन्त' शेषावतारो बल' सखा सहचरो यस्य स. गोपैश्च परिवृत गवा खुररजोभिश्छुरिताः धूसरअलका स्रजश्च यस्य सः य' श्रीकृष्ण अन्ह. क्षये दिनावसाने सायकाले व्रज विशन् वेणु वादयन्

यस्यानुरागललितस्मितवल्गुमन्त्रलीलाऽवलोकपरिरम्भणरासगोष्ठ्याम् ॥ नीता स्म न क्षणमिव क्षणदा विना त गोप्यः कथ न्वतितरेम तमो दुरन्तम् ॥ २९ ॥ योऽह्न. क्षये व्रजमनन्तसख' परीतो गोपैर्विशन् खुररजश्छुरितालकस्रक् ॥ वेणु क्वणन् स्मितकटाक्षनिरीक्षणेन चित्त क्षिणोत्यमुमृते नु कथं भवेम ॥ ३० ॥ श्रीशुक उवाच ॥ एव ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः ॥ विसृज्य लज्जां रुरुदु. स्म सुस्वर गोविन्द दामोदर माधवेति ॥ ३१ ॥ स्त्रीणामेव रुदन्तीनामुदिते सवितर्यथ ॥ अक्रूरश्चोदयामास कृतमैत्रादिको रथम् ॥ ३२ ॥ गोपास्तमन्वसज्जन्त नन्दाद्या शकटै-स्तत. ॥ आदायोपायन भूरिकुम्भान् गोरससम्भृतान् ॥ ३३ ॥

सन् स्मितपूर्वककटाक्षनिरीक्षणेन अस्माक चित्तं क्षिणोति अपहरति तममु कृष्णमृते विना कथ नु भवेम जीवेम ? ॥ ३० ॥ एवं परस्पर ब्रुवाणा भृश-मत्यतं कृष्णे विषक्तानि मानसानि यासा ताः, अत एव भावितद्विरहभयेनातुरा विवशा व्रजस्त्रियो लज्जा विसृज्य त्यक्त्वा सुस्वरमुच्चैः 'हे गोविन्द ! हे दामोदर ! हे माधव !' इति सम्बोधयन्त्यो रुरुदु' स्मेत्यन्वयः। 'स्म' इत्यनेन तत्सम्भव द्योतयति। 'गोविन्द' इत्यनेनास्मदुपेक्षा तव न युक्ता' इति सूचि-तम्। 'दामोदर' इति भक्तवात्सल्यं सूचितम्। 'माधव' इति पतिविरहदुःसहत्वाभिज्ञत्वमिति सूचितम् ॥ ३१ ॥ एव स्त्रीणा रुदन्तीना सतीना ताअनादृत्य कृत मैत्र मित्रदेवताक सन्ध्योपासनादिक कर्म येन सोऽक्रूरः सवितर्युदिते सति अथानन्तर रथ चोदयामासेत्यन्वयः ॥ ३२ ॥ ततस्तदनन्तर भूरि उपायन देयमुत्तम वस्तु तथा गोरससम्भृतान् कुम्भाश्चादाय नन्दाद्या गोपाः शकटैस्त कृष्णरथमन्वसज्जन्त पृष्ठतो ययुरित्यन्वयः ॥ ३३ ॥

तदा गोप्यश्च दयित प्रिय कृष्णमनुव्रज्य तेनानुरञ्जिताः परावृत्य दर्शनादिना किञ्चिदानन्दिताः भगवतः प्रत्यादेश गमनप्रत्याख्यान काङ्क्षन्त्य एव अवतस्थिरे स्थिताः ॥ ३४ ॥ तदा यदूत्तमो भगवान् कृष्णः स्वप्रस्थाने निमित्ते ता गोपीस्तथा तप्यतीस्तप्यमाना वीक्ष्य सप्रेमै प्रेमसहितैः आयास्ये 'शीघ्रमागमिष्यामि' इति दौत्यकैर्दूतवाक्यैः सान्त्वयामास ॥ ३५ ॥ तदा च श्रीकृष्णमनुप्रस्थापिता आत्मानश्चित्तानि याभिस्ता गोप्यो यावद्रथस्य केतुरालक्ष्यते यावच्च रेणुरालक्ष्यते तावत्काल लेख्यानीव चित्रलिखितप्रतिमा इव उपलक्षिता. तत्रैवोपतस्थिरे ॥ ३६ ॥ ततो दूरगमने सति गोविन्दस्य विनिवर्तने निराशाः सत्यस्ता गोप्यो निववृतुः न्यवर्तन्त । 'तासा भगवद्विरहेणातिदुःखिताना दिनातिक्रमः कथम्' इत्यपेक्षायामाह—विशोका इति ।

गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिता ॥ प्रत्यादेश भगवत· काङ्क्षन्त्यश्चावतस्थिरे ॥ ३४ ॥
तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तम ॥ सान्त्वयामास सप्रेमैरायास्य इति दौत्यकै ॥ ३५ ॥
यावदालक्ष्यते केतुर्यावद्रेणू रथस्य च ॥ अनुप्रस्थापितात्मानो लेख्यानीवोपलक्षिता· ॥ ३६ ॥
ता निराशा निववृतुर्गोविन्दविनिवर्तने ॥ विशोका अहनी निन्युर्गायन्त्य प्रियचेष्टितम् ॥ ३७ ॥
भगवानपि सम्प्राप्तो रामाक्रूरयुतो नृप ॥ रथेन वायुवेगेन कालिन्दीमघनाशिनीम् ॥ ३८ ॥
तत्रोपस्पृश्य पानीयं पीत्वा मृष्ट मणिप्रभम् ॥ वृक्षखण्डमुपव्रज्य सरामो रथमाविशत् ॥ ३९ ॥
अक्रूरस्तावुपामन्त्र्य निवेश्य च रथोपरि ॥ कालिन्द्या ह्रदमागत्य स्नान विधिवदाचरत् ॥ ४० ॥
निमज्ज्य तस्मिन् सलिले जपन् ब्रह्म सनातनम् ॥ तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥ ४१ ॥

प्रियस्य कृष्णस्य चेष्टित गायन्त्यः विगतशोका. सत्यः अहनी जात्यभिप्रायेण द्विवचनम्, रात्रिदिनानि निन्यु. अतिक्रमितवत्य ॥ ३७ ॥ हे नृप ' रामाक्रूराभ्या युक्तो भगवान् कृष्णोऽपि वायोरिव वेगो यस्य तेन रथेन अघनाशिनीं कालिन्दीं प्राप्त ॥ ३८ ॥ तत्र कालिन्द्या मृष्ट निर्मल मणि-प्रभ इन्द्रनीलमणिवच्छ्यामं पानीय जलमुपस्पृश्य तेन हस्तपादमुखानि प्रक्षाल्य पीत्वा च वृक्षाणा खण्ड समूहमुपव्रज्य सरामः कृष्णो रथमावि-शत् ॥ ३९ ॥ तदा च शत्रुभ्य. शङ्कितोऽक्रूरस्तौ रामकृष्णौ रथोपरि निवेश्य उपामन्त्र्य पृष्ट्वा च माध्याह्निकार्थं कालिन्द्या ह्रदमागत्य तत्र यथाविधि स्नानमाचरत् कर्तुमारेभे ॥ ४० ॥ सनातन ब्रह्म प्रणव जपन् ॥ ४१ ॥

एव दृष्ट्वा च सोऽक्रूरः ‘ तौ रथस्थौ आनकदुन्दुभेः सुताविह कथ स्त. ? यदि रथादवरुह्यात्रागतौ तर्हि रथे न स्तः ’ इति वितर्क्य उन्मज्ज्य व्यचष्ट ददर्श ॥ ४२ ॥ तत्रापि रथेऽपि यथापूर्वमासीनौ ददर्श । दृष्ट्वा च सलिले यत्तयोर्मे मत्कर्तृक दर्शन तत्कि मृषा ? ‘ एव चेत्तर्ह्यत्र दर्शनं न स्यात् ’ इत्याशयेन सोऽक्रूरः पुनः सलिले न्यमज्जत ॥ ४३ ॥ तत्रापि जले भूय. पुनः अहीश्वर शेषमद्राक्षीत् । त शेष वर्णयति– नता कन्धरा ग्रीवा येषा तै सिद्धादिभिः स्तूयमानम ॥ ४४ ॥ सहस्र शिरासि फणा यस्य तम, देव देदीप्यमान् , सहस्रेषु फणेषु मौलय. यस्य सन्तीति तथा तम् , नीलमम्बर यस्य तम् , बिसश्वेत बिसवत पद्मकन्दवत् श्वेतम् , तत्र दृष्टान्तमाह– शृङ्गैः हिरण्मयैः शिखरैः श्वेत कैलासमिव स्थितम् ॥४५॥ तस्याहीश्वरस्योत्सङ्गे कुण्डलीकृत-देहार्धे पुरुषमद्राक्षीत । त वर्णयति–नीलमेघवच्छ्यामम् , पीते कौशेये कीटरचितकोशजनिततन्तुनिर्मिते वाससी यस्य तम् , चत्वारो भुजा यस्य तम् ,

तौ रथस्थौ कथमिह सुतावानकदुन्दुभे· ॥ तर्हि स्वित्स्यन्दनेन स्त इत्युन्मज्ज्य व्यचष्ट स ॥ ४२ ॥
तत्रापिच यथापूर्वमासीनौ पुनरेव स ॥ न्यमज्जद्दर्शनं यन्मे मृषा किं सलिले तयो· ॥ ४३ ॥
भूयस्तत्रापि सोऽद्राक्षीत् स्तूयमानमहीश्वरम् ॥ सिद्धचारणगन्धर्वैरसुरैर्नतकन्धरै· ॥ ४४ ॥
सहस्रसिरसं देव सहस्रफणमौलिनम् ॥ नीलाम्बर बिसश्वेत शृङ्गै· श्वेतमिव स्थितम् ॥ ४५ ॥
तस्योत्सङ्गघनश्याम पीतकौशेयवाससम् ॥ पुरुष चतुर्भुजं शान्तं पद्मपत्रारुणेक्षणम् ॥ ४६ ॥
चारुप्रसन्नवदन चारुहासनिरीक्षणम् ॥ सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥ ४७ ॥
प्रलम्बपीवरभुजं तुङ्गांसोरस्थलश्रियम् ॥ कम्बुकण्ठं निम्ननाभि वलिमत्पल्लवोदरम् ॥ ४८ ॥
बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् ॥ चारुजानुयुग चारुजङ्घायुगलसयुतम् ॥ ४९ ॥

शान्त प्रसन्नम् , पद्मपत्रे इवारुणे ईक्षणे यस्य तम ॥ ४६ ॥ चारु सुन्दर प्रसन्न च वदन यस्य तम् , चारुहासेन युक्त निरीक्षणं यस्य तम् , शोभने भ्रुवौ उन्नता नासिका च यस्य तम् , चारू कर्णौ यस्य तम् , शोभनौ कपोलौ यस्य अरुण· अधरः यस्य स चासौ स च तम् ॥ ४७ ॥ प्रलम्बा आजानुलम्बिनः पीवराश्च भुजा यस्य तम् , तङ्गावुन्नतौ असौ स्कन्धौ यस्य स चासावुरसि श्रीर्यस्य तम् , कम्बुः शङ्खस्तद्वद्रेखात्रयोपेतो नातिदीर्घो नातिह्रस्वश्च कण्ठो यस्य तम् , निम्ना नाभिर्यस्य तम् , वलिमत्पल्लवोदर वलयः तिर्यङ्निम्ना रेखा यस्य सन्ति तद्वालिमत् तच्च तत् पल्लववत् अश्वत्थदल-सदृश च उदर यस्य तम् ॥ ४८ ॥ बृहद्भ्या कटितटश्रोणिभ्या करभसदृशेन हस्तिशुण्डासदृशेन चारुणा ऊरुद्वयेन चान्वितम् , चारु जानुयुग यस्य तम् , चारुजङ्घायुगलेन सयुतम् ॥ ४९ ॥

तुङ्गावीषदुन्नतौ गुल्फौ च अरुणनखाना व्रातः समूहश्च तेषा दीधितिभिर्वृतम्, नवा अङ्गुल्यः नवौ अङ्गुष्ठौ च तान्येव दलानि तैर्विलसती शोभमाने पादपङ्कजे यस्य तम् ॥ ५० ॥ सुमहार्हा बहुमूल्या उत्तमा मणिव्राताः येषु तैः किरीटादिभिर्भ्राजमानम्। ब्रह्मसूत्र यज्ञोपवीतम्। स्पष्टमन्यत् ॥ ५१ ॥ पद्म करे दक्षिणे यस्य तम्, अवशिष्टैस्त्रिभिः करैः शङ्खचक्रगदा धरतीति तथा तम्, श्रीवत्सो दक्षिणावर्तरोमरेखाविशेषो वक्षसि यस्य तम् ॥ ५२ ॥ सुनन्दादिभिः पृथग्भावोऽभिप्रायो येषा तैर्वचोभिः स्तूयमानम्। तत्र पार्षदैः स्वामीति, सनकादिभिर्ब्रह्मेति, ब्रह्माद्यैर्महेश्वर इति, नवभिर्मरीच्यादिभिर्द्विजोत्तमैः प्रजापतिरिति च अभिप्रायभेदा ज्ञेयाः। भगवत्स्तुतौ तेषामधिकार दर्शयन् विशिनष्टि— अमलात्मभिरिति। अमलो विषयवासनारहित आत्मा अन्तःकरण येषा तै. ॥ ५३ ॥ ५४ ॥ श्रियादिभिर्द्वादशशक्तिभिर्निषेवितम्। श्रीर्लक्ष्मीः सर्वसम्पदधिष्ठात्री। पुष्टिर्यया स्वल्पाहारापि पुष्टा भवन्ति,

तुङ्गगुल्फारुणनखव्रातदीधितिभिर्वृतम् ॥ नवाङ्गुल्यङ्गुष्ठदलैर्विलसत्पादपङ्कजम् ॥ ५० ॥
सुमहार्हमणिव्रातकिरीटकटकाङ्गदैः ॥ कटिसूत्रब्रह्मसूत्रहारनूपुरकुण्डलैः ॥ ५१ ॥
भ्राजमान पद्मकरं शङ्खचक्रगदाधरम् ॥ श्रीवत्सवक्षसभ्राजत्कौस्तुभ वनमालिनम् ॥ ५२ ॥
सुनन्दनन्दप्रमुखैः पार्षदैः सनकादिभिः ॥ सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥ ५३ ॥
प्रह्लादनारदवसुप्रमुखैर्भागवतोत्तमैः ॥ स्तूयमान पृथग्भावैर्वचोभिरमलात्मभिः ॥ ५४ ॥
श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया ॥ विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥ ५५ ॥
विलोक्य सुभृश प्रीतो भक्त्या परमया युत. ॥ हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥ ५६ ॥

तत्प्रवेशाभावे तु बह्वाहारापि न पुष्टा भवन्ति। एवमग्रेऽपि सर्वत्र ज्ञेयम्। गीः सरस्वती प्रसिद्धा। कान्तिः काचित् प्रभा राज्याभिषेकादिना प्रकटा भवति। कीर्तिः यशः। तुष्टिः सन्तोषः, यदभावे महानपि तृणवद्भवति। इला भूमिः। ऊर्जा सर्वसामर्थ्यरूपा। विद्या ज्ञानोपासनारूपा मोक्षोपकारिणी। अविद्या बन्धकरी अज्ञानम्, निद्रादयोपि तद्भेदा एव। शक्तिः सर्वप्रधानभूता इच्छारूपा। माया सर्वव्यामोहिका, चकारेण तदवान्तरभेदा असङ्ख्याता ज्ञेयाः ॥ ५५ ॥ एवभूत विलोक्य सुभृशमत्यन्त प्रीतः परमया उत्कृष्टया च भक्त्या युतः, अतएव हृष्यन्त उदञ्चितास्तनूरुहाः लोमानि यस्य सः भावेन प्रीत्यतिशयेन परिक्लिन्नः आर्द्रः आत्मा चित्त लोचने च यस्य स. ॥ ५६ ॥

सात्वतः अक्रूर· शनैः सत्त्व धैर्यमवलम्ब्य मूर्ध्ना भगवन्त प्रणम्य कृताञ्जलिपुटः संयोजिताञ्जलिपुटः अवहितः सावधानश्च सन् गद्गदया स्खलिताक्षरया गिरा वाण्या अस्तौषीदिति द्वयोरन्वयः ॥५७॥ इति श्रीवल्लभाचार्य–वश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥२॥ रचिता दशमे तत्र राजसरोधवर्णने॥ नवत्रिंशो गतः कृष्ण–प्रयाणादिनिरूपकः ॥३॥ ॥ छ ॥ अक्रूरो वैभव दृष्ट्वा कृष्ण मत्वेश्वरेश्वरम् ॥ चत्वारिंशे च तुष्टाव प्रणम्येति निरूप्यते ॥ १ ॥ ‘ अस्तौषीत् ’ इत्युक्ता स्तुतिमेव दर्शयति– नतोऽस्मीति । त्वा त्वामह नतोऽस्मीति । ‘ ननु त्वमस्मत पितृव्य., कुतो मा बाल नमस्करोषि ’ इत्याशङ्क्याह– अखिलेति । अखिलस्य प्रपञ्चस्य ये हेतवो महदादयस्तेषामपि हेतु कारणमित्यर्थः । तस्यापि कारणान्तराशङ्कायामाह– आद्यमिति । तद्विनाशाशङ्कायामाह– अव्ययमिति । अनादिनिधनमित्यर्थः । परिच्छिन्नत्वाशङ्कायामाह– पूरुषमिति, पूर्णमित्यर्थः । ननु “ एवभूतो नारायण ‘ एको ह वै नारायण आसीत् ’ इत्यादौ प्रसिद्धः,

गिरा गद्गदयाऽस्तौषीत् सत्त्वमालम्ब्य सात्वत ॥ प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिपुट शनैः ॥ ५७ ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे राजसनिरोधनिरूपणप्रकरणे भगवत्प्रयाणनिरूपण नामैकोनचत्वारिंशोऽध्याय· ॥ ३९ ॥ छ ॥ अक्रूर उवाच ॥ ॥ नतोऽस्म्यह त्वाखिलहेतुहेतु नारायण पूरुषमाद्यमव्ययम् ॥ यन्नाभिजातादरविन्दकोशाद्ब्रह्माऽऽविरासीद्यत एष लोक ॥ १ ॥ भूस्तोयमग्नि पवन खमादिर्महानजादिर्मन इन्द्रियाणि ॥ सर्वेन्द्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोऽङ्गभूता· ॥ ॥ २ ॥ नैते स्वरूपं विदुरात्मनस्ते ह्यजादयोऽनात्मतया गृहीताः ॥ अजोऽनुबद्ध· स गुणैरजाया गुणात् पर वेद न ते स्वरूपम् ॥ ३ ॥

न त्वहम्” इत्याशङ्क्य ‘त्वमेव नारायण’ इत्याह– नारायणमिति । नारायणत्वमेव स्पष्टयति–यन्नाभीति । यस्य नाभेर्जातादरविन्दकोशाद्ब्रह्माऽऽविरासीत् । त विशिनष्टि– यत इति । यतो ब्रह्मणः सकाशात् एष परिदृश्यमानो व्यष्ट्यात्मको लोक प्राणिसमूहो जात इत्यर्थः ॥ १ ॥ अखिलहेतुत्वमेव प्रपञ्चयति– भूरिति । पृथ्व्यादीनि आकाशान्तानि पञ्चमहाभूतानि, तेषामादि· कारणमहङ्कारः, महान् महत्तत्त्व, अजा मूलप्रकृतिः तदादिः पुरुषः, मनः, इन्द्रियाणि चक्षुरादीनि दश, सर्वेन्द्रियाणामर्थाः शब्दस्पर्शरूपरसगन्धाः, विबुधाश्च सर्वेन्द्रियाधिष्ठातारो दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रका इत्युक्ताः एते ये सर्वे जगतो हेतवस्ते तवाङ्गात् भूताः जाताः ॥ २ ॥ ‘ अत एव दुर्ज्ञेयस्त्वम् ’ इत्याह– नेति । एते अजा प्रकृति· आदिर्येषा ते आत्मनः स्वस्य ते तव च स्वरूप नैव विदुः । हिशब्दोऽवधारणे । अज्ञाने हेतुमाह– अनात्मतयेति । जडत्वेनेत्यर्थः । तत्र हेतुमाह– गृहीता इति । प्रत्यक्षादिभिर्दृष्टा ॥ ननु ‘ जडा मा मा जानन्तु, जीवास्तु ज्ञास्यन्ति ’ इत्यत आह– अज इति । स अजो ब्रह्मापि अजाया

गुणै. रज‌आदिभिरनुबद्धः आवृतः। अतो गुणातीत ते तव स्वरूप न वेद, अर्वाचीनोऽन्य. कुतो ज्ञास्यतीति ॥ ३ ॥ ननु ' यदि कोऽपि न जानाति तर्हि कथ तस्य ससारनिवृत्तिः ' इत्येक्षाया ' येनकेनापि मार्गेण भजतस्तत्सम्भवति ' इत्याशयेनाह— त्वामिति । योगिनस्त्वा महापुरुषचतुर्भुजादि-विशिष्टरूपं परमेश्वरमद्धा साक्षादेव यजन्ति ध्यायन्ति । अन्ये च साधव. सदाचारनिष्ठाः केचित् साध्यात्ममात्मनि शरीरे भवमध्यात्म तेन सहित शरीरावयवाक्षिहृदयादिषु वसन्त त्वा यजन्ति । तथाहि छान्दोग्ये— " अथाध्यात्मं य एषोऽन्तरक्षिणि पुरुषो दृश्यते " इति। केचित्तु साधिभूत सर्व-भूतस्थ सर्वशरीरक त्वा यजन्ति, ' सरित्समुद्राश्च हरे' शरीरम्, इति वक्ष्यमाणत्वात्। केचित् पुनः साधिदैव आदित्यादिदेवान्तरथ त्वां यजन्ति। यथोक्तं छान्दोग्ये— " य एषोऽन्तरादित्ये हिरण्मय. पुरुषो दृश्यते " इति ॥ ४ ॥ वेदस्य कर्मज्ञानोपासनाकाण्डभेदेन त्रिविधत्वात् प्रथम कर्ममार्गेण भजनमाह— त्र्य्येति । केचिद्वैतानिकाः कर्मयोगिनो द्विजाः त्र्य्या ऋग्यजुःसामात्मकवेदत्रयरूपया विद्यया बोधितैर्विततैर्यज्ञैस्त्वा वै त्वामेव यजन्ते

त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरम् ॥ साध्यात्म साधिभूत च साधिदैव च साधवः ॥ ४ ॥
त्रय्या च विद्यया केचित्त्वां वै वैतानिका द्विजा' ॥ यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ॥ ५ ॥
एके त्वाऽखिलकर्माणि संन्यस्योपशम गता. ॥ ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रहम् ॥ ६ ॥
अन्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते ॥ यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्तिकम् ॥ ७ ॥
त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् ॥ बह्वाचार्यविभेदेन भगवन् समुपासते ॥ ८ ॥

आराधयन्ते। ननु ' तच्चेन्द्रवरुणादीनामेवाराधनं प्रसिद्धम् ' इत्याशङ्क्याह— नानेति । नाना वज्रहस्तादीनि रूपाणि येषा ते ये अमरा. तेषामाख्यया नाम्ना ऐन्द्रवारुणादिसूक्तैरिन्द्रादयः सर्वैश्वर्येण प्रकाश्यन्ते, न च सर्वेश्वरा बहव' सम्भवन्त्यतो नामभेदेन त्वामेव यजन्ते इत्याशयः ॥ ५ ॥ ज्ञान-मार्गेण भजनमाह— एके इति । एके मुख्याः ज्ञानिनः उपशम विषयवैतृष्ण्य गताः, अतएवाखिलानि कर्माणि लौकिकवैदिकव्यापारान् सन्यस्य त्यक्त्वा ज्ञानयज्ञेन समाधिलक्षणेन ज्ञानविग्रह सच्चिदानन्दमूर्ति त्वा यजन्ति ध्यायन्ति ॥ ६ ॥ उपासनामार्गेण भजनमाह— अन्ये चेति । अन्ये च ते त्वयाऽभिहितेन विधिना पञ्चरात्राद्युक्तप्रकारेण संस्कृत आत्मा देहो येषा ते त्वन्मया. त्वन्मयत्वेनात्मान चिन्तयन्तो वासुदेवसङ्कर्षण-प्रद्युम्नानिरुद्धभेदेन बहुमूर्तिक नारायणरूपेणैकमूर्तिक च त्वामेव यजन्ते ॥ ७ ॥ हे भगवन् ! अन्ये च शिवोक्तेन मार्गेण तत्रापि बहूनामा-चार्याणां विभेदेन तत्तदाचार्योक्तावान्तरप्रकारभेदेन त्वामेव शिवरूपिण समुपासते ॥ ८ ॥

हे प्रभो स्वामिन् ! येऽप्यन्यदेवताभक्तास्ते यद्यप्यन्यदेवताधिय· तत्तद्देवताविषयकपरमेश्वरबुद्धिमन्तः तथापि ते सर्वे त्वामेव यजन्ति। 'कुत' इत्यपेक्षा यामाह– परमेश्वरान्तरस्यासम्भवात्। 'त्वमेव सर्वदेवान्तर्यामी परमेश्वर· पूज्यश्च' इत्याशयेनाह– सर्वदेवमयेश्वरमिति ॥ ९ ॥ अत्र दृष्टान्तमाह– यथेति। अद्रेः सकाशात् प्रभवन्त्युत्पद्यन्ते इति तथाभूता नद्य· पर्जन्येनापूरिता बहुस्रोतसो यथा सर्वत· सर्वासु दिक्षु सिन्धुमेव विशन्ति तद्वत् गतयो भजनमार्गा अपि त्वामेव विषयीकुर्वन्तीत्यन्वयः। न च 'तर्हि भगवद्भक्तानामन्यदेवताभक्ताना च को विशेष' इति शङ्क्यम, 'भगवद्भक्ताना साक्षादेव तत्प्राप्तिर्देवतान्तरभक्ताना तु तत्तद्देवताप्राप्तिस्ततश्च तासा यदा अधिकारसमाप्तौ भगवत्प्राप्तिः तदा एतेषामपि तत्प्राप्तिरिति विशेष' इत्याशयेनाह– अन्तत इति। देवतान्तरस्यापि भगवत्प्राप्तौ सर्वकारणत्व हेतु सूचयन् सम्बोधयति– हे प्रभो इति ॥ १० ॥ सूचित कारणत्व स्पष्टयस्तत्प्राप्तिप्रकारमाह– सत्त्वमिति। सत्त्वादयो भगवतः शक्तिरूपाया· प्रकृते· गुणा·। तेषु हि प्राकृताः प्रकृतिपरिणामदेहाद्युपाधयो ब्रह्मपर्यन्ता· स्थावरादयो

**सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम् ॥ येऽप्यन्यदेवताभक्ता यद्यप्यन्यधिय· प्रभो ॥ ९ ॥ यथाऽद्रिप्रभवा नद्य पर्जन्यापूरिताः प्रभो ॥ विशन्ति सर्वत· सिन्धुं तद्वत्त्वां गतयोऽन्तत ॥ १० ॥ सत्त्वं रजस्तम इति भवत· प्रकृतेर्गुणा· ॥ तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः॥ ११ ॥ तुभ्य नमस्तेऽस्त्वविषक्तदृष्टये सर्वात्मने सर्वधिया च साक्षिणे ॥ गुणप्रवाहोऽयमविद्यया कृतः प्रवर्तते देवनृतिर्यगात्मसु ॥ १२ ॥**

जीवाः स्वोपाधिद्वारा प्रोताः, प्रविष्टास्ते च प्रकृतौ, सा च त्वयीति, अतः क्रमेणोपाधिलयात् सर्वेऽपि त्वामेव प्रविशन्तीति ॥ ११ ॥ स्वय तु भगवत्प्राप्तये तन्नमस्कार प्रार्थयति– तुभ्यमिति। ते त्वत्प्राप्त्यर्थ तुभ्य नमोस्तु। "एतदीशनमीशस्य प्रकृतिस्थोपि तद्गुणैः न युज्यते इति" हि परमेश्वरलक्षणस्योक्तत्वादन्यान्विहाय तत्प्रासीष्टत्वे परमेश्वरत्वहेतुमभिप्रेत्य तल्लक्षणमाह– अविषक्तदृष्टये इति। 'अदृष्टेष्वासक्त्यसम्भवात्किमत्राश्चर्यम्' इत्याशङ्क्याह– सर्वधिया च साक्षिणे इति। चकारो बुद्धिव्यतिरिक्तसर्वपदार्थसङ्ग्रहार्थ। अविषक्तदृष्टित्वे च हेतुमाह– सर्वात्मन इति। 'इतरे तु स्वयमेव ससरन्तीति न ते भजनयोग्या' इत्याशयेनाह– गुणेति। गुणैः सत्त्वादिभि· प्रकर्षेणोह्यत इति गुणप्रवाहो जन्ममरणाद्यात्मकससारोयमसकृत् पुनःपुनरविद्यया स्वरूपावरक–त्वच्छक्त्या देवनृतिर्यक्त्वे आत्मानो येषा तेषु देवादिशरीराभिमानिषु प्रवर्तन्ते इत्यर्थ· ॥ १२ ॥

उक्त सर्वात्मकत्वमेव स्पष्टयति— अग्निरित्यादिना । अत्राग्न्याद्यनुवादेनेश्वरमुखाद्यवयवता विधीयते । योऽयमग्निः स तव मुखमित्यादि । अवनिस्त-वाङ्घ्रिः अवनिशब्दः पातालप्रभृतिमहीतलपर्यन्तसङ्ग्राहक, आङ्घ्रिशब्दस्तु पादमूलप्रभृतिजघनपर्यन्तावयवसङ्ग्राहकः, 'पातालमेतस्य हि पादमूलम्' इत्युक्तत्वात् । सूर्य ईक्षण चक्षुः सर्वत्रैकवचन जात्यभिप्रायेण । नभो नाभिः अत्रापि नभःशब्दो भुवर्लोकप्रभृतितपोलोकपर्यन्तसङ्ग्राहकः, नाभिशब्दस्तु तत्प्रभृतीनामुरोग्रीवावदनललाटपर्यन्ताना सङ्ग्राहकः । अथ अपि च दिश. श्रुतिः श्रोत्रम् । द्यौः सत्यलोकस्तव क मूर्धा । सुरेशा. इन्द्रादयस्तव बाहवः । अर्णवा. समुद्रास्तव कुक्षिः । मरुद्वायुस्तव प्राण. बल च, तत् कल्पितमुपासकैर्ध्यानार्थमिति शेष. ॥ १३ ॥ वृक्षा औषधयश्च तव रोमाणि । मेघास्तु तव शिरोरुहाः केशाः। अद्रयः पर्वताः परस्य परमेश्वरस्य तवास्थीनि नखानि च । रात्रिश्चाहश्च तव निमेषणम्, तत्र रात्रिर्निमीलन अहश्चोन्मीलनम् । प्रजापतिर्ब्रह्मा तव मेढ्रः गुह्यमिन्द्रियम् । वृष्टिस्तु तव वीर्य रेतः । तत्र प्रमाणमाह— ईष्यते प्रामाणिकैरुपासनायामिति शेष. ॥ १४ ॥

अग्निर्मुख तेऽवनिरङ्घ्रिरीक्षण सूर्यो नभो नाभिरथो दिश' श्रुति. ॥ द्यौ. क सुरेन्द्रास्तव बाहवोऽर्णवा. कुक्षिर्मरुत्प्राणबल प्रकल्पितम् ॥ १३ ॥ रोमाणि वृक्षौषधय. शिरोरुहा मेघाः परस्यास्थिनखानि तेऽद्रय' ॥ निमेषण रात्र्यहनी प्रजापतिर्मेढ्रस्तु वृष्टिस्तव वीर्यमिष्यते ॥ १४ ॥ त्वय्यव्ययात्मन् पुरुषे प्रकल्पिता लोका सपाला बहुजीवसङ्कुला' ॥ यथा जले सञ्जिहते जलौकसोऽप्युदुम्बरे वा मशका मनोमये ॥ १५ ॥

न केवलमेतावत् एव, किन्तु बहुभिर्जीवैः सङ्कुलाः व्याप्ता. सपालाः पालकैः सहिता. सर्वे लोकाः अनन्तानि ब्रह्माण्डानि त्वयि कल्पिताः रचिताः सन्त' सञ्जिहते प्रचरन्ति । 'एव सर्वात्मत्वे जन्मादिविकारित्व स्यात्' इत्यत आह— अव्ययात्मन्निति । लुप्तसप्तम्यन्त पदम् । अव्यय. सर्वविकाररहितः आत्मा स्वरूप यस्य तस्मिन्नित्यर्थ. । एकस्य कथ सर्वाधारत्व तत्राह— पुरुष इति, पूर्ण इत्यर्थ' । ननु 'एवभूतस्य ज्ञान कुतो न' इत्यपेक्षायामाह— मनोमय इति । विशुद्धमनोग्राह्य इत्यर्थ' 'मनसैवानुद्रष्टव्यः' 'दृश्यते त्वग्रया बुद्ध्या' इत्यादिश्रुते' । तत्र दृष्टान्तद्वयमाह— यथेति । जलौकसो मत्स्यादयः यथा सावकाशं जले सञ्जिहते प्रचरन्ति नहि तेन जलस्य कापि क्षतिस्तथेत्यर्थः । अथवा उदुम्बरे उदुम्बरवृक्षे मशकाः कीटविशेषाः । उदुम्बरवृक्षे हि असङ्ख्यातानि फलानि भवन्ति तेषु च प्रत्येक परस्परवार्तानभिज्ञा मशकास्तिष्ठन्ति, एवमेकस्मिन्नेव त्वयि अनन्तानि ब्रह्माण्डानि निवसन्ति, तेषा लोकेषु तत्तत्स्थानेषु परस्परवार्तानभिज्ञा जीवा निवसन्तीत्यर्थः ॥ १५ ॥

यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि ॥ तैरामृष्टशुचो लोका मुदा गायन्ति ते यशः ॥ १६ ॥
नम कारणमत्स्याय प्रलयाब्धिचराय च ॥ हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे ॥ १७ ॥
अकूपाराय बृहते नमो मन्दरधारिणे ॥ क्षित्युद्धारविहाराय नमः सूकरमूर्तये ॥ १८ ॥
नमस्तेऽद्भुतसिंहाय साधुलोकभयापह ॥ वामनाय नमस्तुभ्य क्रान्तत्रिभुवनाय च ॥ १९ ॥
नमो भृगूणां पतये दृप्तक्षत्रवनच्छिदे ॥ नमस्ते रघुवर्याय रावणान्तकराय च ॥ २० ॥
नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ॥ प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥ २१ ॥
नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने ॥ म्लेच्छप्रायक्षत्रहन्त्रे नमस्ते कल्किरूपिणे ॥ २२ ॥

तर्हि तेषा जीवाना निस्तारः कथं तत्राह— यानीति । इहलोके क्रीडनार्थं त्व यानि यानि मत्स्यादिरूपाणि बिभर्षि तैरनुचिन्तितरूपैरामृष्टाः परिमार्जिताः शुचः आध्यात्मिकादितापा येषा ते लोका जनाः मुदा तव यशो गायन्ति, तेन तेषा निस्तार इति शेषः ॥ १६ ॥ 'कानि तानि रूपाणि' इत्यपेक्षाया तानि दर्शयन् भक्त्या स्वय नमस्करोति— नम इति । सत्यव्रतरक्षावेदोद्धारादिकारणेन स्वीकृतमत्स्यरूपाय नमः । सत्यव्रतरक्षाद्यर्थमेव प्रलयाब्धौ चरतीति तथा तस्मै । हयग्रीवावतारप्रयोजनमाह— मधुकैटभयोर्मृत्यवे हन्त्रे ॥ १७ ॥ बृहते अकूपाराय कूर्माय नमः । तदवतारचरितमाह— मन्दरधारिण इति । क्षित्युद्धारणं विहारो यस्य तस्मै सूकरमूर्तये नमः ॥ १८ ॥ अद्भुतसिंहाय नरसिंहाय ते तुभ्य नमः । अवतारप्रयोजन सूचयन् सम्बोधयति— साधुलोकभयापहेति । साधुलोकस्य भयमपहन्तीति तथा तत्सम्बोधनम् । वामनाय तुभ्य नमः । तदवतारप्रयोजनमाह— क्रान्त त्रिभुवनं येन तस्मै नमः ॥ १९ ॥ भृगूणा पतये परशुरामाय नमः । तदवतारप्रयोजनमाह— दृप्त गर्वित क्षत्रकुलमेव वन तच्छिनत्तीति तथा तस्मै नमः । रघुकुलेषु वर्याय श्रेष्ठाय श्रीरामाय ते तुभ्य नमः । तदवतारप्रयोजनमाह— रावणस्य नाश करोतीति तथा तस्मा इति ॥ २० ॥ चतुर्व्यूहरूपेणावतीर्णं श्रीकृष्ण नमस्करोति— नमस्ते वासुदेवायेति । तदवतारप्रयोजनमाह— सात्वताना भक्ताना पतये पालकायेति ॥ २१ ॥ बुद्धाय नमः वेदाप्रामाण्याद्युपदेष्टृत्वाद्दोषमाशङ्क्याह— शुद्धायेति । 'वेदनिन्दकस्य कथ शुद्धता' इत्याशङ्क्य 'तन्निन्दाया दैत्यमोहनार्थत्वान्न वस्तुतस्तद्दोष' इत्याशयेनाह— दैत्यदानवमोहिने इति ॥ २२ ॥

१ भारतशातिपर्वणि मोक्षधर्मे इय कथा सविस्तरास्ति । २ इदमर्ध निगदव्याख्यातम् ।

एव नमस्कृत्य स्व बन्धविमोक्ष प्रार्थयितु लोकवृत्तमाह— भगवन्निति । अय सर्वोऽपि जीवलोकस्तव मायया मोहितः, अतः 'अह मम' इत्यसति तुच्छे देहे तदनुबन्धिधनपुत्रादौ च ग्राहः अभिमानो यस्य सः कर्मवर्त्मसु शब्दादिविषयप्राप्त्युपायेषु भ्राम्यते इत्यन्वयः । "ये हि सस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय न तेषु रमते बुध." ॥ "यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान् । तावन्तो निखनन्त्येव हृदये शोकशङ्कवः" इत्यादिवचनप्रामाण्याच्छब्दादिविषयाणा दुःखहेतुत्वमेव, तत्र सुखहेतुत्वबुद्ध्या तत्साधनेषु प्रवृत्तिर्भ्रान्तिमूलैवेत्याशयः ॥ २३ ॥ 'न केवलमयं लोक एव भ्राम्यति, किंतु तदन्तर्गतोऽहमपि तथैव' इत्याह— अह चेति । तत्र अहमित्यादिचतुर्भिस्तावदात्मनः कार्पण्यमावेद्य सोहमित्येकेन शरण प्रपद्य ततो द्वाभ्या प्रणामपूर्वक स्वरक्षा प्रार्थयते । 'त्वमेवैतादृशरक्षाया समर्थ' इत्याशयेन सम्बोधयति— विभो इति । अह च सर्वलोकवत् स्वप्नतुल्येषु क्षणभङ्गुरतया स्वप्नतुल्यपदार्थेषु आत्मादिषु सत्यधिया नित्यबुद्ध्या भ्रमामि आसक्ति करोमीत्यन्वयः । 'एव जानन्नपि

भगवञ्जीवलोकोऽय मोहितस्तव मायया ॥ अह ममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु ॥ २३ ॥
अह चाऽऽत्मात्मजागारदारार्थस्वजनादिषु ॥ भ्रमामि स्वप्नकल्पेषु मूढः सत्यधिया विभो ॥ २४ ॥
अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम् ॥ द्वन्द्वारामस्तमोविष्टो न जाने त्वात्मन प्रियम् ॥ २५ ॥
यथाऽबुधो जलं हित्वा प्रतिच्छन्न तदुद्भवै' ॥ अभ्येति मृगतृष्णां वै तद्वत्त्वाऽह पराङ्मुखः ॥ २६ ॥

कुतस्तत्रासक्तः ?' तत्राह— मूढ इति । त्वन्मायया मोहित इत्यर्थः । अत्र आत्मा देहः । आत्मजा. पुत्राः । अगार गृहम् । दारा. स्त्रिय. । अर्थो धनम् । स्वजना. बान्धवादयः ॥ २४ ॥ मोहमेव स्पष्टयति— अनित्येति । देहादिषु अनित्येषु नित्या इति, अनात्मसु आत्मान इति, दुःखेषु दुःखप्रदेषु सुखप्रदा इति, विपर्यया मतिर्यस्य स' । हि यस्मात् एवभूतोह तस्मात् द्वन्द्वेषु सुखदु.खादिषु आरमते क्रीडतीति द्वन्द्वाराम आत्मनः प्रिय आत्मत्वादुपकारित्वाच्च निरतिशयनिरुपाधिकप्रीतिविषय त्वा न जाने । विपर्ययमतित्वे हेतुमाह—तमोविष्ट इति । अविद्याव्याप्त इत्यर्थ' ॥ ॥ २५ ॥ तत्रैवाच्छादितहेत्वन्तर दृष्टान्तेन स्पष्टयति—यथेति । अबुधः अज्ञो जनो यथा तदुद्भवै. तस्मात् जलादुद्भवन्तीति तथा तैस्तृणादिभिश्छन्न जल हित्वा मृगतृष्णा जलवदाभासमाना मरीचिकामभ्येति अनुधावति तद्वत्त्वामह पराङ्मुखः । निरतिशयपुरुषार्थं परमानन्दस्वरूप त्वां हित्वा मरीचिकातोयवद्विषयसुखेष्वासक्त इत्यर्थ' ॥ २६ ॥

ननु 'तर्हि मनःसमाधान कृत्वा विषयासक्तिस्त्याज्या' इत्याशङ्क्याह–नेति । अह मनः रोद्धुं वशीकर्तुं नोत्सहे न शक्नोमि । तत्र हेतुमाह–कामकर्मभ्या हत क्षुभित प्रमाथिभि. प्रबलैरक्षैरिन्द्रियैश्चेतस्ततो ह्रियमाण विषय प्रत्याकृष्यमाणमिति। 'विवेके सति किमशक्यम्' इत्याशङ्क्याह–कृपणधीरिति। कृपणा विवेके असमर्था धीर्यस्य स. ॥ २७ ॥ स इन्द्रियपरतन्त्रोऽह तवाङ्घ्रिमुपगतः शरण प्राप्तोऽस्मि। भगवच्चरणस्य दुर्लभत्वमाह–असता विषयाकृष्टमनसा दुरापमिति। तर्हि विषयाकृष्टस्त्व कथ प्राप्तस्तत्राह– तच्चाप्यभ्युपगमन भवदनुग्रहभवदनुग्रहमूलकमह मन्ये। 'तस्य मदनुग्रहमूलकत्व कथ सम्भवति' इत्यपेक्षाया 'सर्वान्तर्यामित्वात्' इति हेतु सूचयन् सम्बोधयति– ईशेति। 'त्वदनुग्रहात्कृतार्थोऽहम्' इत्याह–पुस इति। यर्हि पुसः ससारिणः ससरणस्यापवर्गः समाप्तिः सम्भाविता स्यात् तदा हे अब्जनाभ' सता त्वद्भक्तानामुपासनया तस्य त्वद्विषयिका मतिः स्याद्भवति। मम तु त्वदनुग्रहेण त्वद्दर्शनस्पर्शनादिकमपि जातम्, अतो मोक्षे कः सन्देह इत्याशयः ॥ २८ ॥ एवमात्मनः कृतार्थता

**नोत्सहेऽह कृपणधी कामकर्महत मन' ॥ रोद्धु प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः ॥ २७ ॥ सोऽह तवाङ्घ्र्युपगतोऽस्म्यसतां दुराप तच्चाप्यहं भवदनुग्रह ईश मन्ये ॥ पुंसो भवेद्यर्हि ससरणापवर्गस्त्वय्यब्जनाभ सदुपासनया मति' स्यात् ॥ २८ ॥ नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे ॥ पुरुषेशप्रधानाय ब्रह्मणेऽनन्तशक्तये ॥ २९ ॥ नमस्ते वासुदेवाय सर्वभूतक्षयाय च ॥ हृषीकेश नमस्तुभ्य प्रपन्न पाहि मां प्रभो ॥ ३० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे राजसनिरोधनिरूपणप्रकरणे पुरुषस्तवनिरूपण नाम चत्वारिंशत्तमोऽध्याय ॥ ४० ॥**

माविष्कृत्यापि ससारस्य दुस्तरत्वमाशङ्क्य भगवन्त नमस्यस्ततो रक्षा प्रार्थयते– नम इति द्वयेन। विज्ञान चैतन्यमेव मात्रा मूर्तिर्यस्य तस्मै तुभ्य नमः। अत एव सर्वप्रत्ययहेतवे समस्तज्ञानकारणाय ब्रह्मणे नमः। तद्विशिनष्टि–पुरुषः प्रकृतिप्रवर्तकः, ईशः कालः, प्रधान प्रकृतिः, एतत्त्रितयात्मने। तथाच भगवानेकादशे वक्ष्यति– "प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जक' कालो ब्रह्म तत्त्रित यत्त्वहम्" इति ॥ अनन्ता' शक्तयो यस्य तस्मै ॥ २९ ॥ वासुदेवाय श्रीवसुदेवनन्दनाय। सर्वभूतक्षयाय सर्वभूतनिवासाय। हे प्रभो हे पालनसमर्थ' तत्र हेतु सूचयन् पुनः सम्बोधयति– हृषीकेशेति। हे सर्वेन्द्रियनियन्तः। प्रपन्न शरणमागत मा पाहि ससारभयाद्रक्षेत्यर्थः ॥ ३० ॥ इतिश्रीवल्लभाचार्य–वश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीभागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने ॥ चत्वारिंशो गतो वृत्ति पुरुषस्तवनात्मकः ॥ ३ ॥

एकचत्वारिंशके तु प्रविष्टस्य पुरीं हरेः ॥ दुष्टरजकघातादि चरित विनिरूप्यते ॥ १ ॥ 'एव सम्प्रार्थितो भगवान् किं कृतवान्?' तत्राह—स्तुवत इति। कृष्णो भगवानेव जले आत्मनो वपुषः चतुर्भुजरूप दर्शयित्वा तस्य अक्रूरस्य स्तुवत एव सतो भूयस्तद्रूप समाहरत् उप सहृतवानित्यर्थ। तत्र दृष्टान्तमाह— नट इति। नटो यथा नाट्य यथेष्ट रूप दर्शयित्वोपसहरति तथेत्यर्थः ॥ १ ॥ सोऽक्रूरोऽपि तमन्तर्हितं वीक्ष्य ज्ञात्वा जलादुन्मज्ज्य सत्वरः त्वरया युक्तः आवश्यक माध्याह्निक सर्वं कृत्वा विस्मितः सन् रथ प्रत्यागमत् ॥ २ ॥ तमागतमक्रूर हृषीकेशः सर्वेन्द्रियनियन्ता कृष्णोऽपृच्छत्। हृषीकेशपदेन सर्वज्ञता सूचिता, तद्विनैवप्रश्नासम्भवात्। प्रश्नमेवाह— इह अस्मिन् काले भूमौ, वियति आकाशे, जले वा ते त्वया किमद्भुतमाश्चर्यं दृष्टम्?। 'किञ्चिद्दृष्टमित्यत्र तु सन्देहो नास्ति' इत्याशयेनाह— तथा दृष्टाद्भुत त्वा लक्षयामहे चिह्नैरनुमिनुमः ॥ ३ ॥ एव

श्रीशुक उवाच ॥ स्तुवतस्तस्य भगवान् दर्शयित्वा जले वपुः ॥ भूय समाहरत् कृष्णो नटो नाट्यमिवाऽऽत्मनः ॥ १ ॥ सोऽपि चान्तर्हित वीक्ष्य जलादुन्मज्ज्य सत्वरः ॥ कृत्वा चाऽऽवश्यक सर्वं विस्मितो रथमागमत् ॥ २ ॥ तमपृच्छद्धृषीकेश[1] किं ते दृष्टमिवाद्भुतम् ॥ भूमौ वियति तोये वा तथा त्वां लक्षयामहे ॥ ३ ॥ अक्रूर उवाच ॥ अद्भुतानीह यावन्ति भूमौ वियति वा जले ॥ त्वयि विश्वात्मके तानि किं मेऽदृष्ट विपश्यतः ॥ ४ ॥ यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले ॥ त त्वाऽनुपश्यतो ब्रह्मन्किं मे दृष्टमिहाद्भुतम् ॥ ५ ॥ इत्युक्त्वा चोदयामास स्यन्दन गान्दिनीसुतः ॥ मथुरामनयद्रामं कृष्ण चैव दिनात्यये ॥ ६ ॥

पृष्टोऽक्रूर आह— इह भूम्यादिषु यावन्ति अद्भुतानि सन्ति तानि सर्वाणि त्वय्येव सन्ति। तत्र हेतुः— विश्वात्मक इति। अतस्त्वां विपश्यतो मे मम षष्ठी तृतीयार्थे, मया किमदृष्ट सर्वमेवाद्भुत दृष्टम ॥ ४ ॥ ननु 'मत्प्राप्तेः पूर्वमेव त्व विस्मितमुखो लक्षितोऽसि, अतः पूर्वमेत्र भूम्यादौ किञ्चिदद्भुत त्वया दृष्ट तद्वद' इत्यत आह— यत्रेति। यत्र त्वयि सर्वाण्यद्भुतानि सन्ति त त्वा इह पश्यतो मे अन्यत्र भूम्यादौ किमद्भुत दृष्ट त्वा विना न तत्र किञ्चिदद्भुत दृष्टम्। त्वमेवाद्भुतरूपो दृष्ट इत्यर्थः। सर्वाधारत्व सूचयन् सम्बोधयति—ब्रह्मन्निति ॥ ५ ॥ गान्दिनीसुत अक्रूरः इत्येवमुक्त्वा स्यन्दन रथ चोदयामास। ततो दिनात्यये दिवसे किञ्चिदारूढे सति रामं कृष्ण च मथुरामनयत् ॥ ६ ॥

---

१ 'इत्यन्वय' इति खपुस्तके।

तत्र तत्र मार्गे ग्रामजना उपसङ्गता मिलिता वसुदेवसुतौ रामकृष्णौ दृष्ट्वा च प्रीताः सन्तो दृष्टिं नाददु न प्रत्याजन्हु । पश्यन्त एव स्थिता इत्यर्थः । 'राजदर्शने एतत् प्रसिद्धमेव' इत्याशयेन सम्बोधयति– राजन्निति ॥ ७ ॥ अक्रूरस्य स्नानादिक्रियया विलम्बो जातः, अतो यावद्राम-कृष्णौ मथुरामनयत् तावत्ततः पूर्वमेव नन्दादयो गोपा. पुरोपवनमासाद्य आगत्य रामकृष्णागमम प्रतीक्षमाणा अवतस्थिरे स्थिताः ॥ ८ ॥ तान् नन्दादीन् समेत्य भगवान् कृष्ण· स्वपाणिनाऽक्रूरपाणि गृहीत्वा प्रहसन् प्रश्रित विनितमक्रूरमाह– इवशब्दो हास्ये ईषत्त्वद्योतनार्थः। आज्ञापने स्वातन्त्र्य द्योतयन्नाह । जगदीश्वर इति ॥ ९ ॥ उक्तमेवाह– भवानिति । अग्रे मत्प्रवेशात्पूर्वमेव कसं प्रत्यस्मदानयनविज्ञापनार्थं सहयानो रथसहितो भवान् पुरीं प्रविशताम्, मत्प्रवेशे पुर्यामुपद्रवस्यावश्यभावित्वादित्याशयः । 'अत एव कंसनिकटेऽपि त्वया न स्थेयम्' इत्याशयेनाह– गृह प्रविशतामिति ।

मार्गे ग्रामजना राजस्तत्र तत्रोपसङ्गता· ॥ वसुदेवसुतौ वीक्ष्य प्रीता दृष्टि न चाददु ॥ ७ ॥
तावद्व्रजौकसस्तत्र नन्दगोपादयोऽग्रत· ॥ पुरोपवनमासाद्य प्रतीक्षन्तोऽवतस्थिरे ॥ ८ ॥
तान् समेत्याऽऽह भगवान् क्रूर जगदीश्वर· गृहीत्वा पाणिना पाणि प्रश्रित प्रहसन्निव ॥ ९ ॥
भवान् प्रविशतामग्रे सहयान पुरी गृहम् ॥ वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीम् ॥ १० ॥

॥ अक्रूर उवाच ॥

नाहं भवद्भ्यां रहित प्रवेक्ष्ये मथुरां प्रभो ॥ त्यक्तु नार्हसि मां नाथ भक्त त्वे भक्तवत्सल ॥ ११ ॥
आगच्छ याम गेहान्न सनाथान् कुर्वधोक्षज ॥ सहाग्रज सगोपालै· सुहृद्भिश्च सुहृत्तम ॥ १२ ॥

वय त्विहोपवने अवमुच्य वस्तून्युत्तार्य विश्रम्य ततोऽथ तदनन्तर पुरीं द्रक्ष्यामः ॥ १० ॥ एवमुक्त. अक्रूर आह– नेति । 'कंसभय तु तव नास्त्येव' इत्याशयेन सम्बोधयति– प्रभो इति । हे प्रभो ! भवद्भ्या रामकृष्णाभ्या रहितो वियुक्तोऽह मथुरा पुरीं न प्रवेक्ष्ये । हे नाथ स्वामिन्! मा त्यक्तु नार्हसि । तत्र हेतुमाह– भक्तमिति । 'भक्तवत्सलस्य तव भक्तत्यागो न युक्त' इत्याशयेन सम्बोधयति– भक्तवत्सलेति ॥ ११ ॥ 'त्वत्कृपाविना त्वत्प्राप्तिर्दुर्लभा, अतीन्द्रियत्वात्, अतोऽह त्वा त्यक्तु नोत्सहे' इत्याशयेन सम्बोधयति– अधोक्षजेति । परमोपकारित्वाच्चेति तत्रैव हेत्वन्तर सूचयन् सम्बोधयति– सुहृत्तमेति । सहाग्रजः सुहृद्भिर्गोपालैश्च सह आगच्छ, यामः सर्वे वय सहैव गमिष्यामः । गमनेन नोऽस्मान् गेहाश्च सनाथान् कुरु स्वकीयत्वेनाङ्गीकुर्वित्यर्थः । बहुवचनेन तत्र सर्वेषामवकाशोस्तीति सूचितम् ॥ १२ ॥

स्वपादरजसा नोऽस्माक गृहमेधिना गृहान् पुनीहि। 'कुतो मत्पादरजसा गृहाः पवित्रा स्यु. ?' तत्राह— यस्य तव पादस्य शौचेन प्रक्षालनोदकेन गङ्गारूपेण तर्पिता. पितर. साग्नयः सुराश्चानुक्षण तृप्यन्ति, अतस्तद्रजसा गृहपावित्र्ये कः सन्देहः ? ॥ १३ ॥ किञ्च तवाङ्घ्रियुगलमवनिज्य प्रक्षाल्य बलि. श्लोक्यो विपुलकीर्त्यर्हं' गुणैः महाश्चासीत्, अतुल पूर्वेन्द्रापेक्षयाधिकमैश्वर्य भूतले भाविन्यैन्द्रपदे च लेभे, तथा एकान्तिना निष्कामभक्ताना या त्वत्प्राप्तिरूपा गतिस्ता च लेभे। तुशब्दोऽन्यविलक्षणत्वद्योतकः। तत्प्राप्तौ सन्देहाभावाद्भावित्वेऽपि भूतत्वनिर्देशः॥ १४ ॥ किञ्च तवाङ्घ्योरवनेजन्यः क्षालनाच्छुचयः पवित्रा आपः गङ्गा त्रीन् लोकान् त्रिलोकस्थजनान् अपुनन् पवित्रितवत्यः । तत्पावित्र्ये किं वक्तव्य या आपः ईश्वरोपि शर्वः शिरसा धृतवान्, अस्थिभिर्यत्स्पर्शमात्रेण सगरात्मजाः स्वर्याताः स्वर्ग गताः॥ १५ ॥ एवं प्रार्थ्यमानो बहुधा सम्बोधयन् नमस्करोति—

पुनीहि पादरजसा गृहान्नो गृहमेधिनाम् ॥ यच्छौचेनानुतृप्यन्ति पितर' साग्नय सुरा ॥ १३ ॥
अवनिज्याङ्घ्रियुगलमासीच्छ्लोक्यो बलिर्महान् ॥ ऐश्वर्यमतुलं लेभे गति चैकान्तिनां तु या ॥ १४ ॥
आपस्तेऽङ्घ्र्यवनेजन्यस्त्रींल्लोकान् शुचयोऽपुनन् ॥ शिरसाधत्त याः शर्व' स्वर्याता सगरात्मजा ॥ १५ ॥
देवदेव जगन्नाथ पुण्यश्रवणकीर्तन ॥ यदूत्तमोत्तमश्लोक नारायण नमोस्तु ते ॥ १६ ॥

॥ श्रीभगवानुवाच ॥

आयास्ये भवतो गेहमहमार्यसमन्वित' ॥ यदुचक्रद्रुह हत्वा वितरिष्ये सुहृत्प्रियम् ॥ १७ ॥

॥ श्रीशुक उवाच ॥

एवमुक्तो भगवता सोऽक्रूरो विमना इव ॥ पुरी प्रविष्ट कसाय कर्माऽऽवेद्य गृहं ययौ ॥ १८ ॥
अथापराह्णे भगवान् कृष्ण सङ्कर्षणाऽन्वित ॥ मथुरां प्राविशद्गोपैर्दिदृक्षुः परिवारित• ॥ १९ ॥

देवानां ब्रह्मादीनामपि देव पूज्य, जगतो नाथ स्वामिन्, पुण्य पुण्यजनक श्रवण कीर्तन च यस्य तथाभूत, यदुषु उत्तम, उत्तमः श्लोको यशो यस्य तथाभूत, हे नारायण! ते तुभ्य नमोस्तु ॥ १६ ॥ एव सम्प्रार्थितो भगवानाह— आयास्य इति । यदुचक्राय यदुवशसमूहाय द्रुह्यतीति तथा त कस हत्वा आर्यसमन्वितः बलभद्रसहितोऽह भवतो गेहमायास्ये आगमिष्यामि। अन्येषामपि सुहृदा प्रिय वितरिष्ये करिष्यामि, तत्र तत्करणे कः सन्देह इत्याशयः ॥ १७ ॥ एव भगवता उक्त' सोक्रूरो विमना इव 'भगवदाज्ञाया अनुल्लङ्घ्यत्वात तद्वियोगस्य च दुःसहत्वात् तथाप्यायास्ये इत्याश्वासनात किञ्चिद्विमना' सन्' पुरीं प्रविष्टः। कसाय रामकृष्णानयनरूप स्वकृत कर्मावेद्य स्वगृह ययौ ॥ १८ ॥ अथाक्रूरगमनानन्तर पुरीं दिदृक्षुः गोपै परिवारितः सङ्कर्षणान्वितश्च भगवान् कृष्ण. अपराह्णे मथुरा प्राविशदित्यन्वय. ॥ १९ ॥

ता मथुरा ददर्श । ता पुरीं वर्णयति— स्फाटिकानि स्फटिकमयानि, तुङ्गान्युच्छ्रितानि गोपुराणि पुरद्वाराणि अन्यानि च द्वाराणि यस्या ताम् गोपुरेषु बृहन्ति हेममयानि कपाटानि तोरणानि च यस्या ताम् । ताम्र च आर. आरकूटः तन्मयाः कोष्ठा धान्यागाराः अश्व शालादयो यस्या ताम् । परिखाः परितः खातागर्तास्ताभिर्दुरासदा दुर्गमाम्, उद्यानानि दूरस्थानि वनानि रम्याण्युपवनानि तु निकटानि तैरुपशोभिताम् ॥२०॥ सौवर्णाः शृङ्गाटकाश्चतुष्पथाः हर्म्याणि धनिना गृहाश्च निष्कुटा गृहोचिता आरामाश्च तैः श्रेणीनामेकरूपशिल्पोपजीविना सभाभिरुपवेशनस्थानैश्च तथाऽन्यैश्च भवनैर्गृहैरुपस्कृता अङ्कृलताम् । अमलः स्फटिक. हरितो मरकत. वैदूर्यादिरत्नैर्जुष्टेषु सयुक्तेषु वलभ्यादिषु आविष्टैः पारावतैर्बर्हिभिर्मयूरैश्च नादिता मित्युत्तरेणान्वय. । तत्र वलभ्यो गृहपुरोभागे वक्रदारुनिर्मिताः उपवेशनोच्चस्थानानि, वेदयो गृहाग्रे इष्टकादिबद्धा विश्रामभूमयः ॥ २१ ॥ जालामुख-

ददर्श ता स्फाटिकतुङ्गगोपुरद्वारां बृहद्धेमकपाटतोरणाम् ॥ ताम्रारकोष्ठां परिखादुरासदामुद्यानरम्योपवनोपशोभिताम् ॥ २० ॥ सौवर्णशृङ्गाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृताम् ॥ वैदूर्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥ २१ ॥ जुष्टेषु जालामुखरन्ध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम् ॥ संसिक्तरथ्यापणमार्गचत्वरा प्रकीर्णमाल्याङ्कुरलाजतण्डुलाम् ॥ २२ ॥ आपूर्णकुम्भैर्दधिचन्दनोक्षितै प्रसूनदीपावलिभि सपल्लवैः ॥ सवृन्दरम्भाक्रमुकैः सकेतुभिः स्वलङ्कृतद्वारगृहांसपट्टिकैः ॥ २३ ॥

रन्ध्राणि गवाक्षच्छिद्राणि, कुट्टिमानि मणिबद्धभूमयः । ससिक्तानि रथ्यादीनि यस्या ताम् । रथ्या राजमार्गाः, आपणाः पण्यवीथयः, मार्गाः प्रसिद्धाः, चत्वराणि अङ्गणानि । प्रकीर्णमाल्यादयो यस्या ताम् । माल्यानि पुष्पाणि, अङ्कुराः यवाङ्कुराः, लाजा. भ्रष्टधान्यानि ॥ २२ ॥ दध्ना चन्दनेन उक्षितैः सिक्तैः. प्रसूनाना दीपाना चावलयो येषु तै. सपल्लवैर्वृन्दै फलगुच्छैरुपलक्षिताः रम्भाः क्रमुकाश्च तत्सहितै. सकेतुभिः केतवो ध्वजास्तत्सहितैः पट्टिका वितस्तिविस्तारपट्टवस्त्राणि तत्सहितैः जलेनापूर्णैः कुम्भैः स्वलङ्कृतानि द्वाराणि येषा ते गृहा यस्या ताम् । तत्रेय रीतिः—द्वारेषूभयतस्तण्डुलानामुपरि कुम्भाः, तत्परित. प्रसूनावलयः, कण्ठे पट्टिका, मुखे चूतादिपल्लवाः, तदुपरि पात्रान्तरे दीपावलयः, तत्सन्निधौ रम्भाः क्रमुकाः केतवश्चेति ॥ २३ ॥

तामेवम्भूता पुरीं वयस्यैः सखिभिर्वृतौ नरदेववर्त्मना राजमार्गेण सम्प्रविष्टौ वसुदेवनन्दनौ द्रष्टुमुत्सुकाः उत्साहयुक्तास्त्वरिताः त्वरायुक्ताश्च पुरस्त्रियः याः काश्चित् साधारण्यस्ताः समीयुर्गृहान्निःसृत्य सन्मुखमाजग्मु., याश्च न बहिर्निर्गमनयोग्याः कुलस्त्रियस्ताश्च हर्म्याण्यारुरुहुरिति विवेकः । 'राज्ञा-मागमनेऽप्येवमेव भवति' इति सूचयन् सम्बोधयति— नृपेति ॥ २४ ॥ तासा त्वरामौत्सुक्य च तत्कार्यद्वारा स्पष्टयति— काश्चिदिति । विपर्यक् 'पादाभरण हस्ते हस्ताभरणं च पादे, तथाधोधार्य वस्त्रमुपरि उपरिधार्य वस्त्र चाध' इत्येव विपरीत यथा भवति तथा धृतानि वस्त्राणि भूषणानि च याभिस्तथाभूता. काश्चित् समीयुरिति पूर्वस्यैवानुषङ्गः श्लोकद्वये सर्वत्र । अथ तथा अपरास्तु युगलेषु धार्येषु कुण्डलकङ्कणादिषु एक विस्मृत्यैक-

तां सम्प्रविष्टौ वसुदेवनन्दनौ वृतौ वयस्यैर्नरदेववर्त्मना ॥ द्रष्टु समीयुस्त्वरिता' पुरस्त्रियो हर्म्याणि चैवाऽऽरुरुहुर्नृपोत्सुका. ॥ २४ ॥ काश्चिद्विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैक युगलेष्वथापराः ॥ कृतै-कपत्रश्रवणैकनूपुरा नांक्त्वा द्वितीय त्वपराश्च लोचनम् ॥ २५ ॥ अश्नन्त्य एकास्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः ॥ स्वपन्त्य उत्थाय निशम्य निःस्वन प्रपाययन्त्योऽर्भमपोह्य मातर' ॥ ॥ २६ ॥ मनांसि तासामरविन्दलोचन' प्रगल्भलीलाहसितावलोकैः ॥ जहार मत्तद्विरदेन्द्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवम् ॥ २७ ॥

मेव धृत्वा समीयुः । अन्यास्तु कृत निहितं एकमेव पत्र ताटङ्क ययोस्ते श्रवणे कर्णौ यासां एकमेव नूपुर चरणाभरणं यासा ताश्च ताश्च समीयु । अपरास्तु द्वितीय स्वलोचन नाङ्क्त्वा एकस्मिन्नेव लोचने कज्जल निधाय समीयुः ॥ २५ ॥ काश्चित्तु अभ्यज्यमाना' सखीभि क्रियमाण-तैलाभ्यङ्गा अकृतस्नाना एव समीयुः । काश्चित्तु स्वपन्त्यः निःस्वन भगवदागमनान्मार्गजनकृत कोलाहलशब्द निशम्य श्रुत्वोत्थाय समीयुः । एवं सर्वासा गमने हेतुमाह— सोत्सवा इति ॥ २६ ॥ अरविन्दवल्लोचने यस्य सः तथा द्विरदेन्द्रो मत्तगजस्तद्वद्विक्रमो गतिर्यस्य स भगवान् प्रगल्भा उत्कटा लीला हसितानि ईक्षणानि च तैः तथा श्रियं लक्ष्मीं रमयतीति श्रीरमणस्तेनात्मना वपुषा च तासां स्त्रीण. दृशामुत्सव हर्षं ददत् मनांसि जहार अपहृतवान् ॥ २७ ॥

हे अरिन्दम निर्जितकामादिशत्रो ! मुहुः श्रुतत्वात्तमनुद्रुतचेतसस्तस्त दृष्ट्वा तस्य प्रेक्षणपूर्वकं यदुत्स्मित तदेव सुधा तयोक्षण सेवन तेन लब्धो मानः सत्कारो याभिस्ताः दृशा उद्घाटितनेत्रद्वारा आत्मनि अन्तःकरणे लब्ध प्राप्त आनन्दमूर्तिं श्रीकृष्णमुपगुह्य आलिङ्ग्य हृष्यत्त्वचस्तदप्राप्तिजमनन्तमाधि मनोव्यथा जहुः ॥ २८ ॥ प्रासादशिखरारूढा. प्रीत्या उत्फुल्लानि मुखाम्बुजानि यासा ताः प्रमदा सौमनस्यैः पुष्पसमूहैः बलकेशवावभ्यवर्षन् आच्छादितवत्यः ॥ २९ ॥ एव स्त्रीकृतं सन्मान निरूप्य ब्राह्मणादिकृत तदाह– दध्यक्षतैरिति । तत्र तत्र मिलिता द्विजातयो दध्यादिभिस्तौ रामकृष्णौ आनर्चुरित्यन्वयः । तत्र हेतुमाह– प्रमुदिता इति । तत्र दधि अक्षताश्च तिलकार्थ शुभसूचका., उदकपात्र पादप्रक्षालनाद्यर्थ, स्रक् पुष्पमाला, गन्ध चन्दन, अभ्युपायनानि मिष्टान्नफलादीनि ॥ ३० ॥ पौराः पुरवासिन ऊचुश्च । कि तदाह– अहो आश्चर्यम्, गोप्यः कि महत्तपश्चक्रु ? ' अन्यथैतन्न सम्भाव्यत ' इत्यभिप्रेत्याहु – या गोप्यो नरलोकस्य महानुत्सवो याभ्या तौ रामकृष्णावनुक्षण पश्यन्ति ॥ ३१ ॥ एव जनेषु वदत्सु सत्सु तदा

दृष्ट्वा मुहु श्रुतमनुद्रुतचेतसस्तं तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमाना· ॥ आनन्दमूर्तिमुपगुह्य दृशाऽऽत्मलब्धं हृष्यत्त्वचो जहुरनन्तमरिन्दमाधिम् ॥ २८ ॥ प्रासादशिखरारूढा प्रीत्युत्फुल्लमुखाम्बुजा· ॥ अभ्यवर्षन् सौमनस्यै· प्रमदा बलकेशवौ ॥ २९ ॥ दध्यक्षतै· सोदपात्रै· स्रग्गन्धैरभ्युपायनै· ॥ तावानर्चु प्रमुदितास्तत्र तत्र द्विजातय· ॥ ३० ॥ ऊचु· पौरा अहो गोप्यस्तप किमचरन् महत् ॥ या ह्येतावनुपश्यन्ति नरलोकमहोत्सवौ ॥ ३१ ॥ रजक कञ्चिदायान्त रङ्गकार गदाग्रज· ॥ दृष्ट्वाऽयाचत वासांसि धौतान्यत्युत्तमानि च ॥ ३२ ॥ देह्यावयो समुचितान्यङ्ग वासांसि चार्हतो· ॥ भविष्यति परं श्रेयो दातुस्ते नात्र सशय ॥ ३३ ॥ स याचितो भगवता परिपूर्णेन सर्वत ॥ साक्षेपं रुषित· प्राह भृत्यो राज्ञ· सुदुर्मदः ॥ ३४ ॥

गदाग्रजो भगवान् आयान्त कञ्चिद्रजक रजको वस्त्रनिर्णेजक. स एव वस्त्राणा रङ्गमपि कुर्वन् रङ्गकारस्त दृष्ट्वा धौतानि निर्णिक्तानि अत्युत्तमानि च वासासि अयाचत ॥ ३२ ॥ याञ्चाप्रकारमेवाह– देहीति । प्रथम स्नेह सूचयन् सम्बोधयति– अङ्गेति । आवयो. अर्हतोः दानपात्रतया योग्ययोः समुचितानि योग्यानि वासासि देहि । दातुस्ते तव परमुत्कृष्ट श्रेयो भविष्यति, अत्र सन्देहो नास्ति ॥ ३३ ॥ जीवा. कैश्चित्पदार्थैः पूर्णाः कैश्चित्पदार्थै रिक्ताः, तत्रापि कदाचित् पूर्णाः कदाचिदपूर्णाः, कस्मिंश्चिद्देशे पूर्णाः कस्मिंश्चिद्देशे रिक्ता भवन्ति । कृष्णस्तु भगवत्त्वात् सर्वतः देशकालवस्तुपरिच्छेदविनैव परिपूर्णः । तेन याचितश्चेद्दद्यात् तर्हि सोऽपि परिपूर्ण एव स्यात् । स रजकस्तु रुषित· सन् साक्षेप आक्षेपगर्भ यथा स्यात्तथा प्राह । एव कथने कसस्य दोषे हेतु सूचयन्नाह– राज्ञो भृत्य इति । तस्यापि दुष्टत्वम् । तथाकथने हेतुमाह– सुदुर्मद इति । अन्यथाऽक्रूरवत् सोऽपि भगवदनुसार्येव स्यादित्याशयः ॥ ३४ ॥

तदुक्तिमेवाह—ईदृशानीति द्वाभ्याम्। उद्धत वृत्त सदाचारलक्षण येभ्यस्ते तथा तास्तथा मत्वा सम्बोधयति—हे उद्धृत्ता इति । ये यूय राज्ञे द्रव्याणि वस्त्राण्यभीप्सथ ते किमीदृशानि उत्तमान्येव वासासि परिधत्तेत्यन्वयः। 'तद्धारणे किमाश्चर्यम्' इत्याशङ्क्याह—नित्य गिरिवनेचरा इति। पशुपालाना वनचराणा नित्य कुचैलत्वादीदृग्वस्त्रधारणमसम्भावितमित्याशय एवेत्यर्थः ॥ ३५ ॥ 'अज्ञात्वा याचितम' इति चेत्तत्राह—यातेति। बालिशाः हे अज्ञाः। इतः स्थानादाशु यात शीघ्र स्थानान्तर गच्छत। तत्रापि यदि जिजीविषा जीवितुमिच्छा तर्ह्येव नैव प्रार्थनीयम्। प्रार्थने दोषमाह—हि यस्माद्राजकुलानि राजकीयाः पुरुषाः युष्मद्विध दृप्तमुद्धत जन बध्नन्ति, घ्नन्ति, लुम्पन्ति निःस्व कुर्वन्ति ॥ ३६ ॥ एव विकत्थमानस्य असम्बद्धभाषणस्य रजकस्य शिरः कुपितो देवकीसुतः कराग्रेण नखेनैव कायादपातयत् पृथक्कृत्य पातितवान् इत्यन्वयः॥ ३७ ॥ ततस्तस्य रजकस्यानुजीविनः सर्वे वासःकोशान् वस्त्रपुटकान्

ईदृशान्येव वासांसि नित्यं गिरिवनेचरा॰ ॥ परिधत्त किमुद्धृत्ता राजद्रव्याण्यभीप्सथ ॥ ३५ ॥
याताऽऽशु बालिशा मैव प्रार्थ्य यदि जिजीविषा ॥ बध्नन्ति घ्नन्ति लुम्पन्ति दृप्त राजकुलानि वै ॥ ३६ ॥
एव विकत्थमानस्य कुपितो देवकीसुतः ॥ रजकस्य कराग्रेण शिर॰ कायादपातयत् ॥ ३७ ॥
तस्यानुजीविन॰ सर्वे वासःकोशान् विसृज्य वै ॥ दुद्रवुः सर्वतो मार्गं वासांसि जगृहेऽच्युत॰ ॥ ३८ ॥
वसित्वाऽऽत्मप्रिये वस्त्रे कृष्णः सङ्कर्षणस्तथा ॥ शेषाण्यादत्त गोपेभ्यो विसृज्य भुवि कानिचित् ॥ ३९ ॥
ततस्तु वायक प्रीतस्तयोर्वेषमकल्पयत् ॥ विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपत॰ ॥ ४० ॥
नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतु॰ ॥ स्वलङ्कृतौ बालगजौ पर्वणीव सितेतरौ ॥ ४१ ॥
तस्य प्रसन्नो भगवान् प्रादात् सारूप्यमात्मन ॥ श्रिय च परमां लोके बलैश्वर्यस्मृतीन्द्रियम् ॥ ४२ ॥

विसृज्य त्यक्त्वा सर्वतो मार्गं प्रति दुद्रुवु॰ पलायितवन्त॰। ततो वासांसि अच्युतः कृष्णः जगृहे आदत्त गोपेभ्य च ॥ ३८ ॥ दानप्रकारमेवाह—कृष्णः सङ्कर्षणश्चात्मनः प्रिये पीतनीले स्वाभीष्टे वस्त्रे वसित्वा परिधाय शेषाणि गोपेभ्यः आदत्त दत्तवान्। कानिचित्तु शेषाण्यनभिप्रेतानि वासासि भुवि विसृज्य त्यक्त्वा ततोऽगादिति शेषः ॥ ३९ ॥ ततस्तु वायक॰ तन्तुवायकः प्रीतियुक्त॰ विचित्रवर्णैश्चैलेयैर्वस्त्रमयैराकल्पैर्भूषणैर्यथानुरूपं तयो रामकृष्णयोर्वेषमलङ्कारमकल्पयत् विदधे ॥ ४० ॥ तदा यथा पर्वणि उत्सवे स्वलङ्कृतौ सितेतरौ गौरश्यामौ बालगजौ राजेते तथा नानाविधचैलेयै रचितौ यौ वेषौ अलङ्कारौ ताभ्या रामकृष्णौ विरेजतुः ॥ ४१ ॥ तत॰ प्रसन्नो भगवान् तस्य वायकस्य देहावासने आत्मन॰ स्वस्य सारूप्य समानरूपता प्रादात् सङ्कल्पितवान्। तथास्मिन् लोके जीवदशायामपि परमामुत्कृष्टा श्रिय सम्पद, बल शरीर, ऐश्वर्य भाव, स्वविषयिकां स्मृति, इन्द्रिय

तत्पाटव चादात् ॥ ४२ ॥ ततश्च तौ सुदामाख्यस्य मालाकारस्य भवन जग्मतु'। ननु 'पूर्णौ तौ मालार्थं किमिति तद्गेह गता' इति शङ्कां वारयस्तस्य भक्त्यतिरेकमाह–तावित्यादिना ॥ ४३ ॥ तयोरासनमानीय समर्प्य स्रगादिभिः अर्हणादिभिरन्यैश्च पूजासाधनै. पूजा चक्रे। स्पष्टमन्यत् ॥ ४४ ॥ ततश्च तौ प्राह। तदुक्तिमेवाह– न इति। मुख्यत्वादेक कृष्णमेव सम्बोध यति–प्रभो इति। हि यस्मात् वा युवयोरागमनेन मह्य मदर्थ पित्रादयस्तुष्टास्तेषा-मृणाद्वय विमुक्ताः, नोऽस्माकं कुल च पावित उद्धृतम्, अतोऽस्माक जन्म सार्थक सफल जातमित्यन्वय' ॥ ४५॥ ननु 'कथमावयोरागमनमात्रेण तव पित्रादीना ऋणाद्विमुक्ति. ?' स्तत्राह–भवन्ताविति। 'किल' इत्यवधारणे। विश्वस्य कृत्स्नस्य जगतो भवन्तावेव कारणम्। 'जगत्कारणस्यापि कारणान्तर स्यात्' इत्याशङ्क्याह–परमिति। मूलकारण स्वकारणान्तररहितमित्यर्थ'। 'एवभूतस्यावतारे कि प्रयोजनम्' इत्याकाङ्क्षायामाह– साधूना क्षेमाय पालनाय

ततः सुदाम्नो भवन मालाकारस्य जग्मतु ॥ तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥ ४३ ॥
तयोरासनमानीय पाद्य चाथार्हणादिभि ॥ पूजां सानुगयोश्चक्रे स्रक्ताम्बूलानुलेपनै ॥ ४४ ॥
प्राह न सार्थक जन्म पावितं च कुल प्रभो ॥ पितृदेवर्षयो मह्य तुष्टा ह्यागमनेन वाम् ॥ ४५ ॥
भवन्तौ किल विश्वस्य जगत. कारण परम् ॥ अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥ ४६ ॥
नहि वां विषमा दृष्टिः सुहृदोर्जगदात्मनो. ॥ समयो. सर्वभूतेषु भजन्त भजतोरपि ॥ ४७ ॥
तावाज्ञापयतं भृत्यं किमह करवाणि वाम् ॥ पुसोऽत्यनुग्रहो ह्येप भवद्भिर्यन्नियुज्यते ॥ ४८ ॥

भवाय उद्भवाय च अशेन स्वसङ्कल्पेन मूर्तिभेदेनेह भूलोकेऽवतीर्णाविति ॥४६॥ ननु "सर्वमूलत्व चेत्तर्हि समत्वमेव स्यात, न वैषम्यम्, प्रसिद्ध च रजकवधेन वायकप्रसादेन च वैषम्यम्, अत' कथ सर्वमूलत्वम" इत्याशङ्क्याह–नहीति। जगत आत्मनोरुपादानभूतयो' भजन्त भजतोरपि सुरतरुवद्वा युवयोः सर्वभूतेषु विषमा दृष्टिर्नैवास्ति इत्यन्वयः। ननु 'भजतो भजतोरन्यानभजतोरपि सुरतरुवदवैषम्यमुक्तम्, दुष्टनिग्रह कुर्वतोस्तु कथ न वैषम्य स्यात्' इत्याशङ्क्याह– 'दुष्टनिग्रहस्यापि तद्भावनानुरूपश्रेय पर्यवसायित्वात् तत्रापि न वैषम्यम्' इत्याशयेनाह– सुहृदोरिति, सर्वमित्रयोरीत्यर्थः ॥४७॥ तौ जगदीश्वरौ भवन्तौ भृत्य मामाज्ञापयतम्। वा युवयो. कि दास्यमह करवाणि। 'पूर्णत्वान्नावयो. किञ्चिदपेक्षितमस्ति' इति चेत् तथापि 'अस्मदनुग्रहार्थमवश्य वक्तव्य' इत्यशयेनाह–पुस इति। यत् भवाद्भि. स्वकीयत्वेनाङ्गीकृत्य कार्येषु नियुज्यते तदेष एव पुसोऽत्यनुग्रह.। हिशब्दोऽवधारणे। बहुवचन तद्भक्ताभिप्रायेण ॥ ४८ ॥

'केचित् भृत्याः राज्ञोप्यभिप्राय जानन्तीति स्ववृत्तान्तेन ज्ञेयम्' इति सूचयन् सम्बोधयति— राजेन्द्रेति । इति एव विज्ञापयन् अभिप्रेत्य भगवदभिप्राय ज्ञात्वा प्रीतमानसः सुदामा प्रशस्तैः सुगन्धिभिः कुसुमैर्विरचिता माला ताभ्या ददौ ॥ ४९ ॥ अनुगैर्गोपैः सह ताभिर्मालाभिः स्वलङ्कृतौ, अत एव प्रीतौ कृष्णरामौ प्रणताय प्रपन्नाय शरणागताय तस्मै वरान् ददतुः 'वरान् वृणीष्व' इत्युक्तवन्तौ । तत्र हेतुमाह— वरदाविति, यथेष्टवरदाने समर्थावित्यर्थः ॥ ५० ॥ स सुदामापि अखिलात्मनि तस्मिन् श्रीकृष्ण एवामला भक्ति तद्भक्तेषु च सौहार्द मित्रता अन्येषु च भूतेषु प्राणिमात्रेषु परा दया स्वार्थनिरपेक्ष्यपरदु.खप्रहारेच्छारूपा वव्रे वृतवान् । एवकारोऽन्यभक्तिनिरासार्थः ॥ ५१ ॥ इत्येव तद्याचित वर तस्मै दत्त्वा तथा तदयाचितमपि श्र्यादिक स्वयमेव भक्तवात्सल्येन दत्त्वा सहानुगः कृष्णस्ततो निर्जगामेत्यन्वयः । अन्वयवर्धिनीं वशोवृद्धिमतीम् । बल शरीरसामर्थ्यम् ।

इत्यभिप्रेत्य राजेन्द्र सुदामा प्रीतमानस ॥ शस्तै सुगन्धै कुसुमैर्मालां विरचिता ददौ ॥ ४९ ॥ ताभि स्वलङ्कृतौ प्रीतौ कृष्णरामौ सहानुगौ ॥ प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥ ५० ॥ सोऽपि वव्रेऽचलां भक्ति तस्मिन्नेवाखिलात्मनि ॥ तद्भक्तेषु च सौहार्द भूतेषु च दयां पराम् ॥ ५१ ॥ इति तस्मै वरं दत्त्वा श्रिय चान्वयवर्धिनीम् ॥ बलमायुर्यश कान्ति निर्जगाम सहाग्रज ॥ ५२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे राजसनिरोधनिरूपणप्रकरणे रजकवधादिनिरूपणं नाम एकचत्वारिंशोऽध्याय ॥ ४१ ॥ ॥ छ ॥ श्रीशुक उवाच ॥ अथ व्रजन् राजपथेन माधव स्त्रियं गृहीताङ्गविलेपभाजनाम् ॥ विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यान्ती प्रहसन् रसप्रदः[1] ॥ १ ॥

आयुः प्रसिद्धम् । यशः सुकीर्तिम् । कान्ति तेजः ॥ ५२ ॥ इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्यय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने ॥ एकचत्वारिंशकोऽगाद्रजकवधबोधकः ॥ ३ ॥ छ ॥ द्विचत्वारिंशके चापि कृष्णस्याद्भुतकर्मणः । कुब्जासुरूपदानादि चरित विनिरूप्यते ॥ १ ॥ अथ मालाकारानुग्रहानन्तर राजमार्गेण व्रजन् माधवः गृहीतानि अङ्गविलेपाना चन्दनादीना भाजनानि पात्राणि यया ता, वर सुदर आनन यस्यास्ता कुब्जा युवतीं तरुणीं स्त्रियं यान्तीं गच्छन्तीं विलोक्य प्रहसन् पप्रच्छ। तत्र हेतुमाह— रसप्रद इति । 'वरप्रद' इति पाठान्तरम्। स्वभक्ताना सुखप्रद इत्यर्थः । चन्दनादि गृहीत्वा तस्याऽपि सुखसम्पादनार्थमिति भाव ॥ १ ॥

[1] 'वरप्रद' इति पाठान्तरम् ।

तत्प्रश्नमेवाह— का त्वमिति । सोपहास सम्बोधयति— हे अङ्गने इति, हे वरोरु इति च । 'उ ह' इति निपातौ भ्रूविक्षेपयुक्ते वितर्के, अस्या पुर्या त्व का एतदनुलेपन कस्य कस्मै नयसीत्यर्थः । साधु यथार्थ नोऽस्मान् प्रत्येतत् कथयस्व । 'कस्मैचिद्भवतु, युष्माक किम्?' तत्राह— उत्तममिदमङ्गविलेपन आवयोर्देहि, तेनानुलेपनदानेन हेतुना ते तवाचिरादेव श्रेयः उत्तम फल भविष्यति ॥ २ ॥ एवमापृष्टा याचिता च साप्याह— दासीति । स्वमोह सूचयन्ती सम्बोधयति— सुन्दरेति । तिस्रो ग्रीवोरःकट्यो वक्रा यस्याः सा त्रिवक्रेति अन्वर्थ नाम यस्या. साऽहं हि प्रसिद्धा अनुलेपनसाधनक्रियाया कसस्य सम्मता दास्यस्मि । सम्मतत्वे हेतुमाह— मद्भावित मया साधितमनुलेपन भोजपतेः कसस्यातिप्रिय भवति, कुब्जतया बलाभावेन शनैर्घर्षितस्य चन्दनादेरतिसूक्ष्मत्वादित्याशयः । एव का त्व कस्यासीति प्रश्नयस्योत्तरमुक्त्वा देह्यावयोरित्यस्योत्तरमाह— युवाविनाऽन्यतमस्तदनुलेपन स्वीकर्तु कोऽर्हतीति ॥ ३ ॥ एवमुक्त्वा भगवतो रूपादिभिर्धर्षितः मोहित आत्मा चित्त यस्याः सा सान्द्र घन अनुलेपन उभयो

का त्वं वरोर्वेतदुहानुलेपन कस्याङ्गने वा कथयस्व साधु न॰ देह्यावयोरङ्गविलेपमुत्तम श्रेयस्ततस्तेन चिराद्भविष्यति ॥ २ ॥ सैरन्ध्युवाच ॥ दास्यस्म्यहं सुन्दर कससम्मता त्रिवक्रनामा ह्यनुलेपकर्मणि ॥ मद्भावित भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति ॥ ३ ॥ रूपपेशलमाधुर्यहसितालापवीक्षितै॰॥ धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम् ॥ ४ ॥ ततस्तावङ्गरागेण स्ववर्णेतरशोभिना ॥ सम्प्राप्तपरभागेन शुशुभातेऽनुरञ्जितौ ॥ ५ ॥ प्रसन्नो भगवान् कुब्जां त्रिवक्रां रुचिराननाम् ॥ ऋज्वीं कर्तुं मनश्चक्रे दर्शयन् दर्शने फलम् ॥ पद्भ्यामाक्रम्य प्रपदे द्वयङ्गुल्युत्तानपाणिना ॥ प्रगृह्य चुबुकेऽध्यात्ममुदनीनमदच्युत॰॥७॥

रामकृष्णयोर्ददावित्यन्वय । रूप चाङ्गसौष्ठव, पेशल च सौकुमार्य, माधुर्य च रसिकता, हसित च, आलापश्च भाषण च, वीक्षित च, तैः ॥ ४ ॥ ततश्च स्ववर्णेतरशोभिना रामकृष्णयोः सितासितवर्णाभ्या इतरौ रक्तपीतौ वर्णौ ताभ्यां शोभितु शीलमस्य तेन सम्प्राप्तपरभागेन सम्प्राप्तः परो नाभेरुपरितनो भागो येन तेन अङ्गरागेणानुरञ्जितौ तौ रामकृष्णौ शुशुभाते ॥ ५ ॥ स्वदर्शने फल लोकस्य दर्शयन् अङ्गरागार्पणभक्त्या प्रसन्नो भगवास्ता त्रिवक्रा कुब्जामृज्वीमवक्रा कर्तु मनश्चक्रे । तस्या योग्यता सूचयन्नाह— रुचिराननामिति ॥ ६ ॥ ऋजुकरणप्रकारमाह— पद्भ्यामिति । तस्याः प्रपदे पादाग्रद्वय निजपद्भ्यामाक्रम्य आक्रमणेनावष्टभ्य द्वे अङ्गुली उत्ताने उन्नते यस्मिस्तेन पाणिना तस्याश्चुबुके मुखस्याधोभागे अच्युत कृष्णः प्रगृह्य अध्यात्म देह उदनीनमत् उन्नमयामास ॥ ७ ॥

सा कुब्जा मुकुन्दस्पर्शनादेव हेतोस्तदा सद्य एव ऋजु समान योग्यावयवमङ्ग यस्या. सा बृहत्यौ श्रोणी पयोधरौ च यस्यास्तथाभूता प्रमदोत्तमा बभूव ॥ ८ ॥ ततश्च सा स्मयन्ती तस्योत्तरीयान्तमाकृष्य तं केशव प्राहेत्यन्वय' । तत्र हेतुमाह—जातो हृच्छयः कामो यस्याः सेति । केशव ब्रह्मरुद्रयोरपि व सुख यस्मात्तमित्यनेन कामोत्पतौ हेतुः सूचितोपि हेत्वन्तरमपि सूचयन्नाह—रूपादिभिः सम्पन्नेति । तत्र रूप सौन्दर्यम्, गुणाः सौशील्यादयः, औदार्यपदेन दक्षत्वम् ॥ ९ ॥ तदुक्तिमाह—एहीति । 'त्वदनुग्रहविना न कामनिवृत्तिः' इति सूचयति, सम्बोधयति च—वीरेति । एहि अस्मद्गृह प्रत्यागच्छ यामः त्वया सहैव गृह गच्छामः । इह स्थाने त्वा त्यक्तु नोत्सहे न शक्नोमि । 'त्वयि प्रार्थनैव युक्ता, न बलात्कार., पुरुषोत्तमत्वात्' इत्याशयेन सम्बोधयति— पुरुषर्षभेति । त्वया निमित्तेन उन्मथित कामक्षोभितं चित्तं यस्यास्तस्या मम प्रसीद ॥ १० ॥ रामस्य पश्यत. सत इति तस्य

सा तदर्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा ॥ मुकुन्दस्पर्शनात सद्यो बभूव प्रमदोत्तमा ॥ ८ ॥
ततो रूपगुणौदार्यसम्पन्ना प्राह केशवम् ॥ उत्तरीयान्तमाकृष्य स्मयन्ती जातहृच्छया ॥ ९ ॥
एहि वीर गृह यामो न त्वां त्यक्तुमिहोत्सहे ॥ त्वयोन्मथितचित्ताया' प्रसीद पुरुषर्षभ ॥ १० ॥
एवं स्त्रिया याच्यमान' कृष्णो रामस्य पश्यत' ॥ मुख वीक्ष्यानुगानां च प्रहसंस्तामुवाच ह ॥ ११ ॥
एष्यामि ते गृह सुभ्रू पुसामाधिविकर्शनम् ॥ साधिताऽर्थोऽगृहाणां न पान्थानां त्व परायणम् ॥ १२ ॥
विसृज्य माध्व्या वाण्या तां व्रजन् मार्गे वणिक्पथै' ॥ नानोपायनताम्बूलस्रग्गन्धै साग्रजोऽर्चित. ॥ १३ ॥

सङ्कोच सूचयति । स्त्रिया एव याच्यमानः कृष्णोऽनुगाना गोपाना चकाराद्बलस्य च मुख विलोक्य प्रहसन् हर्षेण तामुवाचेत्यन्वयः ॥ ११ ॥ उक्तिमेवाह— एष्यामीति । स्नेह सूचयन् सम्बोधयति— सुभ्रू इति । इदानीं कार्यान्तरस्य विद्यमानत्वात् उद्वेगोस्तीति । साधितः कंसवधादिरूपोर्थः प्रयोजन येन तथाभूतः सस्ते गृह प्रत्यागमिष्यामि । तद्विश्वासार्थ गृह ता च विशिनष्टि— पुसामाधिविकर्शन कामप्रयुक्तमनःपीडाशमन गृहम् । अगृहाणां न विद्यन्ते अस्या पुर्या गृहा येषाम, तत्र हेतुमाह— पान्थानामिति । अस्माक त्वमेव परायणमाश्रय इति ॥ १२ ॥ एवंविधया माध्व्या मधुरया वाण्या तां विसृज्य तत उत्तरीयान्त त्याजयित्वा प्रस्थाप्य मार्गे व्रजन् साग्रजो रामेण सहितः कृष्णः वणिग्जनै. नानाविधैरुपायनै श्रेष्ठवस्तुभिस्ताम्बूलादिभिश्चार्चितो बभूव ॥ १३ ॥

तस्य भगवतो दर्शनेन यः स्मरस्य क्षोभस्तेन स्त्रिय आत्मानं देहं नाविदन् । तत्र लिङ्गमाह— विस्रस्ताः स्थानात् प्रचलिताः वासःप्रभृतयो यासा ता इति । 'सर्वक्रियानिवृत्तिरपि जाता' इत्याह— लेख्यवल्लिखितप्रतिमावन्निश्चला मूर्तयो यासा ता इति ॥ १४ ॥ ततश्च पारान् प्रति धनुष' स्थान धनुर्मखशाला पृच्छमानः अच्युतः कृष्णः तस्मिन् धनुषः स्थाने प्रविष्टः सन्नैन्द्रधनुरिवाद्भुत महत्त्वेन पूजितत्वेन च सत्कृतं धनुर्ददर्श । ॥ १५ ॥ तदेव स्पष्टयति— बहुभिः पुरुषैर्गुप्त रक्षित अर्चित च परमा ऋद्धिः स्वर्णालङ्कारादिसमृद्धिरस्यास्तीस्ति तथा तद्धनुर्दृष्ट्वा नृभिश्च तद्रक्षकै र्बहुधा वार्यमाणोपि कृष्णः प्रसह्य बलात् धनुराददे गृहीतवान् ॥ १६ ॥ ततश्च उरुक्रमो महाबलपराक्रमो भगवान् सलील यथा भवति तथाऽना-

तद्दर्शनस्मरक्षोभादात्मान नाविदन् स्त्रिय ॥ विस्रस्तवास कबरवलयालेख्यमूर्तय ॥ १४ ॥ ततः पौरान् पृच्छमानो धनुष· स्थानमच्युत·॥ तस्मिन् प्रविष्टो ददृशे धनुरैन्द्रमिवाद्भुतम् ॥१५॥ पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिमत् ॥ वार्यमाणो नृभि कृष्ण प्रसह्य धनुराददे ॥ १६ ॥ करेण वामेन सलीलमुद्धृत सज्य च कृत्वा निमिषेण पश्यताम् ॥ नृणां विकृष्य प्रबभञ्ज मध्यतो यथेक्षुदण्ड मदकर्युरुक्रमः ॥ १७ ॥ धनुषो भज्यमानस्य शब्द खं रोदसी दिशः ॥ पूरयामास यं श्रुत्वा कसस्त्रासमुपागमत् ॥ १८ ॥ तद्रक्षिण· सानुचरा· कुपिता आततायिन· ॥ ग्रहीतुकामा आवव्रुर्गृह्यतां बद्ध्यतामिति ॥ १९ ॥ अथ तान् दुरभिप्रायान् विलोक्य बलकेशवौ ॥ क्रुद्धौ धन्वन आदाय शकले तांश्च जघ्नतु· ॥ २० ॥

यासेनैव वामेन करेणोद्धृत धनुः सज्य समारोपितज्याक कृत्वा नृणा पश्यतामेव सता निमिषमात्रेणैव कालेन विकृष्य मध्यतो बभञ्ज भग्नमकरोत्। अनायासेन भञ्जने दृष्टान्तमाह— यथा मदकरी हस्ती इक्षुदण्ड मध्यतो भञ्जयति तद्वदिति ॥ १७ ॥ तदा भज्यमानस्य धनुषः ध्वनि· खमाकाशं रोदसी द्यावापृथिव्यौ दिशश्च पूरयामास सर्वत्र व्याप्तो जातः । य शब्द श्रुत्वा कसस्त्रास भय प्राप्तवान् ॥ १८ ॥ तस्य धनुषो रक्षिणः सानुचरा· आततायिनः जिघासया गृहीतशस्त्राः ग्रहीतुकामाः जिघृक्षव गृह्यता बध्यतामिति वदन्तः आवव्रुः तावावृतवन्तः ॥ १९ ॥ अथानन्तरमेव तान् दुरभिप्रायान् जिघासून् विलोक्य क्रुद्धौ रामकृष्णौ धनुषः शकले आदाय ताभ्या तान् जघ्नतु· ॥ २० ॥

तदा कसेन प्रेषित बल सैन्य च हत्वा ततस्तस्मात् शालामुखात् बहिर्निष्क्रम्य तत्र तत्र पुरसम्पदो निरीक्ष्य हृष्टौ चेरतु' ॥ २१ ॥ तयो रामकृष्णयोस्तद्धनुर्भञ्जनादिलक्षणमद्भुत वीर्य कर्म निशम्य श्रुत्वा तेजः पराभिभवनसामर्थ्य, प्रागल्भ्य धृष्टता, रूप सौन्दर्य च दृष्ट्वा पुरवासिनस्तौ विबुधेषु उत्तमौ मेनिरे अमन्यन्त ॥ २२ ॥ स्वैर यथेष्टं यथा तथा तयोर्विचरतोः सतोः सूर्यो स्तगिरिमुपेयिवान् प्राप्तवान्, ततश्च गोपैर्वृतौ रामकृष्णौ पुरात् शकटावमोचनस्थान नन्दादिसमीपमीयतुः आजग्मतुः ॥ २३ ॥ मुकुन्दस्य विगमे व्रजान्निर्गमनवेलाया तद्विरहणातुरा विवशा गोप्यः या आशिष. आशासत ' सुख प्रभाता रजनीयम् ' इत्यादिना पुरयोषितामाशिष सत्या भविष्यन्तीति उक्तवत्यस्ताः सर्वा मधुपुरीं पुरुषभूषणस्य पुरुषोत्तमस्य कृष्णस्य

बल च कसप्रहित हत्वा शालामुखात्तत· ॥ निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसम्पद· ॥ २१ ॥ तयोस्तदद्भुत वीर्य निशम्य पुरवासिनः ॥ तेज प्रागल्भ्य रूप च मेनिरे विबुधोत्तमौ ॥ २२॥ तयोर्विचरतो' स्वैरमादित्योऽस्तमुपेयिवान् ॥ कृष्णरामौ वृतौ गोपै· पुराच्छकटमीयतु ॥ २३ ॥ गोप्यो मुकुन्दविगमे विरहातुरा या आशासताऽऽशिष ऋता मधुपुर्यभूवन् ॥ सम्पश्यतां पुरुषभूषणगात्रलक्ष्मी हित्वेतरान्नु भजतश्चकमेऽयन श्री· ॥२४॥ अवनिक्ताङ्घ्रियुगलौ भुक्त्वा क्षिरोपसेचनम् ॥ ऊषतुस्तां सुख रात्रिं ज्ञात्वा कसचिकीर्षितम् ॥ २५ ॥ कंसस्तु धनुषो भङ्ग रक्षिणां स्वबलस्य च ॥ वध निशम्य गोविन्दरामविक्रीडित परम् ॥ २६ ॥ दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मति ॥ बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥ २७ ॥

गात्रलक्ष्मीं देहशोभा पश्यता जनाना ऋताः सत्या बभूवुः । तद्गात्रशोभातिशय सूचयन्नाह—भजतः सेवमानान् इतरान् ब्रह्मादीन् हित्वा श्रीर्महालक्ष्मीर्यत् गात्रमयन चकमे स्वाश्रयतया स्वीकृतवती ॥ २४ ॥ अवनिक्तं क्षालितं अङ्घ्रियुगुल ययोस्तौ क्षीरोपसेचन क्षीरमिश्रमन्न भुक्त्वा कसचिकीर्षित परेद्युः क्रियमाण स्ववधोद्योग च ज्ञात्वा ता रात्रि सुख यथा स्यात्तथा ऊषतुः ॥ २५ ॥ गोविन्दरामयोः पर केवल विक्रीडित अनायासेनैव कृत धनुर्भङ्गादिक निशम्य कस· ॥ २६ ॥ भीतः अतएव प्रजागर· अलब्धनिद्र· उभयतः स्वाप्नानि जागरितानि च मृत्योर्दौत्यकराणि आगमनसूचकानि चकारात् लोके दुष्कीर्तिसूचकानि च बहूनि दुर्निमित्तानि अपशकुनान्यचष्ट ददर्श । 'तद्दर्शनात् तत्समयेऽपि भगवच्चरणागमनमुचितम्, तन्नाकरोद्दुर्बुद्धित्वात्' इत्याशयेनाह—दुर्मतिरिति ॥ २७ ॥

तान्येव कानिचिदाह—त्रिभिः। तत्र तावज्जागरितान्याह—अदर्शनमिति द्वाभ्याम । दर्पणजलादौ प्रतिरूपे सत्यपि दृश्यमानेऽपि तत्र स्वशिरसः अदर्शन, तथा द्वितीये असत्यपि अक्षिनिकोचनादिद्वित्वदर्शननिमित्ताभावेऽपि ज्योतिषा चन्द्रादीना द्वैरूप्य द्वित्व च ददर्श ॥ २८ ॥ स्वच्छायाया छिद्रप्रतीतिः, कर्णरन्ध्रयोः पिहितयोः सतोरन्तःश्रूयमाणो यो ध्वनि· स प्राणघोष· तस्यानुपश्रुतिः अश्रवण, वृक्षेषु स्वर्णवर्णप्रतीति , रजःकर्दमादिषु स्वपदानामदर्शनम् ॥ २९ ॥ स्वाप्नानि दुर्निमित्तान्याह—स्वप्न इति । प्रेतैः परिष्वङ्गः आलिङ्गन, खरमारुह्य यान, विषभक्षण, नलदमाली जपा कुसुममालावान् तैलेनाभ्यक्तः दिगम्बरो नग्नश्चैको यायात् गच्छेत् इति यत्तदपि एक दुर्निमित्त, तथाभूतमप्यात्मान ददर्शेत्याशयः ॥ ३० ॥ इत्थभूतानि मृत्युसूचकानि स्वाप्नानि जागरितानि चान्यान्यपि दुर्निमित्तानि पश्यन् मरणात् सन्त्रस्तः कसश्चिन्तया निद्रा न लेभ इत्यन्वयः॥ ३१ ॥

अदर्शनं स्वशिरस प्रतिरूपे च सत्यपि ॥ असत्यपि द्वितीये च द्वैरूप्य ज्योतिषां तथा ॥ २८ ॥
छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः ॥ स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥ २९ ॥
स्वप्ने प्रेतपरिष्वङ्ग· खरयान विषादनम् ॥ यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगम्बरः ॥ ३० ॥
अन्यानि चेत्थभूतानि स्वप्नजागरितानि च ॥ पश्यन् मरणसन्त्रस्तो निद्रां लेभे न चिन्तया ॥ ३१ ॥
व्युष्टायां निशि कौरव्य सूर्ये चाद्भ्य· समुत्थिते ॥ कारयामास वै कसो मल्लक्रीडामहोत्सवम् ॥ ३२ ॥
आनर्चु· पुरुषा रङ्ग तूर्यभेर्यश्च जघ्निरे ॥ मञ्चाश्चालङ्कृताः स्रग्भिः पताकाचैलतोरणैः ॥ ३३ ॥
तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः॥ यथोपजोष विविशू राजानश्च कृतासनाः ॥ ३४ ॥

'कसस्य कुमतित्वमनुसन्धेयम्' इत्याशयेन सम्बोधयति—कौरव्येति । निशि व्युष्टाया प्रभाताया सत्यां सूर्ये चाद्भ्यः समुत्थिते सति " अद्भ्यः प्रातरुदेत्यपः साय प्रविशति य उदगान्महतोर्णवाद्विभ्राजमानः सलिलस्य मध्यात् समावृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु " इत्यादिश्रुते. कसः मल्लाना क्रीडारूप महोत्सवमेव कारयामास ॥ ३२ ॥ तत्प्रकार स्पष्टयति—पुरुषाः कसभृत्याः रङ्ग मल्लक्रीडास्थान आनर्चुः मार्जनचन्दनाम्भ.- सेचनमालादिभिलङ्कृतवन्तः, तूर्याणि भेर्यश्च जघ्निरे शाब्दिता जाताः। मञ्चाः दिदृक्षूणामुपवेशनार्थमुच्चानि स्थानानि स्रगादिभिः स्वलङ्कृता जाताः ॥ ३३ ॥ तेषु मञ्चेषु पौराः पुरवासिनो जानपदा बहिर्देशवासिनश्च ब्राह्मणक्षत्रियादयो जनाः, तथा कृतानि मञ्चोपरिस्थापितानि आसनानि सिहासनानि येषा ते राजानश्च यथोपजोष यथासुख विविशुः उपविष्टाः ॥ ३४ ॥

कसस्तु अमात्यैर्मन्त्रिभि. परिवृत मण्डलेश्वरा ये राजानस्तन्मध्यस्थः दुर्निमित्तदर्शनादिना विदूयता प्रकम्पमानेन हृदयेन युक्तो राजोचित मञ्चमुपाविशत् ॥ ३५ ॥ तदा मल्लाना तालः करतलैर्भुजताडनशब्द· उत्तरः उच्चैः श्रूयमाणो येषु तेषु तूर्येषु वाद्यमानेषु सत्सु मल्ला रङ्गभूमि समाविशन् समागताः । 'तेषामागमन हर्षेण' इति सूचयन्नाह— स्वलङ्कृता इति । 'भगवता सह युद्धार्थमेवागता' इत्याशयेनाह— सोपाध्याया इति। उपाध्याया मल्लाचार्या इति, तैः सहिता इत्यर्थ. । ननु 'धनुर्भङ्गादि तत्कृतं कर्म श्रुत्वापि कुतो न भीता· ?' तत्राह— दृप्ता इति, गर्विता· ॥ ३६ ॥ एव साधारणाना मल्लाना साधारणेनागमन निरूप्य मुख्यानामागमनमाह—चाणूरेति। वल्गुवाद्यैः मनोहरतूर्यादिघोषैः प्रहर्षितास्ते प्रसिद्धाश्चाणूरादयो मल्ला उपस्थान स्वक्रीडास्थानमासेदुः आजग्मु. ॥ ३७ ॥ तथा भोजराजेन कसेन समाहूताः निवेदितानि समर्पितान्युपायनानि यैस्ते नन्दादयो गोपाश्चैकस्मिन् मञ्चे

कस· परिवृतोऽमात्यै राजमञ्च उपाविशत् ॥ मण्डलेश्वरमध्यस्थो हृदयेन विदूयता ॥ ३५ ॥
वाद्यमानेषु तूर्येषु मल्लतालोत्तरेषु च ॥ मल्ला· स्वलङ्कृता दृप्ता· सोपाध्याया समाविशन् ॥ ३६ ॥
चाणूरो मुष्टिक· कूट· शलस्तोशल एव च ॥ त आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिता· ॥ ३७ ॥
नन्दगोपादयो गोपा भोजराजसमाहुता ॥ निवेदितोपायनास्ते एकस्मिन् मञ्च आविशन् ॥ ३८ ॥
इति श्रीमद्भा० महापु० दश० राजसनिरोधनिरू० कुब्जासुरूपदानादिनिरूपणं नाम द्विचत्वारिंशोऽध्याय· ॥ ४२ ॥

॥ श्रीशुक उवाच ॥

अथ कृष्णश्च रामश्च कृतशौचौ परतप ॥ मल्लदुन्दुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतु ॥ १ ॥
रङ्गद्वार समासाद्य तस्मिन्नागमवस्थितम् ॥ अपश्यत् कुवलयापीड कृष्णोऽम्बष्ठप्रचोदितम् ॥ २ ॥

आविविशु. ॥ ३८ ॥ इति श्रीवल्लभाचार्य—वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येव भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने ॥ द्विचत्वारिंशकोऽगच्छत् कुब्जासुरूपबोधक. ॥ ३ ॥ ॥ ७ ॥ त्रिचत्वारिंशके हस्ति—हनन रङ्गवेशनम् ॥ चाणूरेण च संवादः कृष्णस्य विनिरूप्यते ॥ १ ॥ अथ नन्दादिगमनानन्तर हे परतप! कृत शौच दन्तधावनस्नानादिक याभ्यां तौ रामकृष्णौ मल्लतालाना दुन्दुभीना च निर्घोष श्रुत्वा तदुत्सव द्रष्टुमुपेयतुः आजग्मतुः ॥ १ ॥ कृष्णो रङ्गस्य मल्लक्रीडास्थानस्य द्वारमासाद्य आगत्य तस्मिन् द्वारे अम्बष्ठेन हस्तिपेन प्रचोदित कुवलयापीड नाग गजमवस्थितमपश्यत् ॥ २ ॥

ततश्च शौरिः कृष्णः परिकर बद्ध्वा युद्धोचित दृढ परिधान कृत्वा कुटिलान् वक्रान् विकीर्णान् अलकान् समुह्य निबध्य मेघनादवद्गभीरया पूर्णाक्षरया वाचा हस्तिपमुवाचेत्यन्वयः ॥ ३ ॥ तदुक्तिमेवाह— अम्बष्ठाम्बष्ठेति । अम्बष्ठाम्बष्ठेति द्विरुक्ति क्रोधसूचनार्थी, नौ आवयोर्मार्ग देहि, अपक्रम मार्ग परित्यज, मा चिर विलम्ब मा कार्षीः । नो चेत् मार्ग न दास्यासि चेत् अद्यैव सकुञ्जर त्वा यमस्य सादन लोक नयामि ॥ ४ ॥ एव निर्भर्त्सितः, अतएव कुपितोऽम्बष्ठः अङ्कुशादिना कोपितमतः अन्तको मृत्युः, कालस्तन्निमित्त, यमस्तु मृत्युनियन्ता, तैरुपमा यस्य तमतिभयकर गज कृष्णाय कृष्ण हन्तु चोदयामास ॥ ५ ॥ करीन्द्रो हस्ती तरसा वेगेनाभिद्रुत्य सम्मुखमागत्य शुण्डया त कृष्णमग्रहीत् । 'तदा' स कृष्णोऽपि तस्य करात शुण्डाग्रतो विगलितो विच्युतः सन्नमु हस्तिन निहत्य तस्याङ्घ्रिषु चरणाना मध्ये अलीयत अदृश्यो बभूवेत्यर्थः ॥ ६ ॥ ततश्च सङ्क्रुद्धः स गजस्त केशव

बद्ध्वा परिकर शौरिः समुह्य कुटिलालकान् ॥ उवाच हस्तिप वाचा मेघनादगभीरया ॥ ३ ॥
अम्बष्ठाम्बष्ठ मार्गं नौ देह्यपक्रम मा चिरम् ॥ नो चेत् सकुञ्जर त्वाऽद्य नयामि यमसादनम् ॥ ४ ॥
एवं निर्भर्त्सितोऽम्बष्ठ कुपित कोपितं गजम् ॥ चोदयामास कृष्णाय कालान्तकयमोपमम् ॥ ५ ॥
करीन्द्रस्तमभिद्रुत्य करेण तरसाऽग्रहीत् ॥ कराद्विगलित सोऽमु निहत्याङ्घ्रिष्वलीयत ॥ ६ ॥
सङ्क्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम् ॥ परामृशत् पुष्करेण स प्रसह्य विनिर्गतः ॥ ७ ॥
पुच्छे प्रगृह्यातिबल धनुषः पञ्चविंशतिम् ॥ विचकर्ष यथा नागं सुपर्ण इव लीलया ॥ ८ ॥

श्रीकृष्णमचक्षाण. अपश्यन् पुष्करेण शुण्डाग्रेण परामृशत् अन्वेषण कृत्वा त धृतवानित्यर्थः । पुष्करेणान्वेषणे हेतुमाह— घ्राणदृष्टिरिति । घ्राणमव-घ्राणम्, तेन दृष्टिर्दर्शन यस्य स । पशवो हि लोचनागोचरमपि घ्राणेन जानन्तीति प्रसिद्धम् । स च कृष्ण प्रसह्य बलात्पुनस्तद्ग्रहणाद्विनिर्गत. । ॥ ७ ॥ ततश्च तमतिबल गज पुच्छे प्रगृह्य यावद्धनुषः धनुषा पञ्चविंशतिस्तावन्त देश लीलया अनायासेनैव विचकर्ष, धनुषः प्रमाण हि हस्तच-तुष्टयम्, तेन हस्तशतपर्यन्त विचकर्ष आकृष्य नीतवानित्यर्थः । ननु ' स च महान्, भगवांश्च सूक्ष्मः, अतः कथं तेन तस्याकर्षण सम्भवति ? कि वा तत्प्रयोजनम् ?' इत्यपेक्षाया दृष्टान्तमाह— नाग सर्पमिव वर्तमान गज सुपर्णः गरुडश्च स्वय कृष्ण इति । यथा स्वभक्ष्य सर्प गृहीत्वा त मारयितु तद्बलविनाशाय विकर्षेत्तथा तद्बलविनाशाय भगवांस्तं विकर्षितवानित्यर्थः ॥ ८ ॥

स अच्युतः अक्षीणबलपराक्रम श्रीकृष्ण. पुच्छग्राहिणमात्मान ग्रहीतु यदि स गज. दक्षिणत परिवर्तते तर्हि त सव्यतो भ्रामयति, यदा च सव्यतः परिवर्तते तदा तं बलाद्दक्षिणतो भ्रामयति, एवं पर्यावर्तमानेन करिणा सह बभ्राम। 'एवं भ्रमणे भ्रामणे च तस्याभ्यासोऽप्यस्ति' इत्यनायासत्वं द्योतयन् दृष्टातमाह—बालो यथा गृहीतपुच्छेन भ्राम्यमाणगोवत्सेन सह भ्राम्यति तद्वदिति ॥ ९ ॥ ततश्च तौ बाललीला त्यक्त्वा प्रौढलीलाप्रदर्शनार्थं पुच्छ त्यक्त्वा अभिमुखमभ्येत्य समागत्य स्वपाणिना वारण गजमाहत्य तेन पदे पदे स्पृश्यमानः स यथा पतेत्तथा प्रकर्षेण आ सर्वतो वञ्चयन् द्रवन् धावस्त पातयामासेत्यन्वयः ॥ १० ॥ पुनश्च स भगवान् धावन् क्रीडयैव त गज वञ्चनार्थमेव भूमौ पतित्वा सहसा झटिति तदलक्षित एवोत्थितः उत्थायान्यत्र स्थितः, स च गजः त कृष्ण पतित मत्वा क्रुद्ध॰ सन् दन्ताभ्या क्षितिमहनत् अहन्। यदैव तद्धननाय प्रवृत्तस्तदैव झटिति तत उत्थायान्यत्र

स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युत॰ ॥ बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालक॰ ॥ ९ ॥ ततोऽभिमुखमभ्येत्य पाणिनाऽऽहत्य वारणम् ॥ प्राद्रवन् पातयामास स्पृश्यमान पदे पदे ॥ १० ॥ स धावन् क्रीडया भूमौ पतित्वा सहसोत्थितः ॥ तं मत्वा पतितं क्रुद्धो दन्ताभ्यां सोऽहनत् क्षितिम् ॥ ११ ॥ स्वविक्रमे प्रतिहते कुञ्जरेन्द्रोऽत्यमर्षित॰ ॥ चोद्यमानो महामात्रै॰ कृष्णमभ्यद्रवद्रुषा ॥ १२ ॥ तमापतन्तमासाद्य भगवान् मधुसूदन ॥ निगृह्य पाणिना हस्त पातयामास भूतले ॥ १३ ॥ पतितस्य पदाऽऽक्रम्य मृगेन्द्र इव लीलया ॥ दन्तमुत्पाट्य तेनेभ हस्तिपांश्चाहनद्धरि॰ ॥ १४ ॥ मृतकं द्विपमुत्सृज्य दन्तपाणि समाविशत् ॥ असन्यस्तविषाणोऽसृङ्मदबिन्दुभिरङ्कित ॥ विरूढस्वेदकणिकावदनाम्बुरुहो बभौ ॥ १५ ॥

गमनात्तद्दन्तसबन्धो भूमावेव जातस्ततोपि तस्यैव दन्तव्यथा जाता, न काचिद्भगवत॰ क्षतिरिति ज्ञेयम् ॥ ११ ॥ एव पर्यावर्तनादिना स्वविक्रमे पराक्रमे प्रतिहते क्षीयमाणे सति कुञ्जरेन्द्रोऽत्यमर्षितः कृष्णपराक्रममसहमानः महामात्रै. हस्तिपैश्च चोद्यमानः रुषा क्रोधेन कृष्ण हन्तुमभ्यद्रवत् वेगेनसन्मुखमधावत् ॥ १२ ॥ स च भगवान् त गजमापतन्त वेगेनागच्छन्तमासाद्य तस्य हस्त शुण्डा पाणिना निगृह्य भूतले पातयामास। 'न च कृष्णेन तत्पातनमसम्भावितम्, यो हि ब्रह्मादीनामपि भयकर मधु हतवास्तदग्रेऽय को वराक' इत्याशयेनाह—मधुसूदन इति ॥ १३ ॥ हरि॰ श्रीकृष्ण. पतित गजेन्द्र पदाऽऽक्रम्य पादाक्रान्तं कृत्वा मृगेन्द्रः सिंह इव लीलया अनायासेनैव तस्य दन्तमुत्पाट्य तेन दन्तेनैन हस्तिन हस्तिपाश्चाहनत् अहन् ॥ १४ ॥ ततश्च मृत द्विपं गजमुत्सृज्य त्यक्त्वा दन्तपाणिः कृष्णो रङ्ग समाविशत् तत्र च वीरादिश्रिया बभौ। तमेव विशिनष्टि—असे स्कन्धे न्यस्तो निहतो विषाणो गजदन्तो येन स॰,

असृजः रुधिरस्य मदस्य च बिन्दुभिः अङ्कितः, विरूढाः उद्गताः स्वेदकणिका यस्मिस्तद्वदनाम्बुरुहं यस्य स. ॥ १५ ॥ एव कृष्णं वर्णयित्वा गोपैः सहितयो; रामकृष्णयोरुभयोरपि शोभातिशयमाह—वृताविति । 'अनेकरसयुक्ततया वक्ष्यमाणत्वात् सावधानतया श्रोतव्यम्' इत्याशयेन सम्बोधयति—राजन्निति । गजदन्तावेव वरे श्रेष्ठे आयुधे ययोस्तौ कतिपयैर्गोपैर्वृतौ बलदेवजनार्दनौ रङ्ग मल्लक्रीडास्थान विविशतुः ॥ १६ ॥ तत्र च "ये यथा मा प्रपद्यन्ते तास्तथैव भजाम्यहम्" इति स्ववाक्यानुरोधात् 'रौद्रादिरसकदम्बमूर्तिर्भगवास्तत्तदभिप्रायानुसारेण तथा तथा बभौ' इत्याह—मल्लानामिति । मल्लादीना द्रष्टॄणामशन्यादिरूपेण दशधा विदित सन् साग्रजो बलदेवसहितः कृष्णो रङ्ग गत इत्यन्वयः । तत्र दशविधानां रसाना सङ्ग्रहश्लोक — रौद्रोऽद्भुतश्च शृङ्गारो हास्य वीरो दया तथा। भयानकश्च बीभत्सः शान्तः सप्रेमभक्तिक" इति ॥ अशनिः अशनिवद्रौद्र· । नरवर· अद्भुतरूपः स्मर· । शृङ्गार-रसविशिष्ट स्वजनः यथा सर्वदा सह क्रीडति तथा हास्यरसविशिष्टः । असता क्षितिभुजा राज्ञा शास्ता शिक्षको वीररसविशिष्ट. । पित्रोर्देवकी—

**वृतौ गोपै कतिपयैर्बलदेवजनार्दनौ ॥ रङ्ग विविशतू राजन् गजदन्तवरायुधौ ॥ १६ ॥ मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान् गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ॥ मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां वृष्णीनां परदेवतेति विदितो रङ्ग गत· साग्रज· ॥ १७ ॥ हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ ॥ कसो मनस्व्यपि तदा भृशमुद्विविजे नृप ॥ १८ ॥ तौ रेजतू रङ्गगतौ महाभुजौ विचित्रवेषाभरणस्रगम्बरौ ॥ यथा नटावुत्तमवेषधारिणौ मन· क्षिपन्तौ प्रभया निरीक्षताम् ॥ १९ ॥**

वसुदेवयोः शिशुः करुणारसविशिष्टः । भोजपते· कसस्य मृत्युर्भयानक । अविदुषा तत्प्रभावानभिज्ञाना विराट् विकलः अपर्याप्तो राजत इति तथा बीभत्सः, विकलत्वं च 'क वज्रसारसर्वाङ्गौ' इत्यादिना वक्ष्यते । योगिना पर तत्त्व परमात्मेति शान्तः । वृष्णीना यादवादिभक्तानां परदेवतेति भक्तिरसः । ॥ १७ ॥ 'बालिष्ठे निहते राज्ञोऽपि भय भवत्येव, अत्र तु तवापि न सन्देहः, नृपत्वेनानुभूतत्वात्' इति सूचयन् सम्बोधयति—नृपेति । कुवलया-पीडाख्य गज हतं श्रुत्वा तौ रामकृष्णावपि दुर्जयौ दृष्ट्वा मनस्वी धीरोऽपि कसो भृशमत्यन्त तदा उद्विविजे भीतो बभूव ॥ १८ ॥ विचित्रो वेष आभरणानि स्रजश्चाम्बर च ययोस्तौ रङ्गगतौ रामकृष्णौ प्रभया स्वकान्त्या निरीक्षता जनाना मनः क्षिपन्तौ क्षोभयन्तौ रेजतुरित्यन्वयः । 'तत्र तदापि तयोर्भय नास्ति, क्रियाशक्त्यतिशयत्वात्' इत्याशयेनाह—महाभुजाविति । तत्र दृष्टान्तमाह—उत्तमवेषधारिणौ नटौ यथा तथेति ॥ १९ ॥

हे नृप ! मञ्चे स्थिता· नागराः पौराः, राष्ट्रका जानपदाश्च जनास्तावुत्तमपूरुषौ निरीक्ष्य प्रहर्षवेगेनोत्कलितानि उज्जृम्भितानि ईक्षणानि आननानि च येषा तथाभूता नयनैर्लावण्यपानपात्रैस्तयोराननं पपुः आननगत लावण्यरस पीतवन्त·, परन्तु न तृप्ताः। निराकाङ्क्षा न बभूवुरित्यर्थः ॥ २० ॥ एतदेव स्पष्टयति— पिबन्त इवेति । चक्षुरादिभिस्तयोरन्तःप्रवेशनादि कुर्वन्त एव स्थिता इत्यर्थः ॥ २१ ॥ तयो रूप गजदन्तायुधादियुक्त, गुणाः शौर्यादय., माधुर्य हसितालापादिगतं, प्रागल्भ्यं धाष्टर्यं, तैः स्मारिताः स्मरण प्रापिता इव यथादृष्ट धनुर्भङ्गादि यथाश्रुतमवतारादि तदनतिक्रम्य ते जना वै प्रसिद्धतया परस्परमूचुरित्यन्वयः ॥ २२ ॥ तेषामुक्तिमेवाह— एतावित्यादिभिरष्टभि. । एतौ रामकृष्णौ सूक्ष्माद्भगवत ऐश्वर्यादिगुणपूर्णस्यैवांशेनैव इह लोके तत्रापि वसुदेवस्य वेश्मन्यवतीर्णावित्यन्वय· । हिशब्दोऽवधारणे । ‘ कोऽसौ भगवान् ? ’ तत्राहुः— नारायणस्येति । औपचारिक

निरीक्ष्यतावुत्तमपूरुषौ जना मञ्चस्थिता नागरराष्ट्रका नृप ॥ प्रहर्षवेगोत्कलितेक्षणानना· पपुर्न तृप्ता नयनैस्तदाननम् ॥ २० ॥ पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ॥ जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभि· ॥ २१ ॥ ऊचुः परस्परं ते वै यथादृष्ट यथाश्रुतम् ॥ तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिता इव ॥ २२ ॥ एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि ॥ अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि ॥ २३ ॥ एष वै किल देवक्यां जातो नीतश्च गोकुलम् ॥ कालमेतं वसन् गूढो ववृधे नन्दवेश्मनि ॥ २४ ॥ पूतनाऽनेन नीतान्तं चक्रवातश्च दानवः ॥ अर्जुनौ धेनुकः केशी गुह्यकोऽन्ये च तद्विधा· ॥ २५ ॥

भगवत्त्ववारणायाहुः— साक्षादिति । ‘ किमर्थमवतीर्णौ ’ इत्यपेक्षाया ‘ दुःखहरणशीलत्वाद्भक्तदुःखनिरासार्थम् ’ इत्याशयेनाहुः— हरेरिति । अंशेनेति रामस्यांशावतारत्वादजहत्स्वार्थया लक्षणया छत्रिणो गच्छन्तीतिवत्प्रयोगः, अन्यथा ‘ कृष्णस्तु भगवान्स्वयम् ’ इत्युक्तिविरोधापत्ते· ॥ २३ ॥ तत्र जन्मन आरभ्य श्रीकृष्णचरित्र सङ्ग्रहेणाहुः— एष इति । एष श्रीकृष्णो वसुदेवाद्देवक्या जातः, तेन च बिभ्यता गोकुल नीत., एत एतावन्त काल नन्दगृहे गूढ इतरैरज्ञातो वसन् ववृधे एधाञ्चक्रे । ‘ अस्मदुक्तौ सन्देहो न कर्तव्य ’ इत्याशयेनाहु — वै इति। प्रसिद्धत्वादिति । तत्र हेतु सूचयन्त आहु.—किलेति ॥ २४ ॥ अनेनैव कृष्णेन पूतना अन्त मृत्युं नीता प्रापिता, चक्रवातस्तृणावर्त. दानवश्चान्त नीत । अर्जुनवृक्षौ च पातिताविति शेषः । धेनुकादयस्तथाविधा महाबलपराक्रमवन्तोऽन्ये बकासुरादयश्चान्त नीता । तत्र गुह्यक शङ्खचूड· ॥ २५ ॥

एतेनैव गोपालैः सहिता गावश्च दावाग्नेः सकाशात् परिमोचिताः। कालियाख्य. सर्पश्चानेनैव दमितः वशीकृत्य निष्कासित.। इन्द्रश्च विगतो मदो यस्मात्तथाभूतः कृतः ॥ २६ ॥ अद्रिप्रवरो गोवर्धनोऽमुना कृष्णेन कर्त्रा सप्ताह सप्तदिनपर्यन्तमेकहस्तेन धृतः, तेन वर्षादिभ्यो गोकुलं च परित्रातम् ॥ २७ ॥ नित्यप्रमुदित हसितमीक्षण च यस्मिंस्तदस्य मुख मुदा पश्यन्त्यो गोप्यो विविधान् आध्यात्मिकाधिदैविकभेदभिन्नास्तापान् दुःखानि अश्रम यथा भवति तथा श्रमविनैव तरन्ति स्म अतिवर्तन्ते स्म ॥ २८ ॥ अनेन परिरक्षितोऽय यदोर्वंश' सुबहुविश्रुतः प्रसिद्ध. श्रिय सम्पद, यश. कीर्ति, महत्त्व पूज्यत्व च लप्स्यत इति प्रामाणिका वदन्तीत्यन्वय' ॥ २९ ॥ अथ रामस्य गुणान् सङ्ग्रहेणाह.— अयमिति। अय च कमल-

गाव· सपाला एतेन दावाग्ने परिमोचिता' ॥ कालियो दमित सर्प इन्द्रश्च विमद कृत ॥ २६ ॥
सप्ताहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना ॥ वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥ २७ ॥
गोप्योऽस्य नित्यमुदितहसितप्रेक्षण मुखम् ॥ पश्यन्त्यो विविधांस्तापांस्तरन्ति स्माश्रम मुदा ॥ २८ ॥
वदन्त्यनेन वंशोऽय यदो· सुबहुविश्रुतः ॥ श्रिय यशो महत्त्व च लप्स्यते परिरक्षितः ॥ २९ ॥
अय चास्याग्रजः श्रीमान् राम कमललोचन' ॥ प्रलम्बो निहतो येन वत्सको ये बकादय ॥ ३० ॥

॥ श्रीशुक उवाच ॥

जनेष्वेव ब्रुवाणेषु तूर्येषु निनदत्सु च ॥ कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥ ३१ ॥
हे नन्दसूनो हे राम भवन्तौ वीर्यसम्मतौ ॥ नियुद्धकुशलौ श्रुत्वा राज्ञाऽऽहूतौ दिदृक्षुणा ॥ ३२ ॥
प्रिय राज्ञः प्रकुर्वत्यः श्रेयो विन्दन्ति वै प्रजाः ॥ मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ॥ ३३ ॥

लोचन. श्रीमान् सौन्दर्यातिशययुक्तो रामोऽस्य कृष्णस्याग्रजः, येन प्रलम्बादयो निहताः। धेनुके द्विरुक्तिर्वत्से विपर्ययोक्तिश्च जनवादेष्वनिश्चयात् ॥ ३० ॥ जनेष्वेव ब्रुवाणेषु तदुत्कर्षमसहमानश्चाणूर कृष्णरामौ सम्बोध्य वाक्यमब्रवीत् ॥ ३१ ॥ तदुक्तिमाह— हे नन्दसूनो कृष्ण ' हे राम ' भवन्तौ वीर्यवत्त्वेन सर्वसम्मतौ, अतो नियुद्धे मल्लयुद्धे कुशलौ श्रुत्वा तन्नियुद्ध दिदृक्षुणा राज्ञा आहूतौ ॥ ३२ ॥ ननु ' राज्ञो दर्शनेन सुख भवति, तेनामास्माक कः पुरुषार्थः सिद्ध्येत् ' इत्याशङ्क्याह— प्रियमिति। वै प्रसिद्धमेतत्। राज्ञः प्रिय प्रकर्षेण कुर्वत्यः प्रजाः श्रेय उत्तमं फल धनादिक विन्दन्ति। प्रशब्दसूचित

निष्कापट्य स्पष्टयति—मनसा हितचिन्तनेन, कर्मणा हिताचरणेन, वाचा यथार्थप्रियभाषणेनेति । अतः प्रियाचरणादन्यथा अप्रिय कुर्वत्यस्तु विपरीत बन्धनमारणभर्त्सनादिक प्राप्नुवन्ति ॥ ३३ ॥ 'न आवा नियुद्धे कुशलौ' इत्यत आह—नित्यमिति । वत्सपाला गोपा प्रमुदिता वनेषु नित्य मल्लयुद्धेन क्रीडन्त एव गाश्चारयन्तीति यथा तथा स्फुट लोके प्रसिद्धमेव। अतो युवा नियुद्धकुशलावेवेति भाव ॥ ३४ ॥ यस्माद्राज्ञ प्रियाचरणात् प्रजाः श्रेयो विन्दन्ति तस्माद्यूय वय च राज्ञः प्रिय नियुद्ध करवामहे। एव राज्ञि प्रीते सति सर्वाणि भूतानि नोऽस्माक प्रसीदन्ति प्रसादयेयुः । कुतो यतो नृपः सर्वभूतमय इति ॥ ३५ ॥ तच्चाणूरवाक्य निशम्य श्रुत्वा नियुद्धमात्मनोऽभिमत मन्यमानः कृष्णस्तद्वचोऽभिनन्द्य तस्मिन् देशे काले च यदुचित तदब्रवीत् ॥ ३६ ॥ अस्य भोजपते· कसस्य वय चकाराद्यूय च ·नाः, अतस्तस्य प्रिय नित्य करवाम, ततश्च नोऽस्माक तत्कृतः

नित्यं प्रमुदिता गोपा वत्सपाला यथा स्फुटम् ॥ वनेषु मल्लयुद्धेन क्रीडन्तश्चारयन्ति गा ॥ ३४ ॥

तस्माद्राज्ञ· प्रिय यूयं वयं च करवामहे ॥ भूतानि न· प्रसीदन्ति सर्वभूतमयो नृप· ॥ ३५ ॥

तन्निशम्याब्रवीत् कृष्णो देशकालोचितं वच ॥ नियुद्धमात्मनोऽभीष्ट मन्यमानोऽभिनन्द्य च ॥ ३६ ॥

प्रजा भोजपतेरस्य वयं चापि वनेचरा ॥ करवाम प्रियं नित्य तन्नः परमनुग्रह ॥ ३७ ॥

बाला वय तुल्यबलै· क्रीडिष्यामो यथोचितम् ॥ भवेन्नियुद्ध माऽधर्म स्पृशेन्मल्लसभासद· ॥ ३८ ॥

॥ चाणूर उवाच ॥

न बालो न किशोरस्त्वं बलश्च बलिनां वर· ॥ लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत् ॥ ३९ ॥

परमानुग्रह· महाननुग्रहो भविष्यति, अत्र न सन्देहः। अपिशब्देन स्वेषु वस्तुतस्तत्प्रजात्वाभाव सूचयति । तत्र हेतु सूचयन्नाह—वनेचरा इति ॥ ·७॥ यद्यपि राज्ञः प्रिय कर्तव्यं तथापि वयं बाला·, अतस्तुल्यबलै· सह क्रीडिष्याम·, न त्वधिकबलैर्भवद्भि । तत्र हेतुमाह—यथा नियुद्धमुचित भवेत। विपक्षे दोष सूचयन्नाह—मल्लसभासदः मल्लसभाधिकृतानधर्मो यथा न स्पृशेदिति ॥ ३८ ॥ एवमुक्तश्चाणूर आह—नेति। त्व न बालो न किशोर·, किंतु युवैव इत्याशयः । 'यादृशस्त्व तादृश एव रामोऽपि' इत्याह—बलश्चेति । 'अथापि बलहीनोऽहम्' इत्याशङ्क्याह—बलिनां वर इति । अत्र लिङ्ग वदन् विशिनष्टि— येन त्वया सहस्रद्विपानां सत्त्वं बल बिभर्तीति तथाभूत इभो गजो लीलया अनायासेनैव हत· ॥ ३९ ॥

तस्माद्बलवत्त्वाद्भवद्भ्या सहबलिभिरस्माभियोंद्धव्यम्। अत्र युद्धे अनय' अधर्मो नास्त्येव। "त्व च कंसस्य भागिनेयो वैरी च कापट्येन नन्दपुत्रतया स्थितस्तत्तव कापट्यमिदानीं ज्ञातमेव, अत. कापट्य परित्यज्य प्रसिद्धशत्रुवद्युध्यस्व" इति सूचयन् सम्बोधयति—वार्ष्णेयेति। मयि विक्रम, मद्धननेन पराक्रम कुर्वित्यर्थ.। तथा बलेन रामेण सह मुष्टिको विक्रमतु ॥ ४० ॥ इति श्रीवल्लभाचार्य—वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने ॥ त्रिचत्वारिंशको रङ्गप्रवेशस्य निरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ चतुश्चत्वारिंशके तु कृष्णेनाक्लिष्टकारिणा ॥ कुपितेन वधस्तस्य कसस्य विनिरूप्यते ॥ १ ॥ 'एव चाणूरेणोक्तो भगवान् किं कृतवान्' इत्यपेक्षायामाह—एवमिति। एवमुक्ते चार्चितः निश्चयेन कृतश्चाणूरादिवधविषयकः सङ्कल्पो येन स भगवान्

तस्माद्भवद्भ्यां बलिभिर्योद्धव्यं नानयोऽत्र वै ॥ मयि विक्रमवा र्ष्णेय बलेन सह मुष्टिकः ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे राजसनिरोधनिरूपणप्रकरणे रङ्गभूमिप्रवेशनिरूपण नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ छ॥ श्रीशुक उवाच ॥ एवं चर्चितसङ्कल्पो भगवान् मधुसूदन ॥ आससादाथ चाणूरं मुष्टिक रोहिणीसुत· ॥ १ ॥ हस्ताभ्यां हस्तयोर्बद्ध्वा पद्भ्यामेव च पादयो· ॥ विचकर्षतुरन्योन्यं प्रसह्य विजिगीषया ॥ २ ॥ अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी ॥ शिर शीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतु· ॥ ३ ॥ परिभ्रामणविक्षेपपरिरम्भावपातनै· ॥ उत्सर्पणापसर्पणैश्चान्योन्य प्रत्यरुन्धताम् ॥ ४ ॥

कृष्ण· अथानन्तरमेव चाणूरमाससाद योद्धुमाजगाम। ततश्च स्वभयशङ्का तु नास्त्येव। तत्र हेतु सूचयन्नाह—मधुसूदन इति। तथा मुष्टिक रोहिणीसुतो राम आससाद ॥ १ ॥ तदा कृष्णचाणूरौ राममुष्टिकौ च हस्तयोर्हस्ताभ्या पादयोः पादाभ्या बद्ध्वा जेतुमिच्छया प्रसह्य बलादन्योन्य विचकर्षतुराकृष्टवन्तौ ॥ २ ॥ कनिष्ठाङ्गुलिव्यतिरेकेण कृतमुष्टिहस्तोऽरत्निः। अरत्निभ्या द्वे अरत्नी, जानुभ्या जानुनी, शिरसा शिरः, उरसा उरश्चाभिजघ्नतुः ॥ ३ ॥ परिभ्रामणं हस्तादिषु गृहीत्वा परितश्चालनम्, विक्षेपो नोदनम्, परिरम्भो बाहुभ्या निपीडनम्, अवपातन अधःक्षेपः, उत्सर्पणमुत्सृज्य पुरतो गमनम्, अपसर्पण पृष्ठतो गमनम, एतैस्तौ कृष्णचाणूरौ राममुष्टिकौ चान्योन्य प्रत्यरुन्धता प्रत्यावृतवन्तौ ॥ ४ ॥

उत्थापन पादौ जानुनी च पिण्डीकृत्योत्थापनम्, उन्नयन हस्ताभ्यामुद्धृत्य नयनम्, चालन कण्ठादिलग्नस्य निःसारणम्, स्थापन पाणिपादादेः पिण्डीकरणम्, एभिः परस्परमात्मनो देहस्यापचक्रतुः अपकृतवन्तौ । तत्र हेतुमाह— जिगीषन्ताविति ॥ ५ ॥ राज्यस्यानर्थहेतुत्व कसदृष्टान्तेन सूचयन् सम्बोधयति— राजन्निति । वरूथशः सङ्घशः समेता. सानुकम्पाः कृष्णविषयकानुकम्पायुक्ताः सर्वयोषितस्तद्बलाबलवत् एकतो बलमन्यतः अबलं तद्युक्त विषम युद्ध पश्यन्त्यः परस्परमूचुरित्यन्वयः ॥ ६ ॥ तदुक्तिमेवाह— महानिति । एषा राजसभासदामय महानधर्मः । 'यदि धर्मरक्षकराजसभायामेवाधर्मस्तदान्यत्र तु भविष्यत्येव स इति महान् खेद' इति द्योतयन्ति— बतेति । 'कोऽसौ अधर्म' इत्यत आह— य इति । बलाबलवद्युद्ध राजा चेत पश्येत्तर्हि स एतैर्वारणीयः, एते तु राज्ञः पश्यत. स्वयमपि तद्दर्शनमन्विच्छन्ति अनुमन्यन्तेऽय महानधर्म । यद्यप्यत्र भगवत

उत्थापनैरुन्नयनैश्चालनैः स्थापनैरपि ॥ परस्पर जिगीषन्तावपचक्रतुरात्मन ॥ ५ ॥
तद्बलाबलवद्युद्धं समेता· सर्वयोषितः ॥ ऊचुः परस्पर राजन् सानुकम्पा वरूथशः ॥ ६ ॥
महानयं बताधर्म एषां राजसभासदाम् ॥ ये बलाबलवद्युद्ध राज्ञोऽन्विच्छन्ति पश्यतः ॥ ७ ॥
क्व वज्रसारसर्वाङ्गौ मल्लौ शैलेन्द्रसन्निभौ ॥ क्व चातिसुकुमाराङ्गौ किशोरौ नाप्तयौवनौ ॥ ८ ॥
धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुव भवेत् ॥ यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् ॥ ९ ॥
न सभां प्रविशेत् प्राज्ञ· सभ्यदोषाननुस्मरन् ॥ अब्रुवन् विब्रुवन्नज्ञो नर· किल्बिषमश्नुते ॥ १० ॥

एव बलवत्त्व, चाणूरस्य तु ततो दुर्बलत्वमेव, तथापि तत्प्रभावज्ञानाभावाद्वैपरीत्योक्तिः ॥ ७ ॥ बलाबलवद्युद्धमेव दर्शयति— क्वेति । वज्रसाराणि वज्रवत् कठिनानि सर्वाङ्गानि करचरणादीनि ययोस्तौ शैलेन्द्रो मेरुस्तत्सन्निभौ तत्सदृशौ मल्लौ क्व? क्व च अतिसुकुमाराण्यङ्गानि ययोस्तौ नाप्त यौवन याभ्यां तौ किशोरौ ? ॥ ८ ॥ न केवलमधर्मोत्पत्तिरेव, किंतु अस्य समाजस्य सभाया धर्मव्यतिक्रम· पूर्वसिद्धस्य धर्मस्य विनाशोऽपि ध्रुवं भवेत् । हिशब्देनास्यार्थस्य शास्त्रसिद्धत्व सूचयन्ति । अतो यत्राधर्मः समुत्तिष्ठेत् प्रवर्तेत तत्र कर्हिचिदपि न स्थेयम् ॥ ९ ॥ सभ्याना दोषाननुस्मरन् प्राज्ञो बुद्धिमान् सभा न प्रविशेत् । 'तत्र प्रवेशे को दोष' इत्यपेक्षाया 'तत्र प्रविष्टस्य त्रिधैव गतिः, तत्र सर्वत्रैव दोष' इत्याह— अब्रुवन् दोषं ज्ञात्वापि तूष्णीं तिष्ठन्, विब्रुवन् तेषा प्रीत्यर्थं धर्मपक्षा द्विपरीत ब्रुवन्, तथा पृष्टोऽप्यज्ञोऽप्यह न जानामीति च ब्रुवन्नरः किल्बिषमश्नुते पाप प्राप्नोति ॥ १० ॥

अपरा आहुः— शत्रुमभित. शत्रोः सर्वतो वल्गतो धावत. कृष्णस्य श्रमवारिभिरुत व्याप्तं मुख वीक्ष्यतामिति । तत्र दृष्टान्तमाहु'— अम्बुभिरुत पद्म-कोशमिवेति ॥ ११ ॥ अन्या आहुः— आताम्रे ईषद्रक्ते लोचने यस्मिस्तत । तत्र हेतुमाहुः— मुष्टिक प्रति सामर्ष सक्रोध हाससरम्भेण हासावेशेन शोभित रामस्य मुख कि न पश्यतेत्यन्वयः ॥ १२ ॥ अन्या आहुः— पुण्या इति । धिगिमा सभाम् यस्यामय परिभूयते । व्रजभुवः पुण्या , यत् यासु अय श्रीकृष्णः सहबलः बलरामेण सहितः वनसम्बन्धीनि चित्राणि माल्यानि यस्य सः गा पालयन् चारयन् हर्षेण वेणु क्वणयन् वादयन् विक्रीडया अञ्चति अटति । 'एतत्पर्यटनेन कथ भूमेरुत्कर्ष. ?' तत्राहुः— गिरित्ररमाभ्या महादेवलक्ष्मीभ्यामप्यर्चितावङ्घ्री यस्य स इति । गिरित्रपद ब्रह्मादीनामप्यु-पलक्षणम् । तथाभूतत्वे हेतुमाहः— पुराणपुरुष इति । सर्वकारणभूतः पुरुषोत्तम इत्यर्थ. । 'तर्हि कथमस्मदादिवत्प्रतीयते ?' तत्राहुः— नृलिङ्गेन मनुष्यनाट्येन गूढः आच्छादितैश्वर्य इत्यर्थः । 'तामसानामाभीराणामावासत्वे व्रजस्योत्कर्षः, राजसाद्यावासत्वेऽपि मथुराया अपकर्षः' इत्याश्चर्य

वल्गत. शत्रुमभित कृष्णस्य वदनाम्बुजम् ॥ वीक्ष्यतां श्रमवार्युप्तं पद्मकोशमिवाम्बुभि' ॥ ११ ॥ कि न पश्यत रामस्य मुखमाताम्रलोचनम् ॥ मुष्टिकं प्रति सामर्ष हाससंरम्भशोभितम् ॥ १२ ॥ पुण्या बत व्रजभुवो यदयं नृलिङ्गगूढ. पुराणपुरुषो वनचित्रमाल्य ॥ गा पालयन् सहबल' क्वणयश्च वेणु विक्री-डयाऽञ्चति गिरित्ररमार्चिताङ्घ्रि ॥ १३ ॥ गोप्यस्तप. किमचरन् यदमुष्य रूप लावण्यसारमसमोर्ध्वमन-न्यसिद्धम् ॥ दृग्भि' पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशस श्रिय ऐश्वरस्य ॥ १४ ॥

द्योतयन्ति— बतेति ॥ १३ ॥ 'अहो अल्पपुण्या वयम्, यतोऽस्माभिरनवसरेऽभिभूयमानो दृष्ट गोप्यस्तु बहुपुण्या । इत्याहुः— गोप्य इति ।" गोप्य' कि तपः समाचरन् ? ताभिराचरितं तपोऽनिर्वचनीयमित्यर्थ. । कुतः यस्मात् अमुष्य श्रीकृष्णस्य रूप दृग्भिर्नेत्रैः पिबन्ति अत्यासक्त्या पश्य-तीन्त्यन्वः । 'एतद्रूपदर्शनेन कथ तासा तपोऽनुमानम् ?' इत्यपेक्षाया तदनुमापकत्वे रूपस्यालौकिकत्व हेतु दर्शयन् विशिनष्टि— दुराप अकृतपुण्याना द्रष्टुमपि दुर्लभमित्यर्थः । तत्र हेतु.— असमोर्ध्वमिति । नास्ति सममूर्ध्वमधिक च यस्य तत् । तत्रापि अनुसव सर्वदा अभिनवम् । यशस श्रियः लक्ष्म्या ईश्वरस्येति भावप्रधानो निर्देश ऐश्वर्यस्य च एकान्तधाम अव्यभिचारिस्थानम् । कि बहुना ? लावण्यस्य सौन्दर्यस्य सारम् । तत्र हेतुः— अनन्यसिद्ध स्वेच्छया गृहीतम्, नतु कर्माधीनमिति ॥ १४ ॥

किञ्च या दोहनादिष्वेन कृष्ण गायन्ति ता व्रजस्त्रियो धन्याः कृतार्था इत्यन्वयः । तत्र तद्गाने हेतुमाहुः—उरुक्रमे बहुलीलाविशिष्टेऽस्मिन् चित्त उरुक्रमचित्त तेन सहैव यान क्षेमादिषु प्रवृत्तिर्यासा ता. । 'उरुक्रम चिन्तयाना' इति पाठान्तरम् । तत्र हेतुमाहुः—अनुरक्तधिय इति । तत्र लिङ्गमाहुः—अश्रुकण्ठय इति, आनन्दाश्रुनिरुद्धकण्ठयः । तत्र दोहन गवाम्, अवहनन व्रीह्यादे, मथन नवनीतादेः, उपलेपो गृहाणाम्, प्रेङ्खेङ्खन दोलान्दोलनम्, अर्भरुदित रुददर्भकसान्त्वनम्, उक्षण सेचन, गृहसम्मार्जनम् ॥ १५ ॥ अपि च प्रातरिति । या अबला. गोभिः सह प्रातर्व्रजान्निर्गच्छतः साय व्रजमाविशतश्च वेणु क्वणयतोऽस्य वेणु रवमाकर्ण्य गृहात्तूर्ण निर्गत्य पथि तस्य सदयावलोको यस्मिस्तत्स्मितयुक्तं मुख पश्यन्ति ता भूरिपुण्या इत्यन्वयः ॥ १६ ॥ हे भरतर्षभ ! एव स्त्रीषु प्रभाषमाणासु सतीषु योगेश्वरो हरिः भक्तदुःखहर्ता भगवान् कृष्णः शत्रुं हन्तु मनश्चक्रे इत्यन्वय ॥ १७ ॥

**या दोहनेऽवहनने मथनोपलेपप्रेङ्खेङ्खनार्भरुदितोक्षणमार्जनादौ ॥ गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठयो धन्या व्रजस्त्रिय उरुक्रमचित्तयाना ॥ १५ ॥ प्रातर्व्रजाद्व्रजत आविशतश्च सायं गोभि समं क्वणयतोऽस्य निशम्य वेणुम् ॥ निर्गम्य तूर्णमबला· पथि भूरिपुण्याः पश्यन्ति सस्मितमुख सदयावलोकम् ॥ १६ ॥ एव प्रभाषमाणासु स्त्रीषु योगेश्वरो हरि· ॥ शत्रु हन्तु मनश्चक्रे भगवान् भरतर्षभ ॥ १७ ॥ सभया स्त्रीगिर· श्रुत्वा पुत्रस्नेहशुचातुरौ ॥ पितरावन्वतप्येतां पुत्रयोरबुधौ बलम् ॥ १८ ॥ तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ ॥ युयुधाते यथाऽन्योन्य तथैव बलमुष्टिकौ ॥ १९ ॥ भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरै ॥ चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह ॥ २० ॥ स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ ॥ भगवन्त वासुदेव क्रुद्धो वक्षस्यबाधत ॥ २१ ॥**

तदा पितरौ देवकीवसुदेवौ नन्दवसुदेवौ वा पुत्रयो रामकृष्णयोर्बलमजानन्तौ सभयाः स्त्रीणां गिर. श्रुत्वा पुत्रयोः स्नेहेन या शुक् तया आकुलौ आतुरौ अनुतप्येताम् ॥ १८ ॥ एव यथा अच्युतेतरौ कृष्णचाणूरौ नानाविधैः परिभ्रामणादिभिस्तैस्तैर्नियुद्धविधिभिर्युयुधाते, तथैव बलमुष्टिकावपि युयुधाते ॥ १९ ॥ वज्रस्य निष्पेषस्तीव्रप्रहारस्तद्वन्निष्ठुरैर्भगवतो गात्राणामरातिजान्वादिना निष्पातै. प्रहारैर्भज्यमानाङ्गश्चाणूरो मुहुर्ग्लानिमवाप । 'भक्ताना कोमलाङ्गत्वेन प्रतीयमानस्यापि स्वविमुखान्प्रति वज्राङ्गत्वम्' इत्याश्चर्य सूचयति—हेति ॥ २० ॥ श्येनस्येव वेगो यस्य स क्रुद्धश्चाणूर उभौ करौ मुष्टीकृत्य उत्पत्य उत्प्लुत्य भगवन्तमपि वासुदेव वसुदेवनन्दनं मत्वा वक्षस्यबाधत अताडयदित्यर्थः ॥ २१ ॥

एवं तेन ताडने कृतेऽपि तत्प्रहारेण भगवान्नाचलत् ईषदपि नाकम्पत। तत्र दृष्टान्तमाह—यथा मालया हतो द्विपो हस्ती न प्रचलति तथेति। किंतु तरसा झटिति चाणूरं बाह्वोर्निगृह्य गृहीत्वा बहुशो भ्रामयन् हरिः ॥ २२ ॥ तरसा भ्रामणवेगेनैव क्षीण जीवित यस्य त भूपृष्ठे पोथयामास वेगेन पातयामास। स च तेन पातितश्चाणूरो विस्रस्ता विक्षिप्ता आकल्पानि आभरणानि केशा स्रजश्च यस्य तथाभूतः सन्नपतत्। तत्र दृष्टान्तमाह—इन्द्रध्वज इवेति। इन्द्रध्वजो नाम गौडेषु प्रसिद्धः कस्मिंश्चिदुत्सवे महान् स्तम्भो ध्वजादिभिरलङ्कृतः पुरुषाकृती रज्ज्वाकृष्ट उच्छ्रीयते स यथा रज्जुशैथिल्येन पतति तथा कर्मबन्धक्षयात्सोऽपि पतित इत्यर्थः ॥ २३ ॥ तथैव मुष्टिकोऽपि तावत् पूर्वं स्वमुष्टिनाऽभिहतेन ताडितेन बलिना बलभद्रेण कर्त्रा तलेनैव साधनेनाभिहत, अतो भृशमत्यन्त अर्दित. पीडितः, अतः प्रवेपित' कम्पित' मुखतो रुधिरमुद्वमन्नुद्गिरन् व्यसुः गतप्राणो वातेन प्रचण्डवातेन मारु-

नाचलत्तत्प्रहारेण मालाहत इव द्विपः॥ बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन् हरि· ॥ २२ ॥
भूपृष्ठे पोथयामास तरसा क्षीणजीवितम् ॥ विस्रस्ताकल्पकेशस्रगिन्द्रध्वज इवापतत् ॥ २३ ॥
तथैव मुष्टिक· पूर्वं स्वमुष्ट्याऽभिहतेन वै ॥ बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥ २४ ॥
प्रवेपित· स रुधिरमुद्वमन् मुखतोऽर्दित· ॥ व्यसु' पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः ॥ २५ ॥
तत कूटमनुप्राप्तो राम· प्रहरतां वर· ॥ अवधीलीलया राजन् सावज्ञं वाममुष्टिना ॥ २६ ॥
तर्ह्येव हि शल' कृष्णपदापहतशीर्षक ॥ द्विधा विदीर्णस्तोशलक उभावपि निपेततुः ॥ २७ ॥
चाणूरे मुष्टिके कूटे शले तोशलके हते ॥ शेषा· प्रदुद्रुवुर्मल्ला सर्वे प्राणपरीप्सवः ॥ २८ ॥
गोपान् वयस्यानाकृष्य तै· संसृज्य विजह्रतु ॥ वाद्यमानेषु तूर्येषु वल्गन्तौ रुतनूपुरौ ॥ २९ ॥

तेन आहत उन्मूलितोऽङ्घ्रिपो वृक्ष इवउर्व्युपस्थे भूपृष्ठे पपातेति द्वयोरन्वयः ॥ २४ ॥ २५ ॥ ततः अनु अनन्तरमेव प्रहरता योद्धॄणा वरः श्रेष्ठः बलवान् रामः कूटाख्य मल्ल सावज्ञ सावहेलन यथा स्यात्तथा लीलयाऽनायासेनैव वाममुष्टिनाऽवधीत् ॥ २६ ॥ तर्ह्येव हि प्रसिद्धतया शलः कृष्णस्य प्रपदा पादाग्रेण हतशीर्षको जातः, तोशलकश्च द्विधा विदीर्णो जात, एवमुभावपि मृतौ भूमौ निपेततुः॥ २७॥ एवं चाणूरादिषु हतेषु सत्सु प्राणपरीप्सवः जीवितुमिच्छवः शेषाः अवशिष्टा. सर्वे मल्ला. प्रदुद्रुवु. पलायितवन्तः ॥ २८ ॥ ततश्च रामकृष्णौ वयस्यान् सखीन् गोपान् हस्ते गृहीत्वा आकृष्य तै. सह संसृत्य सङ्गम्य वल्गन्तौ आलिङ्गनादि कुर्वन्तौ विजह्रतु युद्धादि कृतवन्तौ। 'ननु मल्लाना निहतत्वात्तैः सह युद्धस्य किं प्रयोजनम्' इत्याकाङ्क्षाया 'युद्धोत्साहजनकवाद्यविशेषाणा विद्यमानत्वात्तत्रत्याना द्रष्टृ जनाना प्रहर्षार्थम्' इत्याशयेनाह—तूर्येषु वाद्यमानेषु सत्सु रुते शब्दयुक्ते नूपुरे ययोस्तावििति ॥ २९ ॥

तदा च कस विना विप्रप्रमुखाः सर्वे साधुजनाः साधु साध्विति वदन्तः रामकृष्णयोर्युद्धात्मकेन कर्मणा प्रजहृषुरित्यन्वयः ॥ ३० ॥ एव मल्लवर्येषु चाणूरादिषु हतेषु अवशिष्टेषु विद्रुतेषु पलायमानेषु च सत्सु भोजराट् कंसः स्वतूर्याणि स्वेनाज्ञप्तानि तूर्यादिवाद्यानि न्यवारयत् । भृत्यान् प्रति इदं वक्ष्यमाण वाक्य च ह स्फुटमुवाच ॥ ३१ ॥ तदुक्तिमाह— निःसारयतेति । यद्यपि दुर्वृत्तत्वादेतौ वधयोग्यौ, तथापि वसुदेवात्मजत्वेन भागिनेयत्वाज्जीवन्तावेव पुरतः निःसारयत । गोपाना धन हरत । नन्दाधीनत्वान्नन्द बध्नीत । तत्र हेतुमाह— दुर्मतिमिति । ' मम वैरिणोरेतयो. सङ्गोप्य स्वगृहस्थापनादुर्मतित्वम् ' इति ज्ञेयम् ॥ ३२ ॥ वसुदेवश्च हन्यताम् । तत्र हेतुमाह— असत्तम. । तास्कर्येण पुत्रयोरन्यत्र स्थापनात् दुष्ट इत्यर्थ· ॥ ननु ' एव राजविरोध कथं कृतवान् ? ' तत्राह— दुर्मेधा इति । दुर्बुद्धित्वादित्यर्थः । सानुगः सभृत्यादिवर्गः उग्रसेनश्च हन्यताम् । ' पितृत्वेनापि

जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयो· ॥ ऋते कसं विप्रमुख्या· साधव· साधु साध्विति ॥ ३० ॥
हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् ॥ न्यवारयत् स्वतूर्याणि वाक्य चेदमुवाच ह ॥ ३१ ॥ निः
सारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् ॥ धनं हरत गोपानां नन्द बध्नीत दुर्मतिम् ॥ ३२ ॥ वसुदेवस्तु
दुर्मेधा हन्यतामाश्वसत्त· ॥ उग्रसेनः पिता चापि सानुग· परपक्षग· ॥ ३३ ॥ एव विकत्थमाने वै कसे
प्रकुपितोऽव्ययः ॥ लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्गमारुहत् ॥ ३४ ॥ तमाविशन्तमालोक्य मृत्युमात्मन
आसनात् ॥ मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ॥ ३५ ॥ तं खड्गपाणिं विचरन्तमाशु श्येनं
यथा दक्षिणसव्यमम्बरे ॥ समग्रहीद्दुर्विषहोग्रतेजा यथोरग तार्क्ष्यसुत· प्रसह्य ॥ ३६ ॥

सङ्कोचो न कार्य ' इत्याह— नः पिताऽपीति । तत्र हेतुमाह— परेषा शत्रूणा पक्ष गच्छतीति तथा स इति ॥ ३३ ॥ एव कसे विकत्थमाने सत्येव प्रकुपित· सन्नव्ययः अप्रक्षीणबल श्रीकृष्णो लघिम्ना सिद्ध्या उपत्य तरसा झटिति उत्तुङ्गमपि कंसमञ्चमारुहत् ॥ ३४ ॥ तमाविशन्त स्वमञ्चमारुहन्त श्रीकृष्णमात्मनो मृत्युमालोक्य मनस्वी धीर· कंसः सहसा त्वरया आसनादुत्थाय त हन्तुमसिचर्मणी जगृहे ॥ ३५ ॥ दुर्विषह अविषह्य उग्र तेजो यस्य स भगवान् खड्गः पाणौ यस्य त दक्षिणतो वामतश्च अम्बरे ऊर्ध्वं च श्येनमिव विचरन्त कसमाशु झटिति समग्रहीत् । तत्र दृष्टान्तमाह— तार्क्ष्यसुतो गरुडः प्रसह्य बलादुरग सर्पं यथा गृह्णाति तद्वदिति ॥ ३६ ॥

ततो ग्रहणादेव चलत् विक्षिप्त किरीट यस्य त कस केशेषु प्रगृह्य दृढ गृहीत्वा मञ्चादुङ्गोपरि रङ्गभूमौ निपात्य तस्योपरि स्वयं पपातेत्यन्वयः । 'किमर्थं तदुपरि पपात ?' इत्यपेक्षाया 'विश्वाश्रयत्वेन गुरुतरत्वात्तन्मारणार्थम्' इति सूचयन्नाह– विश्वाश्रय इति । विश्वाश्रयत्वमेव स्पष्टयति– अब्जनाभ इति । विश्वात्मकमब्जं नाभौ यस्य सः । ननु 'मारण तु शस्त्रादिना प्रसिद्धम्, तद्धित्वा भगवान् किमित्यमुमुपाय कल्पितवान् ?' तत्राह– आत्मतन्त्र इति ॥ ३७ ॥ ततो जगतः प्राणिसमूहस्य पश्यतः सत' स्वभक्तद्रोहस्य फलं प्रदर्शयंस्त सम्परेत मृतमपि कस भूमौ विचकर्ष । तत्रायासमाशङ्क्य दृष्टान्तेन वारयति–हरिः सिंहो यथा मृतमिभ हस्तिन विकर्षेत्तथेति । 'राज्ञो मरणात्तत्परिकरभूताना रोदन तव विदितमेव' इति सूचयन् सम्बोधयति– हे नरेन्द्रेति । तदा तत्रत्यै राजकीयैः सर्वजनैरुदीरित उच्चारितः सुमहान् हाहेति शब्दोऽभूत् ॥ ३८ ॥ यत' स कसो नित्यदा

प्रगृह्य केशेषु चलत्किरीटं निपात्य रङ्गोपरि तुङ्गमञ्चात् ॥ तस्योपरिष्टात् स्वयमब्जनाभ· पपात विश्वाश्रय आत्मतन्त्र· ॥ ३७ ॥ त सम्परेतं विचकर्ष भूमौ हरिर्यथेभ जगतो विपश्यत' ॥ हाहेति शब्द' सुमहांस्तदाऽभूदुदीरित सर्वजनैर्नरेन्द्र ॥ ३८ ॥ स नित्यदोद्विग्नधिया तमीश्वरं पिबन् वदन् वा विचरन् स्वपन् श्वसन् ॥ ददर्श चक्रायुधमग्रतो यतस्तदेव रूप दुरवापमाप ॥ ३९ ॥ तस्यानुजा भ्रातरोऽष्टौ कङ्कन्यग्रोधकादय· ॥ अभ्यधावन्नभिक्रुद्धा भ्रातुर्निर्वेशकारिण' ॥ ४० ॥ तथाऽतिरभसांस्तांस्तु सयत्तान् रोहिणीसुत ॥ अहन् परिघमुद्यम्य पशूनिव मृगाधिप· ॥ ४१ ॥ नेदुर्दुन्दुभयो व्योम्नि ब्रह्मेशाद्या विभूतय· ॥ पुष्पै' किरन्तस्त प्रीता' शशसुर्ननृतु स्त्रिय ॥ ४२ ॥ तेषां स्त्रियो महाराज सुहृन्मरणदुःखिता· ॥ तत्राभीयुर्विनिघ्नन्त्य' शीर्षाण्यश्रुविलोचना' ॥ ४३ ॥

उद्विग्नया भीतया धिया चक्रायुध तमीश्वर श्रीकृष्णमेव पानभोजनाद्यवस्थास्वप्यग्रतः ददर्श, ततो योगिभिरपि दुरवाप तदेव रूपमवाप । सारूप्यलक्षणा मुक्ति प्राप्तवानित्यर्थः ॥ ३९ ॥ ततस्तस्य कसस्य भ्रातर कङ्कादयोऽष्टौ भ्रातुर्मृतस्य कसस्य निर्वेशमानृण्य तत्कारिणः तत्कर्तुमतिक्रुद्धा· सन्त· अभ्यधावन् हन्तु सम्मुखमागता· ॥ ४० ॥ अतिरभसो वेगो येषा तान् सयत्तान् उद्युक्तान् रोहिणीसुत· राम' परिघमुद्धृत्य तथैवानायासेन अहन् जघान । तत्र दृष्टान्तमाह– मृगाधिपः सिंहः पशूनिवेति ॥ ४१ ॥ तदा व्योम्नि देवैर्वादिता दुन्दुभयो नेदुः । प्रीता ब्रह्मरुद्रादयो भगवद्विभूतयः पुष्पैः किरन्तः शशसुः तष्टुवुः । स्त्रियो अप्सरसश्च ननृतु· ॥ ४२ ॥ हे महाराज ! तेषा कंसकङ्कादीना स्त्रियः सुहृदा स्वभर्तॄणा मरणेन हेतुना दुखिताः अतः स्वाशिरासि विनिघ्नन्त्यः अश्रूणि लोचनयोर्यासा तास्तत्र भर्तृसन्निधौ अभीयु· आजग्मु' ॥ ४३ ॥

वीरशय्यायां युद्धभूमौ शयानान् स्वभर्तृनालिङ्ग्य शोचती. शोचन्त्यो मुहुः शुचोऽश्रूणि विसृजन्त्यश्च ता नार्यः सुस्वर यथा भवति तथा विलेपुः ॥४४॥ तासां विलापमेव दर्शयति—हा नाथेति। आत्मानं शोचन्ति—हेति नाथेतीत्यादीनि विलापे प्रेमसम्बोधनानि। धर्मज्ञेत्यादीनि तु सुखप्रदत्वेन स्वभ्रान्त्यैव वैपरीत्येनोक्तानि। निहतेन त्वया सहैव सगृहाः प्रजाश्च ते त्वदीया वयमपि निहता निहतप्रायाः ॥ ४५ ॥ हे पुरुषर्षभ ' पत्या स्वामिना त्वया विरहितेयं पुरी वयमिव न शोभते। तत्र हेतुमाहु —निवृत्ता उत्सवा' प्राणिना हासादिरूपा मङ्गलानि सुखानि च यस्या तथाभूता। इदमपि स्वभ्रान्त्यैवोक्तम् ॥ ४६ ॥ अथ परमार्थदृष्ट्याऽऽहु'—अनागसामिति। तुशब्द अप्यर्थे। भो भर्तः ' अनागसा निरपराधानामपि भूतानामुल्बण दु'सहं द्रोह त्व कृतवान्, तेन कारणेनेमा दशा नीतो मृत्यु प्राप्तः। 'तन्नाश्चर्यम' इत्याहुः—भूतानि द्रुह्यतीति तथा स को वा श सुख लभेत ? किंतु तस्य दु खमेव युक्तमित्याशयः'

शयानान् वीरशय्यायां पतीनालिङ्ग्य शोचती' ॥ विलेपु' सुस्वर नार्यो विसृजन्त्यो मुहु शुच ॥ ४४ ॥
हा नाथ प्रिय धर्मज्ञ करुणानाथ वत्सल ॥ त्वया हतेन निहता वय ते सगृहप्रजा' ॥ ४५ ॥
त्वया विरहिता पत्या पुरीय पुरुषर्षभ ॥ न शोभते वयमिव निवृत्तोत्सवमङ्गला ॥ ४६ ॥
अनागसां त्वं भूतानां कृतवान् द्रोहमुल्बणम् ॥ तेनेमां भो दशां नीतो भूतध्रुको लभेत शम् ॥ ४७ ॥
सर्वेषामिह भूतानामेष हि प्रभवाप्ययः ॥ गोप्ता च तदवध्यायी न क्वचित् सुखमेधते ॥ ४८ ॥

॥ श्रीशुक उवाच ॥

राजयोषित आश्वास्य भगवॉल्लोकभावन ॥ यामाहुर्लौकिकीं संस्थां हतानां समकारयत् ॥ ४९ ॥
मातर पितरं चैव मोचयित्वाऽथ बन्धनात् ॥ कृष्णरामौ ववन्दाते शिरसाऽऽस्पृश्य पादयो ॥ ५० ॥

॥ ४७ ॥ किंच एष श्रीकृष्ण एव सर्वेषा भूताना प्रभव' प्रभवन्त्यस्मादिति प्रभवः स्रष्टा, तथा अपियन्ति लीयतेऽस्मिन्नित्यप्ययः सहर्ता, स च स च तथा गोप्ता रक्षिता च, अतः तदवध्यायी तस्मिन् विषये अवध्यानमपमान कर्तु शील यस्य स क्वचिदपि देशे काले च सुख यथा स्यात्तथा नैधते न वर्धते, किंतु दुःखमेवानुभवन्नश्यति। तथाच युष्माक तदपमानकर्तृत्वान्मरणादि जात तन्नाश्चर्यमित्याशय' ॥ ४८ ॥ इत्थं शोचतीस्ता राजयोषितो भगवान् सान्त्वयित्वा हताना लौकिकीं परलोकसम्बन्धिनीं संस्था दाहादिक्रिया या मन्वादय आहुस्ता समकारयत् । तत्र हेतुमाह—लोकभावन. लोकमर्यादापालक इति ॥ ४९ ॥ मातर देवकीं, पितर वसुदेव च। स्पष्टमन्यत् ॥ ५० ॥

लोकमर्यादासरक्षणार्थं कृत संवन्दन याभ्या तौ पुत्रौ कसवधादिप्रभावेण जगदीश्वरौ विज्ञाय 'ईश्वरालिङ्गन कथ कर्तव्यम्' इति शङ्कितौ न सस्वजाते इत्यन्वयः ॥ ५१ ॥ इति श्रीवल्लभाचार्य—वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने ॥ चतुश्चत्वारिंशकोऽगात् कंसघातानिरूपकः ॥ ३ ॥ ॥ छ ॥ ॥ पञ्चचत्वारिशकेऽथ कृष्णेन साग्रजेन वै ॥ देवकीवसुदेवादिसान्त्वन विनिरूप्यते ॥ १ ॥ उपलब्धः विज्ञात. अर्थः निरतिशयपुरुषार्थ· स्वयाथात्म्य याभ्या तथाभूतौ पितरौ विदित्वा पुरुषोत्तमः श्रीकृष्णः मा भूत् "मयि प्रसन्ने सति मद्विषयक ज्ञान न दुर्लभम्, किंतु मयि पुत्रबुद्ध्या मल्लीलानुभवानन्द एव । मज्ज्ञाने स्थिरे सति तु मनुष्यनाट्यलीलापि न सिद्ध्येत्, अत इदानीमेव ज्ञान मा भूत्" इति विचार कृत्वा निजानन्दमोहिनीं माया ततान

देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ ॥ कृतसवन्दनौ पुत्रौ सस्वजाते न शङ्कितौ ॥ ५१ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे राजसनिरोधनिरूपणप्रकरणे कसादिवधनिरूपण नाम चतुश्चत्वारिंशोऽध्याय ॥ ४४ ॥ ॥ छ ॥ ॥
श्रीशुक उवाच ॥ पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तम· ॥ मा भूदिति निजां मायां ततान जनमोहिनीम् ॥ १ ॥
उवाच पितरावेत्य साग्रजः सात्वतर्षभ· ॥ प्रश्रयावनत· प्रीणन्नम्ब तातेति सादरम् ॥ २ ॥ नास्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि ॥ बाल्यपौगण्डकैशोरा· पुत्राभ्यामभवन् क्वचित् ॥ ३ ॥ न लब्धो दैवहतयोर्वासो नौ भवदन्तिके ॥ यां बाला· पितृगेहस्था विन्दन्ते लालिता मुदम् ॥ ४ ॥

तयोरुपरि मोहनार्थं प्रसारितवानित्यर्थः ॥ १ ॥ ततश्च साग्रजः रामेण सहितः सात्वतर्षभो यादवश्रेष्ठो भगवान् कृष्णः मोहितौ पितरौ प्रत्येत्य आगत्य प्रश्रयेण विनयेनावनतः नम्रः सादर यथा स्यात्तथा हे तात ! हे अम्बेति सम्बोधनेन प्रीणयन् प्रीतिं जनयन्नुवाच ॥ २ ॥ तदुक्तिमेव दर्शयति—नास्मत्त इति सप्तभिः । 'पितृत्वादेतन्नासम्भावितम्' इति सूचयन् सम्बोधयति—तातेति । नित्यमुत्कण्ठितयोस्तदनुभवाकाङ्क्षावतोरपि युवयोरस्मत्त आवयो· पुत्राभ्या पुत्रयोर्बाल्यादयो बाल्याद्यवस्थानुभवसुखानि क्वचित् कदाचिदपि नाभवन् ॥ ३ ॥ 'न केवल युवयोरेव सुखहानिः, किंत्वावयोरपि' इत्याह—नेति । पितृगेहस्था. पितृभ्या लालिता बाला या मुद विन्दन्ते सा भवद्भ्या सकाशादावाभ्या न लब्धेति शेष. । तत्र हेतुमाह—नौ आवाभ्या भवदन्तिके वासो न लब्ध इति । तत्रापि हेतुमाह—दैवहतयोरिति । प्रारब्धहीनाभ्यामित्यर्थः ॥ ४ ॥

एव युवयोरावयोश्च सुखहानिर्जातेत्युक्तम् । अथ 'आवयोस्तु युष्मपरिचर्यालोपेन धर्महानिरपि जाता' इत्याह— सर्वार्थसम्भव इति । सर्वेषा धर्मादीना पुरुषार्थाना सम्भवो यस्मिन् स देहो यत' याभ्या जनित पोषितश्च तयोः पित्रोर्निर्वेश निष्कृतिमानृण्य मर्त्यः शतवर्षेणापिआयुषा तावत्पर्यन्तनिरन्तरपरिचर्ययापि न याति ॥ ५ ॥ तन्मध्ये तु य. आत्मजः पुत्रः कल्पः समर्थ. सन् आत्मना देहेन धनेन च तयोः पित्रोर्वृत्ति अन्नवस्त्रादिजीविका न दद्यात् न कल्पयेत् त प्रेत्य यमलोके यमदूताः स्वस्य तस्यैव मास खादयन्ति । हीति। नात्र सन्देहः कार्य इत्यर्थः ॥ ६ ॥ किञ्च यदि कल्पः समर्थ. सन् मात्रादीन् यथोचितमबिभ्रत् न पुष्णाति स श्वसन् जीवन्नपि मृतप्राय एव ॥ ७ ॥ यस्मादेव तस्माद्वा युवयोरनर्चतोरपूजयतोर्नौ आवयोरेते एकादशवर्षात्मका दिवसाः मोघ व्यर्थमेवातिक्रान्ता गताः । 'तत्रापि न ज्ञानपूर्विकोपेक्षा, किन्तु सामर्थ्याभाव एव हेतु.' इत्याह— अकल्पयोरिति । तत्रापि हेतुमाह— कसान्नित्यमुद्विग्न भीत चेतो ययोस्तयोरिति ॥ ८ ॥ 'यद्यपि पारवश्येनावयोरत्यन्तापराधो नास्ति, तथापि भव-

सर्वार्थसम्भवो देहो जनित' पोषितो यत· ॥ न तयोर्याति निर्वेशं पित्रोर्मर्त्य· शतायुषा ॥ ५ ॥
यस्तयोरात्मज कल्प आत्मना च धनेन च ॥ वृत्तिं न दद्यात्त प्रेत्य स्वमांस खादयन्ति हि ॥ ६ ॥
मातरं पितरं वृद्ध भार्यां साध्वी सुत शिशुम् ॥ गुरु विप्र प्रपन्न·च कल्पोऽबिभ्रच्छ्वसन् मृतः ॥ ७ ॥
तन्नावकल्पयो' कसान्नित्यमुद्विग्नचेतसोः ॥ मोघमेते व्यतिक्रान्ता दिवसा वामनर्चतो' ॥ ८ ॥
तत् क्षन्तुमर्हथस्तात मातर्नौ परतन्त्रयो ॥ अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ॥ ९ ॥

॥ श्रीशुक उवाच ॥

इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा ॥ मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम् ॥ १० ॥
सिञ्चन्तावश्रुधाराभि· स्नेहपाशेन चावृतौ ॥ न किञ्चिदूचतू राजन् बाष्पकण्ठौ विमोहितौ ॥ ११ ॥

त्प्रसादेनैवावयोर्भद्रम्' इति सूचयन् क्षमापयति—तदिति । हे तात ! हे मातः ! दुर्हृदा दुर्बुद्धिना कसेन क्लिष्टयोः परतन्त्रयोर्बन्दिगृहेष्ववरुद्धयोर्वा युवयोः शुश्रूषावसरेऽपि शुश्रूषामकुर्वतोर्नौ आवयोस्तत् त शुश्रूषाभावप्रयुक्तापराध पितृत्वात् क्षन्तुमर्हथ इत्यन्वयः ॥ ९ ॥ इत्येवभूतया हरेर्गिरा मोहितौ देवकीवसुदेवौ अत एव तौ पुत्रौ मत्वा अङ्कमारोप्य परिष्वज्य च मुद प्रापतुः। तद्गिर आवश्यमोहकत्वे हेतुमाह— विश्वात्मन इति। सर्वान्तर्यामिण इत्यर्थः । 'तस्यान्तर्यामित्वे कथं मनुष्यत्वप्रतीति.?' तत्राह— मायामनुष्यस्येति। स्वेच्छयैव मनुष्यनाट्यमङ्गीकृतवत इत्यर्थ ॥ १० ॥ 'जातज्ञानयोरपि पुनर्मोहनम्' इति भगवच्चरितस्याद्भुतत्व सूचयन् सम्बोधयति—राजन्निति। अश्रुधाराभिस्तौ सिञ्चन्तौ किञ्चिदपि नोचतु । तत्र हेतुमाह— बाष्पकण्ठाविति । अश्रुनिरुद्धकण्ठावित्यर्थः ॥ तत्रापि हेतुमाह— स्नेह एव पाशस्तेनावृताविति । चकारो ममतासङ्ग्रहार्थः । स्नेहबन्धनेऽपि हेतुमाह— तन्मायया विमोहिताविति ॥ ११ ॥

भगवान् कृष्ण. पितरावेवमाश्वास्य सान्त्वयित्वा मातामहमुग्रसेन तु यदूना नृपमधिपतिमकरोत । एवकरणे हेतुमाह— देवकीसुत इति ॥ १२ ॥ तमाह च । तदुक्तिमेवाह— हे महाराज ! अस्मान् भृत्यादीन् प्रजाश्च आज्ञप्तुमर्हसि अस्मदधिपतिर्भवितुमर्हसीत्यर्थ. । ननु ' त्वमेव राजा भवितुमर्हसि परमेश्वरत्वात्, न अस्माभिः साधारणैर्यदुभिः ययातिना राज्यान्निराकृतत्वात्, अत एव कसो राज्याद्विनष्ट ' इत्याशङ्क्याह— यया तीति । यद्यपि ययातिशापाद्यदुभिर्नृपासने नासितव्य, तथापि ममाज्ञया राज्यस्थितौ तव न कश्चिद्दोषः ॥१३॥ ननु ' तथाप्यहमसमर्थः कथमधिपतिर्भवितुमर्हामि ? ' इत्यत आह— मयीति । मयि भृत्ये उपासीने त्वा सेवमाने सति विबुधादयोऽप्यवनता' सन्तो भवतो बलि हरन्ति समर्पयिष्यन्ति । भविष्यतोऽपि सन्देहाभावाद्वर्तमानतया निर्देशः । तर्हि अन्ये नराधिपा बलिमर्पयिष्यन्तीति किमुत वक्तव्यम ? मत्प्रभावात् सर्वं भविष्यतीत्यर्थः ॥ १४ ॥ ततश्च कसभयाद्रुतान् पलायितान् यादवादीन् सर्वान् स्वान् स्वकीयान् ज्ञातीन्, सम्बधन् सम्बन्धिनश्च दिग्भ्यः समानाय्येति शेष ॥ १५ ॥ विदेशावासेन कर्शितान्

एवमाश्वास्य पितरौ भगवान् देवकीसुत ॥ मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥ १२ ॥
आह चास्मान् महाराज प्रजाश्चाज्ञप्तुमर्हसि ॥ ययातिशापाद्यदुभिर्नासितव्य नृपासने ॥ १३ ॥
मयि भृत्य उपासीने भवतो विबुधादय ॥ बलि हरन्त्यवनता. किमुतान्ये नराधिपाः ॥ १४ ॥
सर्वान् स्वान् ज्ञातिसम्बन्धान् दिग्भ्यः कंसभयाकुलान् ॥ यदुवृष्ण्यन्धकमधुदाशार्हकुकुरादिकान् ॥ १५ ॥
सभाजितान् समाश्वास्य विदेशावासकर्शितान् ॥ न्यवासयत् स्वगेहेषु वित्तै. सन्तर्प्य विश्वकृत् ॥ १६ ॥
कृष्णसङ्कर्षणभुजैर्गुप्ता लब्धमनोरथा ॥ गृहेषु रेमिरे सिद्धा कृष्णरामगतज्वरा. ॥ १७ ॥
वीक्षन्तोऽहरह प्रीता मुकुन्दवदनाम्बुजम् ॥ नित्यं प्रमुदित श्रीमत् सदयस्मितवीक्षणम् ॥ १८ ॥

समाश्वास्य सान्त्वयित्वा सभाजितान् सम्मानितान् वित्तै सन्तर्प्य स्वगृहेषु न्यवासयदिति द्वयोरन्वय' । ननु ' तृप्तिस्तु यथेष्टबहुधनलाभादेव सम्भवति, तदसङ्ख्याताना तेषा कथ सन्तर्पण कर्तु शक्यम ' इत्याशङ्क्याह— विश्वकृदिति। यो हि सङ्कल्पमात्रेणैव विश्व करोति तस्यैतत्करण किमशक्यमित्याशय. ॥ १६ ॥ कृष्णसङ्कर्षणभुजैर्गुप्ताः शत्रुभ्यो रक्षिता', अत एव ताभ्यामेव गतो निवृत्तः ज्वरः आध्यात्मिकादिः सन्तापो येषा ते, लब्धमनोरथाः आप्तकामाः, अत एव सिद्धाः कृतार्थाः सन्तो यादवा गृहेषु रेमिरे ॥ १७ ॥ तेषा तद्दर्शनानन्द दर्शयति— वीक्षन्त इति । मुकुन्दस्य मोक्षप्रदस्य कृष्णस्य वदनमेव सन्तापनाशकत्वादानन्दजनकत्वाच्च अम्बुज तदहरह' पश्यन्तः प्रीताश्च सन्तो गृहेषु रेमिरे इति पूर्वेणैवान्वयः । परमानन्दजनकत्वमेव सूचयन् विशिनष्टि—नित्य प्रमुदितमिति । श्रीमत् सौन्दर्यातिशययुक्तम्, दयास्मिताभ्या सहिते वीक्षणे यस्मिंस्तत् ॥ १८ ॥

तद्दर्शनफलान्तरमाह—तत्रेति । तत्र मधुपुर्यां मुकुन्दस्य मुखाम्बुजसुधा मुखमाधुर्यं नेत्रैर्भृङ्गैर्मुहुः पिबन्तः प्रवयसो वृद्धा अपि युवान. अतिशयित बल ओजश्च येषा तथा आसन् ॥१९॥ अथ मथुरावासिजनसमाश्वासनानन्तर 'इयमपि भगवतो राजलीला विचित्रा' इति सूचयन् सम्बोधयति—राजेन्द्रेति । हे राजेन्द्र भगवान् कृष्ण सङ्कर्षणश्च नन्द समासाद्य तत्समीपमागत्य परिष्वज्य आलिङ्ग्य इद वक्ष्यमाणमूचतुः। एवमुक्तौ हेतुमाह—देवकीसुत इति । देवक्या अपि मनोरथस्य तेनैव पूरणीयत्वादित्याशयः॥ २० ॥ तदुक्तिमेव दर्शयति— पितरित्यादित्रिभिः श्लोकैः। हे पितः' स्निग्धाभ्यामनुरक्ताभ्यां युवाभ्या भृशमात्मनोऽप्याधिक्येन पोषितौ लालितौ च । 'न चाश्चर्यमेतत्, लोकेपि तथैव प्रसिद्धत्वात्' इत्याहतुः—आत्मनः स्वदेहादपि आत्मजेषु मातापित्रो-रभ्यधिका प्रीतिः । हिशब्दः प्रसिद्धिद्योतकः ॥ २१ ॥ नच 'देवकीवसुदेवौ युवयोः पितृत्वेनेदानीं प्रसिद्धौ, नावाम्' इति मन्तव्यम्। यतः पोषणे रक्षणे

तत्र प्रवयसोऽप्यासन् युवानोऽतिबलौजस ॥ पिबन्तोऽक्षैर्मुकुन्दस्य मुखाम्बुजसुधा मुहु. ॥ १९ ॥
अथ नन्दं समासाद्य भगवान् देवकीसुत ॥ सङ्कर्षणश्च राजेन्द्र परिष्वज्येदमूचतु ॥ २० ॥
पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम् ॥ पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि ॥ २१ ॥
स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत् ॥ शिशून् बन्धुभिरुत्सृष्टानकल्पै पोषरक्षणे ॥ २२ ॥
यात यूय व्रज्र तात वय च स्नेहदु खितान् ॥ ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥ २३ ॥
एवं सान्त्वय्य भगवान्नन्द सव्रजमच्युत ॥ वासोऽलङ्कारकुप्याद्यैरर्हयामास सादरम् ॥ २४ ॥
इत्युक्तस्तौ परिष्वज्य नन्द. प्रणयविह्वलः ॥ पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रज ययौ ॥ २५ ॥

चाकल्पैरसमर्थैर्बन्धुभि. पित्रादिभिरुत्सृष्टास्त्यक्तान् शिशून् अस्मान् यौ यशोदानन्दौ युवा पुत्रवत्पुष्णीता पोषितवन्तौ, तावेव पितरावित्यर्थ । शिशू-निति बहुवचनमन्येपि वसुदेवपुत्रा अन्यगता आसस्तदभिप्रायेण ॥ २२ ॥ 'अस्त्वेवम्, प्रकृते किम्' तत्राहतु.—यातेति । हे तात' यूय सर्वे गोपा व्रजं प्रति यात, वय तत्रत्याना सुहृदा पित्रादीना सुख विधायास्मत्स्नेहेन दु.खितान् वो युष्मान् ज्ञातीन् द्रष्टुमेष्याम इत्यन्वय'। वयमिति बहुवचन गमोद्ध-वाद्यभिप्रायेण ॥ २३ ॥ एवं सव्रज व्रजवासिभिः सहित नन्द भगवान् कृष्णः सान्त्वय्य सादर यथा स्यात्तथा वस्त्रादिभिरर्हयामास । तत्र कुप्यानि सुवर्ण-रजतादिव्यतिरिक्तकास्यादिपात्राणि । 'भगवान्' इत्यनेनैश्वर्यादिमत्त्वेन सान्त्वने सामर्थ्यं सूचितम् । तत्रौपचारिकि भगवत्त्व वारयन्नाह—अच्युत इति । ॥ २४ ॥ इत्येवमुक्तः, अत एव प्रणयेन स्नेहेन विह्वलो नन्दस्तौ रामकृष्णौ परिष्वज्य अश्रुभिर्नेत्रे पूरयन् गोपैः सह व्रजं प्रतिययावित्यन्य ॥ २५॥

अथ अनन्तरं शूरसेनो वसुदेवः पुरोधसा गर्गाचार्येण ब्राह्मणैश्च यथाविधि पुत्रयो रामकृष्णयोर्द्विजसंस्कृतिं द्विजत्वापादकसंस्कारमुपनयनं सम्यगकारयत ॥ २६ ॥ ततश्च विप्रान् सम्पूज्य सुष्ठ्वलङ्कृतेभ्यस्तेभ्यो ब्राह्मणेभ्यो दक्षिणा रुक्मस्य सुवर्णस्य माला आसां सन्तीति तथा सुष्ठ्वलङ्कृता. सवत्साः क्षौममालिनीः क्षौमवस्त्रमालावतीर्गावो गाश्चादात् ॥ २७ ॥ रामकृष्णयोर्जन्मर्क्षे जन्मनक्षत्रे या गावो मनोदत्ता मनसा सङ्कल्पितास्ताश्चानुस्मृत्य विप्रेभ्यो ददौ । ननु ' तदानीं गाव' क्व गता, येन मनसा दत्तवान्, इदानीं च कुत आगता ' इत्याकाङ्क्षायामाह—कसेनेति । तदानीमधर्मतः कसेन हृताः, इदानीं तद्गोष्ठादाच्छिद्य दत्ता इत्यर्थः । स्मृत्वा दाने हेतुं सूचयन्नाह—महामतिरिति ॥ २८ ॥ ततश्च लब्धः संस्कारो उपनयनाख्यो याभ्यां तौ द्विजत्व प्राप्य सुव्रतौ दृढसङ्कल्पौ यदुकुलाचार्याद्गर्गाद्यायत्र व्रत गर्गोपदिष्ट ब्रह्मचर्यमास्थितौ गृहीतवन्तौ ॥ २९ ॥ सर्वज्ञावपि अनन्यासिद्ध गुरूपदेशविना

अथ शूरसुतो राजन् पुत्रयो समकारयत् ॥ पुरोधसा ब्राह्मणैश्च यथावद्द्विजसंस्कृतिम् ॥ २६ ॥
तेभ्योऽदाद्दक्षिणां गावो रुक्ममाला· स्वलङ्कृता· ॥ स्वलङ्कृतेभ्य सम्पूज्य सवत्सा· क्षौममालिनी ॥ २७ ॥
या कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः ॥ ताश्चाददादनुस्मृत्य कसेनाधर्मतो हृता ॥ २८ ॥
ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ ॥ गर्गाद्यदुकुलाचार्याद्गायत्र व्रतमास्थितौ ॥ २९ ॥
प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ ॥ नान्यसिद्धामलज्ञान गूहमानौ नरेहितैः ॥ ३० ॥
अथो गुरुकुले वासमिच्छन्तावुपजग्मतुः ॥ काश्य सान्दीपनिं नाम ह्यवन्तिपुरवासिनम् ॥ ३१ ॥
यथोपसाद्य तौ दान्तौ गुरौ वृत्तिमनिन्दिताम् ॥ ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवाऽऽदृतौ ॥ ३२ ॥

स्वत.सिद्धममलमप्रतिहत ज्ञान नरचेष्टितैर्गूहमानौ प्रच्छादयन्तौ लोकसङ्ग्रहार्थं विद्याग्रहणार्थ गुरुगृहे वासमिच्छन्तौ काश्य काशगोत्रज अवन्तिपुरवासिन सान्दीपन्याख्य गुरु हीति प्रसिद्धतया उपजग्मतुरिति त्रयाणामन्वय. । सर्वज्ञत्वे हेतुमाह—सर्वविद्याना प्रभवौ उत्पादकाविति । तत्रापि हेतुमाह—जगदीश्वराविति ॥ ३० ॥ ३१ ॥ तौ रामकृष्णौ यथावत्तमुपासाद्य प्राप्य दान्तौ जितेन्द्रियौ सन्तौ अनिन्दिता निर्दुष्टा गुरौ वृत्तिं ग्राहयन्तौ अन्यान् शिक्षयन्तौ आदृतौ आदरयुक्तौ देवमिव भक्त्या गुरुमुपेतौ सेवितवन्ताविलर्थ. ।अस्यार्थस्य "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन" इति शास्त्रप्रसिद्धत्व सूचयति—स्मेति ॥ ३२ ॥

शुद्ध छलहीनो भावः स्नेहो यासु ताभिरनुवृत्तिभि. सेवाभिस्तयोस्तुष्टो द्विजवरो गुरुरङ्गैः "अङ्गानि वेदाश्चत्वारो मीमासा न्यायविस्तरः । धर्मशास्त्र पुराण च विद्याश्चैताश्चतुर्दश " "आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्र चतुर्थ च विद्या ह्यष्टादशैव ताः " इति ॥ "छन्द पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयन चक्षुर्निरुक्त श्रोत्रमुच्यते । शिक्षा घ्राण तु वेदस्य मुख व्याकरण स्मृतम् " इत्युक्तलक्षणैः षड्भिरुपनिषद्भिश्च ब्रह्मप्रतिपादकैः सहितान् निखिलान् ऋगादिवेदान् प्रोवाचेत्यन्वयः ॥ ३३ ॥ तथा सरहस्य मन्त्रदेवताज्ञानसहित धनुर्वेदम्, धर्मान् मन्वाद्युक्तधर्मशास्त्राणि, न्यायपथान् न्यायशास्त्राणि, आन्वीक्षिकीं आत्मविद्या साख्ययोगादिरूपाम्, षड्विधा सन्धिविग्रहयानासनद्वैधीभावसमाश्रयरूपा राजनीति च प्रोवाचेत्यन्वयः ॥ ३४ ॥ तयोर्विद्याग्रहणप्रकारमाह— सर्वमिति । हे नृप ! तौ रामकृष्णौ सकृदेकदा निगदमात्रेणैव तद्गुरूपदिष्टं सर्व जगृहतुः सम्यग्गृहीतवन्तौ । तत्र हेतुमाह— सर्वविद्याप्रवर्तकाविति । तत्रापि हेतुमाह— नरवरेषु श्रेष्ठौ पुरुषोत्तमाविति ॥ ३५ ॥ संयतौ वशीकृतदेहेन्द्रियादिसङ्घातौ रामकृष्णौ चतु षष्टिसङ्ख्यायुक्तैरहोरात्रैस्तावतीश्चतु·षष्टीः कला विद्या· सञ्जगृहतुरित्यन्वय· । ताश्च कलाः शैवतन्त्रोक्ता

तयोर्द्विजवरस्तुष्ट· शुद्धभावानुवृत्तिभि ॥ प्रोवाच वेदानखिलान् साङ्गोपनिषदो गुरु· ॥ ३३ ॥
सरहस्य धनुर्वेद धर्मान् न्यायपथांस्तथा ॥ तथा चान्वीक्षिकीं विद्या राजनीति च षड्विधाम् ॥ ३४ ॥
सर्व नरवरश्रेष्ठौ सर्वविद्याप्रवर्त्तकौ ॥ सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप ॥ ३५ ॥
अहोरात्रैश्चतुःषष्ट्या सयतौ तावती· कला· ॥ गुरुदक्षिणयाऽऽचार्य छन्दयामासतुर्नृप ॥ ३६ ॥

लिख्यन्ते—गीत गानविद्या १, वाद्य वादनविद्या २, नृत्यम् ३, नाट्य गीतादि त्रय मिलित्वा यत्तत् ४, आलेख्य पुस्तकादिलेखनप्रकार ५, विशेषकच्छेद्य विशेषका भ्रामकास्तेषा छेद्य खण्डनप्रकारः ६, तण्डुलकुसुमबलिविकाराः तण्डुलाना कुसुमाना च आरात्रिकाद्याकारेण रचनाप्रकारा. ७, पुष्पास्तरण शय्यादौ ८, दशनवसनादिरागा. दशनादिरञ्जनप्रकाराः ९, मणिभूमिकाकर्म मणयो यथा शोभन्ते तादृशतद्भूमिरचनाप्रकार. १० शयनरचन स्पष्टम् ११, उदकवाद्यमुदकघात यथा स्वत एवोदके नानाशब्दा भवन्ति तत्प्रकारः यथा आहतमुदक उपरि गच्छति अधोगच्छति विपरीत च गच्छति १२, चित्रयोगाः चित्रलेखनप्रकारा १३, माल्यग्रथनविकल्पाः माल्यानां पुष्पाणां रचने विविधाः प्रकाराः १४, शेखरापीडयोजन शेखरस्य शिरस· केशबन्धस्य आपीडयोजन पुष्पादिमुकुटरचनाप्रकार· १५, नेपथ्ययोगा नटशालादिनिर्माणप्रकाराः १६, कर्णपत्रभङ्गाः कर्णाभरणपत्राणा भङ्गा अनेकभेदा· १७, सुगन्धयुक्ति· नानाविधसुगन्धोत्पादनप्रकारः १८, भूषणयोजनम् १९, ऐन्द्रजाल मायाप्रदर्शनप्रकारा· २०, कौचुमारयोगाः स्त्रस्मिन्नानारूपव्यञ्जनप्रकाराः २१, हस्तलाघव शैघ्र्ययुक्तेनालक्षितेन हस्तसञ्चारेण तत्तद्वस्तुपरिवर्तनम् २२, चित्रशाकापूपभक्ष्यविकारक्रिया. २३, पानकरसरागा-

सवयोजन पानकेषु रसस्य रागस्य आसवस्य मादकत्वविशेषस्य निर्माणम् २४, सूचीवायकर्म सीवनम् २५, सूत्रक्रीडा सूत्रसञ्चारणेन पुत्तलिकादि-चालनम् २६, वीणाडमरुकवाद्यानि वीणादिवाद्याना रचनाप्रकारः २७, प्रहेलिका कूटवाक्यपरिज्ञानम् २८, प्रतिमाला सर्ववस्तुप्रतिनिधिनिर्माणम् २९, दुर्वाचकयोगाः यद्यद्वक्तु न शक्यते तत्तद्वक्तुमुपायाः ३०, पुस्तकवाचन अतिशीघ्रमविद्यमानानपि वर्णान् योजयित्वा पुस्तकवाचनम् ३१, नाटकाख्यायिकादर्शन नाटकशास्त्रस्य कथाना परिज्ञानं निर्माणम् ३२, काव्यसमस्यापूरण काव्ये अविद्यमानस्य सहसा पूरयितुमशक्यस्य पदस्य झटिति पूरणम् ३३, पट्टिकावेत्रबाणविकल्पाः पट्टिकादीना विविधकल्पना. ३४, तर्ककर्माणि तर्केणैव सर्वपदार्थाना ज्ञान कृतिश्च ३५, तक्षण तक्ष्णा कर्म ३६, वास्तुविद्या गृहनिर्माणप्रकारज्ञानम् ३७, रूप्यरत्नपरीक्षा ३८, धातुवादः स्वर्णादिधातूत्पादनोपाय. ३९, मणिरागज्ञान मणिषु रागनिर्माणज्ञानम् ४०, अकारज्ञान मण्याद्युद्भवभूमिज्ञानम् ४१, वृक्षायुर्वेदयोगाः वृक्षाणा जीवनप्रकारः फले निर्बीजत्वकरण वृक्षान्तरात्फलान्तरोत्पादनमित्यादि ४२, मेष-कुक्कुटलावकयुद्धविधि. ४३, शुकसारिकाप्रलापनम् ४४, उत्सादन मन्त्रादिना परस्य चित्तोद्वेगोत्पादनेन चासत्याऽऽजनप्रकार ४५, केशमार्जन-कौशल ४६, अक्षरमुष्टिकाकथन अक्षराणा वस्त्रादिना आच्छादितानामदृश्याना तथा मुष्टिकास्थितवस्तुना सङ्ख्यायाः स्वरूपस्य च कथनम् ४७, म्लेच्छि-

**द्विजस्तयोस्त महिमानमद्भुतं सलक्ष्य राजन्नतिमानुषी मतिम् ॥ सम्मन्त्र्य पत्न्या स महार्णवे मृत बाल प्रभासे वरयाम्बभूव ह ॥ ३७ ॥**

तकलिविकल्पाः म्लेच्छितविकल्पाः कलिविकल्पाश्च यथा शत्रुर्म्लेच्छितो भवति सर्वैः सह कलि च करोति तथोपाया॰ ४८, देशभाषाज्ञानम् ४९, पुष्पशकटिकानिमित्तज्ञान पुष्पैरेव शकटविमानादिरचनाप्रकारः ५०, यन्त्रमातृकाधारणमातृका यत्रमातृका पूजनार्थ मातृकावर्णैर्यन्त्रनिर्माण सैव धारणमातृका ५१, सम्पाद्य अभेद्यस्यापि हीरकादेर्द्वैधीकरणम् ५२, मानसी काव्यक्रिया मानसस्थितस्यार्थस्य पूरणम् ५३, अभिधानकोशाः तत्तन्नामनिरूपकाः कोशाः प्रसिद्धाः ५४, छन्दोज्ञान कामिन्यादीनामभिप्रायज्ञानम् ५५, क्रियाविकल्पा येषा पदार्थाना लोके य उपायाः प्रसिद्धास्ताननादृत्याप्येकैकस्याः क्रियाया विविधैरुपायैर्निष्पादनप्रकाराः ५६, छलितकयोगाः परवञ्चनोपायाः ५७, वस्त्रगोपनानि तूलसूत्रमयादिवस्त्राणा पट्टवस्त्रादितया प्रदर्शनप्रक्रियाः ५८, द्यूतविशेषा ५९, आकर्षक्रीडा दूरस्थान्यपि क्रीडाद्रव्याणि यत्राकृष्यन्ते स क्रीडाविशेषः ६०, बालक्रीडनकानि तद्रचनाप्रकाराः ६१, वैनायिकाना वैजयिकाना वैय्यासिकाना विद्याना च ज्ञानमिति विद्यात्रयमिति चतुःषष्टिकलाः । ततो हे नृप ' गुरुदक्षिणया गुरवे देयदक्षिणार्थ आचार्य तमेव गुरु छन्दयामासतुः स्वाभीष्ट वरयेति प्रेरितवन्तौ ॥ ३६ ॥ ' आश्चर्यान्तर शृणु ' इत्याशयेन सम्बोधयति—राजन्निति । स द्विज॰ सान्दीपनिस्तयोः

रामकृष्णयोस्तमनायासेनैव सर्वविद्याग्रहणात्मकमद्भुत श्रोतृजनाश्चर्यजनक महिमान तथा अतिमानुषीं मनुष्येष्वसम्भाविता मति च सलक्ष्य 'महापुरुषाविमौ' इति निश्चित्येति शेष· पत्न्या सह सम्मन्त्र्य विचार्य प्रभासे क्षेत्रे महार्णवे निमज्ज्य मृत स्वपुत्र वरयाबभूव दक्षिणारूपेण याचितवानित्यर्थ । 'मृतस्य याञ्चाप्याश्चर्यकर्यैव' इति सूचयन्नाह—हेति ॥ ३७ ॥ 'तथास्त्विति गुरुयाच्ञामङ्गीकृत्य मृतपुत्रप्रदानं कथमङ्गीकृतवन्तौ' इत्याशङ्क्याह—महारथाविति । एतदेव स्पष्टयन्नाह—दुरन्तविक्रमाविति । दुरन्तोऽपारो विक्रमो ययोस्तौ रामकृष्णौ रथमारुह्य प्रभासाख्य तीर्थमासाद्य प्राप्य तत्र वेला समुद्रस्य तीरमुपव्रज्य क्षण निषीदतुः उपविष्टवन्तौ । समुद्रश्च 'परमेश्वराविमौ' इति विदित्वा तयोरर्हणमाहरत् यथावत् पूजन कृतवान् ॥ ३८ ॥ तदा च भगवान् इहस्थाने महता ऊर्मिणा तरङ्गेण योऽसौ बालकस्त्वया ग्रस्त· अन्तर्धापितः सोऽस्मद्गुरुपुत्रः, अत आशु प्रदीयतामिति त समुद्रमाहेत्यन्वयः ।

तथेत्यथाऽऽरुह्य महारथौ रथ प्रभासमासाद्य दुरन्तविक्रमौ ॥ वेलामुपव्रज्य निषीदतु क्षण सिन्धुर्विदित्वाऽर्हणमाहरत्तयो ॥ ३८ ॥ तमाह भगवानाशु गुरुपुत्र· प्रदीयताम् ॥ योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा ॥ ३९ ॥ समुद्र उवाच ॥ नैवाहार्षमह देव दैत्य· पञ्चजनो महान् ॥ अन्तर्जलचर· कृष्ण शङ्खरूपधरोऽसुर· ॥ ४० ॥ आस्ते तेनाहृतो नून तच्छ्रुत्वा सत्वर प्रभु· ॥ जलमाविश्य त हत्वा नापश्यदुदरेऽर्भकम् ॥ ४१ ॥ तदङ्गप्रभव शङ्खमादाय रथमागमत् ॥ ततः सयमनी नाम यमस्य दयितां पुरीम् ॥ ४२ ॥

॥३९॥ एवमुक्त· समुद्र· प्राह—नैवेति ।'तव तु सर्व विदितमेवास्ति, कि मया विज्ञापनीयम्' इत्याशयेन सम्बोधयति—हे देव! हे कृष्ण! त द्विजपुत्रमहं नैवाहार्ष नापहृतवान्, किंतु अन्तर्जलचरः जलान्तर्वर्ती पञ्चजनाख्यो दैत्य आस्ते तेन तव गुरुपुत्र आहृतः नूनम्, अत्र सन्देहो नास्ति । स च महान् अस्मदसाध्य इत्यर्थः । 'स च केन रूपेण वर्तते ?' तत्राह—असुरोऽपि शङ्खरूपधर इति तत्सिन्धुवचन श्रुत्वा प्रभुः समर्थः श्रीकृष्णः सत्वर शीघ्रमेव जलमाविश्य तं दैत्य हत्वा तस्योदरे अर्भकं बालकं नापश्यत् ॥ ४० ॥ ४१ ॥ तस्य पञ्चजनस्याङ्गाज्जात पाञ्चजन्याख्य शङ्खमादाय रथ प्रत्यागमत् ततश्च सहलायुधः बलभद्रेण सहितो जनार्दनः श्रीकृष्णो यमस्य दयिता प्रिया सयमनीं नाम पुरीं गत्वा शङ्ख पाञ्चजन्य प्रदध्मौ ध्वनयामास । तदा च

प्रजाना शास्त्रमयार्दातिलङ्घिना सयमनः शास्ता यमः शङ्खनिर्ह्राद शङ्खध्वनिमाकर्ण्य श्रुत्वा आगत्य भक्त्योपबृहिता युक्ता तयोर्महतीं सपर्यां पूजा चक्रे। ॥ ४२ ॥ ४३ ॥ सर्वेषा भूताना आशया हृदयानि आलयानि यस्य तं सर्वान्तर्यामिण कृष्णमवनत. सन्नुवाच । तदुक्तिमेवाह–लीलामनुष्य लीलार्थं परिगृहीतमनुष्यविग्रह, वस्तुतस्तु हे विष्णो ! युवयोः कि कार्यं वय करवाम ? ॥ ४४ ॥ इत्युक्तो भगवानाह–गुरुपुत्रमिति । उत्साहार्थ तन्महत्त्वेन सम्बोधयति–हे महाराज ! इह त्वत्समीपे त्वद्भृत्यैरानीत मम गुरुपुत्रमानयस्वेत्यन्वयः। तमानीय मह्य समर्पयेत्यर्थः । 'अत्रानयने तवापराधो नास्ति' इति सूचयन्नाह–निजकर्मनिबन्धनमिति । तस्य कर्म चैतादृशम्, येनात्रागत इत्याशय.। 'तर्हि मर्यादामुल्लङ्घ्य कथ समर्पणीय' इत्याशङ्क्याह–मच्छासनपुरस्कृत इति। मदाज्ञया तत्समर्पणे न तव कश्चिद्दोष इत्याशय. ॥ ४५ ॥ तथेत्यङ्गीकृत्य तेन यमेनोपानीत गुरुपुत्रमादायागत्य

गत्वा जनार्दन· शङ्ख प्रदध्मौ सहलायुध· ॥ शङ्खनिर्ह्रादमाकर्ण्य प्रजासयमनो यमः तयो सपर्यां महती चक्रे भक्त्युपबृहिताम् ॥ ४३ ॥ उवाचावनतः कृष्ण सर्वभूताशयालयम् ॥ लीलामनुष्य हे विष्णो युवयो· करवाम किम् ॥ ४४ ॥ श्रीभगवानुवाच ॥ गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् ॥ आनयस्व महाराज मच्छासनपुरस्कृत ॥ ४५ ॥ तथेति तेनोपानीत गुरुपुत्र यदूत्तमौ ॥ दत्त्वा स्वगुरवे भूयो वृणीष्वेति तमूचतु ॥ ४६ ॥ गुरुरुवाच ॥ सम्यक् सम्पादितो वत्स भवद्भ्यां गुरुनिष्क्रय· ॥ को नु युष्मद्विधगुरो· कामानामवशिष्यते ॥ ४७ ॥ गच्छतं स्वगृह वीरौ कीर्तिर्वामस्तु पावनी ॥ छन्दास्ययातयामानि भवन्त्विह परत्र च ॥ ४८ ॥ गुरुणैवमनुज्ञातौ रथेनानिलरहसा ॥ आयातौ स्वपुर तात पर्जन्यनिनदेन वै ॥ ४९ ॥

यदूत्तमौ रामकृष्णौ स्वगुरवे दत्त्वा पुनर्वरान्तर वृणीष्वेति तमूचतु ॥ ४६ ॥ एवमुक्तो गुरुराह–सम्यगिति । स्नेहेन सम्बोधयति–वत्सेति । मुख्यतया कृष्णस्यैव सम्बोधनम् । भवद्भ्या गुरुनिष्क्रयः गुरुदक्षिणा सम्यक् सम्पादिता, अतो युष्मद्विधयोर्गुरोर्मम कामाना मध्ये को नु कामोऽवशिष्यते ? न कोऽपि। अतो न वरान्तरमपेक्षितम् ॥ ४७ ॥ हे वीरौ ! स्वगृहं गच्छतम् । वा युवयो कीर्ति पावनी श्रोत्रादिजनपावनकर्यस्तु, तथेह परत्र च युवयोरधीतानि छन्दासि अयातयामानि अविस्मृतानि भवन्तु ॥ ४८ ॥ राज्ञि स्वस्नेह सूचयन् सम्बोधयति–तातेति । गुरुणैवमनुज्ञातौ रामकृष्णौ अनिलवद्रहो वेगो यस्य तेन, तथा पर्जन्यो मेघस्तद्वन्निनदो यस्य तेन रथेन वै प्रसिद्धतया स्वपुर प्रत्यायातौ आजग्मतु· ॥ ४९ ॥

बहून्यहान्यपश्यन्त्यस्तदा रामजनार्दनौ दृष्ट्वा सर्वाः प्रजाः समनन्दन् परमानन्दयुक्ता जाताः । तत्र दृष्टान्तमाह— नष्टेति । नष्टमदर्शन गत तत् पुनर्लब्ध दृष्ट धन यैस्ते यथा परमानन्दयुक्ता भवन्ति तद्वदित्यर्थः ॥ ५० ॥ इति श्रीवल्लभाचार्य-वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधिराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने । पञ्चचत्वारिंशकोऽगाद्वसुदेवादिबोधकः ॥ ३ ॥ ॥ छ ॥ ॥ कृष्णेन प्रेषितश्चक्रे यशोदानन्दसान्त्वनम् ॥ उद्धवो विद्ययेति षट्चत्वारिंशे निरूप्यते ॥ १ ॥ पूर्वाध्याये 'ज्ञातीन् वो द्रष्टुमेष्याम' इति भगवता नन्द प्रत्युक्त तत्र अत्रत्यस्यापि कार्यस्यावश्यकत्वात्तदुपेक्ष्य गमनं न सम्भवति, अतः कश्चित् प्रेषणीयः, तत्रापि गोपीना सान्त्वनमतिरहस्य सन्मन्त्रिसाध्यम्, तादृशश्चोद्धव इति त विशिनष्टि— वृष्णीनामिति । श्रीकृष्णस्य

समनन्दन् प्रजा· सर्वा दृष्ट्वा रामजनार्दनौ ॥ अपश्यन्त्यो बह्वहानि नष्टलब्धधना इव ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे गुरुपुत्रानयनं नाम पञ्चचत्वारिंशोऽध्याय· ॥ ४५ ॥

॥ श्रीशुक उवाच ॥

वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयित सखा ॥ शिष्यो बृहस्पते साक्षादुद्धवो बुद्धिसत्तम ॥ १ ॥
तमाह भगवान् प्रेष्ठ भक्तमेकान्तिन क्वचित् ॥ गृहीत्वा पाणिना पाणि[1] प्रपन्नार्तिहरो हरि· ॥ २ ॥
गच्छोद्धव व्रज सौम्य पित्रोर्नौ प्रीतिमावह ॥ गोपीनां मद्वियोगाधि मत्सन्देशैर्विमोचय ॥ ३ ॥

दयितः वल्लभः प्रियः । तत्र हेतु·— सखेति । तत्राप्युत्कर्षमाह— मन्त्रीति । तत्र हेतुः— प्रवर· श्रेष्ठ इति । तत्र हेतुः—बुद्ध्या सत्तम· श्रेष्ठ इति । तत्र हेतुः— साक्षाद्बृहस्पतेः शिष्य इति ॥ १ ॥ तमेकान्तिन अनन्य भक्तम्, अत एव प्रेष्ठ कचिदेकान्ते पाणिना पाणि गृहीत्वा भगवानाह । तत्र प्रयोजनमाह— प्रपन्नाना व्रजभक्तानामार्तिहरः स्ववियोगदुःख हर्तुमित्यर्थः । तत्र हेतुमाह— हरिः भक्तदुःखहरणस्वभावः ॥ २ ॥ तदुक्तिमाह—गच्छेति सार्द्धैश्चतुर्भिः । श्रवणे सावधानतार्थं सम्बोधयति—उद्धवेति । 'त्वत्सदृशो व्रजप्रेषणयोग्योऽन्यो नास्ति' इति सूचयन् पुन· सम्बोधयति— सौम्येति । त्व व्रज गच्छ । गमनप्रयोजनमाह—नौ आवयो· पित्रोर्नन्दयशोदयोः प्रीतिमावह मद्वियोगदुःख निवर्त्य हर्षं जनय । तथा गोपीनामपि मद्वियोगाद्धेतोर्य आधि· मनःपीडा ता मत्सन्देशैर्विमोचय ॥ ३ ॥

[1] 'पाणी' इति क्वचित् पाठ ।

गोपीना विशेषतः सन्देशे कारणमाह— ता इति । यतस्ता गोप्य. मन्मनस्का मय्येव सङ्कल्पविकल्पात्मक मनो यासां ताः । तथा मत्प्राणा. मदर्थमेव प्राणधारण यासा ता । मदर्थे मत्प्राप्तिप्रतिबन्धतया त्यक्ता दैहिकाः देहसम्बन्धिन' पतिपुत्रादय', देहनिर्वाहका भोजनशयनादयश्च याभि-स्ता' । कि बहुना? सर्वथा मामेव मनसा गताः प्राप्ता. मदतिरिक्तसर्वानुसन्धानरहिता इत्यर्थ' । तत्र हेतुमाह— प्रेष्ठमिति । निरतिशयप्रीतिविषयमि-त्यर्थः । तत्रापि हेतुद्वयमाह— दयितमिति । दया सञ्जाताऽस्यास्तीति दयितः तम्, दयावन्तमित्यर्थ' । आत्मानमिति । 'आत्मनस्तु कामाय सर्वं प्रिय भवति' इति श्रुते ॥ 'सन्त्वेवविधाः, तथापि तदाधिविमोचनेन किम्' तत्राह— य इति । मदर्थे मत्प्रसादार्थे त्यक्तो लोकः इहामुत्रसुख धर्मस्त-त्साधन च यैः ये एवविधा जनाः तानह बिभर्मि सवर्धयामि सुखयामीत्यर्थः । एव मत्प्रतिज्ञास्ति तत्सम्पादनाय गच्छेत्याशयः ॥ ४ ॥ तासा वि-

**ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिका[1] ॥ मामेव दयित प्रेष्ठमात्मान मनसा गता· ॥ ये त्यक्त-**
**लोकधर्माश्च मदर्थे तान् बिभर्म्यहम् ॥ ४ ॥ मयि ता· प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रिय· ॥ स्मरन्त्योऽङ्ग**
**विमुह्यन्ति विरहौत्कण्ठ्यविह्वला ॥ ५ ॥ धारयन्त्यतिकृच्छ्रेण प्राय' प्राणान् कथचन ॥ प्रत्यागमन-**
**सन्देशैर्बल्लव्यो मे मदात्मिका ॥ ६ ॥ श्रीशुक उवाच ॥ इत्युक्त उद्धवो राजन् सन्देश भर्तुराहृत ॥**
**आदाय रथमारुह्य प्रययौ नन्दगोकुलम् ॥ ७ ॥**

योगाधिमेव स्पष्टयति— मयीति द्वयेन । 'आवयोरपि भेदो नास्ति, अतोऽतिरहस्यमपि तवाग्रे कथयामि' इति सूचयन् सम्बोधयति— अङ्गेति । प्रेयसा प्रीतिविषयाणामपि मध्ये प्रेष्ठे निरतिशयप्रीतिविषये मयि दूरस्थे सति ता गोकुलस्त्रियो मा स्मरन्त्यो विरहौत्कठ्येन विह्वलाः परवशा' सत्यो विमुह्यन्ति देहतद्धर्मादींश्च नानुस्मरन्तीत्यन्वयः ॥ ५ ॥ किञ्च गोकुलान्निर्गमनसमये 'शीघ्रमागमिष्यामि' इत्यादयो ये प्रत्यागमनसन्देशास्तैर्मदा-त्मिका मच्चित्ता मे मदीया वल्लभाः प्रिया गोप्यः कथचित् कृच्छ्रेण क्लेशेन प्राणानेव धारयन्ति । प्रायःशब्दो मूर्च्छासूचक । न तासा देहाद्यनु-सन्धानमित्याशयः ॥ ६ ॥ 'स्वाम्याज्ञापालनावश्यकत्व तु स्ववृत्तान्तेन निश्चेयम्' इति सूचयन् सम्बोधयति— राजन्निति । इत्येव भगवता उक्तः आदृतश्चोद्धवः 'भवतीना वियोगो मे नहि सर्वात्मना क्वचित्' इत्यादिना वक्ष्यमाण भर्तुः स्वामिनः श्रीकृष्णस्य सन्देशमादाय स्वीकृत्य रथमारुह्य नन्दस्य गोकुल प्रययावित्यन्वय ॥ ७ ॥

१ "मदर्थे त्यक्तदैहिका इति । दैहिका देहोपयोगिन । तेषु विद्यमानेषु न भगवदर्थमेव देहो भवेत् । यतस्ते त्यक्तव्या । ननु तेषा त्यागे देहनिर्वाहो न भवेत्तत्राह—ये त्यक्तलोक धर्माश्च मदर्थ इति । त्यक्तो लोको धर्मो वैदिकश्च यै । चकारात्सर्वे लौकिकधर्मा देवाश्च परिगृहीता" इति सुबोधिनी ।

विभावसौ सूर्ये निम्लोचति सति अस्त गच्छति सति उद्धवः श्रीमत् सर्वसम्पद्युक्त नन्दस्य व्रज प्राप्तः। 'तदा गोपीभिरज्ञात एव नन्दसङ्गम लब्धवान्' इति सूचयन्नाह—प्रविशता पशूना खुररेणुभिश्छन्न यान रथो यस्य स इति ॥ ८ ॥ व्रज वर्णयति—वासितेति पञ्चभि.। वासिताः पुष्पिण्यो गावश्च तदर्थे तत्सम्बन्धनिमित्त अभित' परस्पर युध्यद्भिः शुष्मिभिर्मत्तैर्वृषैर्नादितम्। ऊधोभारैरुपलक्षिताभि स्ववत्सान् प्रति धावन्तीभि. वास्राभिर्धेनुभिश्च मण्डितम् ॥ ९ ॥ तथा इतस्ततो विलङ्घद्भिः सितैः श्वेतवर्णैर्गोवत्सैश्च माण्डितम्। तथा गोदोहशब्दैः सहाभितो रवाः "मुञ्च मा मुञ्च नय आनय देहि गृहाण" इत्यादयो यस्मिस्तत्। तथा वेणूना नि स्वनेन च मण्डितम् ॥ १० ॥ रामकृष्णयोः शुभानि दुरितनिवर्तकानि कर्माणि गायन्तीभिः स्वलङ्कृताभि-

प्राप्तो नन्दव्रज श्रीमन्निम्लोचति विभावसौ ॥ छन्नयानः प्रविशतां पशूनां खुररेणुभि· ॥ ८ ॥
वासितार्थेऽभियुध्यद्भिर्नादितं शुष्मिभिर्वृषै ॥ धावन्तीभिश्च वास्राभिरूधोभारै स्ववत्सकान् ॥ ९ ॥
इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डित सितै ॥ गोदोहशब्दाभिरव वेणूनां नि·स्वनेन च ॥ १० ॥
गायन्तीभिश्च कर्माणि शुभानि बलकृष्णयो· ॥ स्वलङ्कृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ११ ॥
अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितै ॥ धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥ १२ ॥
सर्वत पुष्पितवन द्विजालिकुलनादितम् ॥ हसकारण्डवाकीर्णै· पद्मखण्डैश्च मण्डितम् ॥ १३ ॥
तमागत समागम्य कृष्णस्यानुचर प्रियम् ॥ नन्द प्रीतः परिष्वज्य वासुदेवधियाऽर्चयत् ॥ १४ ॥

र्गोपीभिरतथाविधैर्गोपैश्च सुविराजितम् ॥ ११ ॥ अग्न्याद्यर्चनान्वितैः गोपगृहैश्च धूपादिभिश्च मनोरमम् ॥ १२ ॥ सर्वत पुष्पितानि वनानि यस्मिस्तत्। द्विजाना पक्षिणा अलीना भ्रमराणा च कुलै· समूहैर्नादितम्। हंसै कारण्डवैर्जलकुक्कुटैश्चाकीर्णैर्व्याप्तै· पद्मखण्डैः पद्मसमूहैश्च मण्डितम्। हसकारण्डवाद्याकीर्णपद्मखडमाण्डितसरःप्रान्तवर्तिद्विजालिकुलनादितपुष्पितवनमण्डितमिति समुदितार्थ ॥ १३ ॥ त कृष्णस्य प्रियमनुचर सेवकमुद्धवमागतमाकर्ण्य प्रीत. सन्नन्द. आगत्य तं परिष्वज्य वासुदेवधियाऽर्चयत् कृष्णमेवागत मत्वा सत्कार कृतवानित्यर्थ· ॥ १४ ॥

---

१ वास्राभि । वास्रा सद्य प्रसूताधेनव ' इति सुबोधिनी ।

परमेणोत्कृष्टेनान्नेन पायसादिना भोजितम् कर्मणः करणत्वविवक्षया तृतीया, परमान्न भोजित कशिपौ पर्यङ्के सुखं यथा भवति तथा संविष्ट पादसवाहनादिभिर्गतमार्गश्रममुद्धव नन्दः पर्यपृच्छादित्यन्वयः ॥ १५ ॥ प्रश्नमेवाह– कच्चिदित्यादिना । भगवत्सखित्वात्तस्मिन् स्वस्नेह सूचयन् सम्बोधयति–अङ्गेति । ' महाभाग ' इति सम्बोधनान्तरं भगवद्भक्तत्वात् । विसर्गान्तपाठे तु वसुदेवविशेषणम् , भगवत्पितृत्वात् । नोऽस्माक व्रजवासिना सखा शूरनन्दनो वसुदेवो बन्धान्मुक्तः सुहृद्भिर्बन्धुभिर्मित्रैर्वृतोऽपत्याद्यैर्युक्तश्च कच्चित् कुशली सुखी आस्ते तदस्माकमिष्टम् ॥ १६ ॥ पाप. पापाचार. कसः स्वेन स्वकीयेनैव पाप्मना दुरितेन हेतुना सानुगः भ्रातृमल्लादिसहितो हत इति दिष्ट्या, तेनास्माकं महानानन्दो जात इत्यर्थः । तत्पापमेव दर्शयति– कर्मणि षष्ठी । यः कसः साधून् परकार्यसाधकान् धर्मिष्ठान् यदून् सदा द्वेष्टि स्मेति ॥ १७ ॥ नोऽस्मान् सुहृद पित्रादिरूपान् प्रेमवतः, मातर यशोदा,

भोजित परमान्नेन सविष्ट कशिपौ सुखम् ॥ गतश्रम पर्यपृच्छत पादसवाहनादिभि ॥ १५ ॥
कच्चिदङ्ग महाभाग सखा न. शूरनन्दन. ॥ आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्त. सुहृद्वृत ॥ १६ ॥
दिष्ट्या कंसो हत पापः सानुग स्वेन पाप्मना ॥ साधूनां धर्मशीलानां यदूनां द्वेष्टि य. सदा ॥ १७ ॥
अपि स्मरति न. कृष्णो मातर सुहृद सखीन् ॥ गोपान् व्रज चाऽऽत्मनाथं गावो वृन्दावन गिरिम् ॥ १८ ॥
अप्यायास्यति गोविन्द स्वजनान् सकृदीक्षितुम् ॥ तर्हि द्रक्ष्याम तद्वक्त्र सुनस सुस्मितेक्षणम् ॥ १९ ॥
दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिता ॥ दुरत्ययेभ्यो मृत्युभ्य. कृष्णेन सुमहात्मना ॥ २० ॥

सखीन्, गोपाश्च, आत्मा स्वयमेव नाथो रक्षको यस्य त व्रजं, गावो गाः, वृन्दावन, गिरि गोवर्धन चापि किं कृष्णः स्मरति ? ॥ १८ ॥ अपि किं स्वजनानस्मानीक्षितुं गोविन्दः सकृदेकदापि आयास्यति खलु ? । 'तेन किम्' इत्यपेक्षायामाह– तर्हि इति । यदि आयास्यति तर्हि तस्य वक्त्र द्रक्ष्यामः । तद्वक्त्रदर्शनाभिलाषाय तत्सौन्दर्यहेतु सूचयन्नाह– सुनसमिति । शोभना नासिका यस्मिंस्तत् । स्मितपूर्वकमीक्षण यस्मिंस्तत् ॥ १९ ॥ भगवत्कृतानुपकाराननुस्मरति– दावाग्नेरिति । दावानलात्, वातात् ,वर्षाच्च, वृषात् अरिष्टात्, सर्पात् कालियात्, सुदर्शनाच्च अन्येभ्यश्च दुरतिक्रमेभ्यः मृत्युभ्यो कृष्णेन वय रक्षिता जाताः । ' एव युष्मत्सरक्षणे किं कारणम् ' इत्यपेक्षायाम् ' आश्रितार्तिहरणोदारचित्तत्वमेव ' इत्याशयेनाह– सुमहात्मनेति ॥ २० ॥



१ ' महाभाग ' इति पाठान्तरम् । २ " वृदावन गिरिम् । क्रीडास्थान वृन्दावनम् । विशेषलालाधारो गोवर्धन इति गिरिम्" इति सुबोधिनी ।

‘एव चेत्तर्हि तद्दर्शनार्थं तत्रैव कुतो न गम्यते ?’ तत्राह– स्मरतामिति । ‘तद्भक्तस्य तवाप्यत्र नासम्भावना’ इति सूचयन् सम्बोधयति– अङ्गेति । कृष्णस्य वीर्याणि गोवर्धनोद्धरणादिपराक्रमान् लीलया अपाङ्गेन निरीक्षण च हसित च भाषित च स्मरता नोऽस्माक सर्वा एव क्रियाः भोजनाद्यावश्यकव्यापारा अपि शिथिला जाताः । अतस्तत्र गमनेऽप्यसामर्थ्यमित्याशयः ॥ २१ ॥ ‘तद्विस्मृतौ कदाचित् स्वास्थ्यसम्भवेऽपि पर तद्विस्मृतिरेव तावन्न सम्भवति, स्मारकबहुत्वात्’ इत्याह– सरिदिति । सरित् यमुना तत्र जलाहरणार्थमवश्य गन्तव्यम्, तत्रापि कालियदमनादि तेन कृतम्, अतः सापि तत्स्मारिका । तथा शैल वनोद्देशेऽपि गाश्चारयितुमवश्य गन्तव्यम्, तेऽपि गाश्चारयतो मुकुन्दस्य चरणेनाङ्किताः । आक्रीडानि क्रीडास्थानानि सरितादीनि ईक्षमाणाना नोऽस्माक मनस्तदात्मता कृष्णाकारता याति गच्छति ॥ २२ ॥ मनुष्यादावसम्भावितैर्भगवच्चरितै र्भगवत्त्व-

स्मरतां कृष्णवीर्याणि लीलापाङ्गनिरीक्षितम् ॥ हसित भाषित चाङ्ग सर्वा न शिथिला क्रिया ॥ २१ ॥
सरिच्छैलवनोद्देशान्मुकुन्दपदभूषितान् ॥ आक्रीडानीक्षमाणानां मनो याति तदात्मताम् ॥ २२ ॥
मन्ये कृष्णं च राम च प्राप्ताविह सुरोत्तमौ ॥ सुराणां महदर्थाय गर्गस्य वचन यथा ॥ २३ ॥
कंसं नागायुतप्राणं मल्लौ गजपति तथा ॥ अवधीष्टां लीलयैव पशूनिव मृगाधिप ॥ २४ ॥
तालत्रय महासार धनुर्यष्टिमिवेभराट् ॥ बभञ्जैकेन हस्तेन सप्ताहमदधाद्गिरिम् ॥ २५ ॥

मध्यवस्यति–मन्य इति । राम च कृष्णं च सुरोत्तमौ वासुदेवसङ्कर्षणाविहलोके प्राप्ताववतीर्णौ मन्ये । तत्प्रयोजनमाह– सुराणा महते अर्थाय असुरादिसहारेण यज्ञादिप्रवर्तनेन च भोगसिद्धय इति । भगवदवतारत्वे शिष्टसंवादं प्रमाणमाह– गर्गस्य वचन यथेति । ‘तस्मान्नन्दात्मजोऽय ते नारायणसमो गुणैः’ इत्युक्तत्वात् ॥ २३ ॥ ‘यद्यपि समत्वोक्त्याऽवतारत्वं गर्गेण नोक्तं तथापि तत्पराक्रमैस्तदनुमीयत’ इत्याशयेनाह– कसमिति त्रिभिः । नागायुतस्य हस्तिदशसहस्रस्य प्राणो बल यस्य त कंस, तथा मल्लौ चाणूरमुष्टिकौ महाबलौ, गजपतिं ‘सहस्रद्विपसत्त्वभृत्’ इत्युक्तविध कुवलयापीड च लीलया अनायासेनैव अवधीष्टा हतवन्तौ । ननु ‘एवभूतानामपि मणिमन्त्रादिप्रयोगेण हनने किमाश्चर्यम्’ इति शङ्का निराकुर्वन्ननायासेन हनने दृष्टान्तमाह– मृगाधिपः सिंहः इतरान् पशून् यथा हन्ति तद्वदिति ॥ २४ ॥ ताल तालवृक्षो हस्तशतत्रयपरिमितस्तत्त्रयपरिमित महासार अयोवददतिदृढ धनुःयष्टिमिक्षुदण्ड इभराट् गजेन्द्रो यथा भञ्जयति तथा बभञ्जेत्यन्वयः । तथैकेन हस्तेन सप्ताह सप्तदिनपर्यन्त गिरिं गोवर्धनमधात् दधार ॥ २५ ॥

तथा सुरासुरजयिनः प्रलम्बादयो दैत्या येन कृष्णेनेह व्रजे लीलयैव हताः। प्रलम्बे रामहतेऽपि कृष्णहतत्वोक्तिस्त्वस्य प्रधानत्वसूचनार्था ॥ २६ ॥ इत्येव कृष्ण सस्मृत्य सस्मृत्य अश्रुकण्ठः अश्रुभिर्निरुद्धकण्ठः ' अत्युत्कण्ठ ' इति वा पाठः, नन्दस्तूष्णीं बभूव किञ्चिदपि वक्तु न शशाक। तत्र हेतुमाह– प्रेम्णः प्रसरेण उद्रेकेण विह्वलो व्याकुलः। तत्रापि हेतुमाह– कृष्णेऽनुरक्ता अनुरागयुक्ता धीर्यस्य स इति ॥ २७ ॥ स्नेहेन स्नुतौ प्रस्नुतौ पयोधरौ यस्याः सा यशोदा भर्त्रा वर्ण्यमानानि पुत्रस्य चरितानि शृण्वन्ती अश्रूणि आनन्दजनेत्रजलबिन्दून् अवास्राक्षीत् ववर्ष ॥ २८ ॥ इत्थ तयोर्नन्दयशोदयोर्भगवति परममनुराग वीक्ष्य मुदा युक्त नन्दं उद्धव आह ॥ २९ ॥ तदुक्तिमेव दर्शयति– युवामित्यादिना। ' एव प्रेमदर्शनेन

**प्रलम्बो धेनुकोऽरिष्टस्तृणावर्तो बकादयः ॥ दैत्याः सुरासुरजितो हता येनेह लीलया ॥ २६ ॥ श्रीशुक उवाच ॥ इति सस्मृत्य सम्मृत्य नन्दः कृष्णानुरक्तधीः ॥ अश्रुकण्ठोऽभवत्तूष्णी प्रेमप्रसरविह्वल ॥ २७ ॥ यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च ॥ शृण्वन्त्यश्रूण्यवस्राक्षीत् स्नेहस्नुतपयोधरा ॥ २८ ॥ तयोरित्थं भगवति कृष्णे नन्दयशोदयो ॥ वीक्ष्यानुराग परमं नन्दमाहोद्धवो मुदा ॥ २९ ॥ ऊद्धव उवाच ॥ युवां[2] श्लाघ्यतमौ नून देहिनामिह मानद ॥ नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ॥ ३० ॥ एतौ हि विश्वस्य च बीजयोनी रामो मुकुन्दः पुरुषः प्रधानम् ॥ अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ ॥ ३१ ॥**

ममापि महासुख ददासि ' इति सूचयन् सम्बोधयति– मानदेति। युवा यशोदानन्दौ इहलोके देहिना मध्ये श्लाघ्यतमौ अतिशयेन प्रशसायोग्यौ। नूनमिति, अत्र सन्देहो नास्तीत्यर्थः। तत्र हेतुमाह– यत यस्मात् अखिलस्य सर्वस्य ब्रह्मादेरपि गुरौ पूज्ये नारायणे कृष्णे ईदृशी अनुरागयुक्ता मतिः युवाभ्या कृतेति ॥ ३० ॥ अखिलगुरुत्वेजनकत्व नियन्तृत्व च हेतुमाह– एताविति। हि यस्माद्रामो मुकुन्दः मुक्तिदाता श्रीकृष्णश्चेत्येतौ द्वावपि विश्वस्य योनी बीजे भवतः। बीज उपादानकारणम्, योनिः निमित्तकारण च। ननु ' पुरुषप्रधानयोर्बीजत्व योनित्व च प्रसिद्धम् ' इत्याशङ्क्याह– पुरुषः प्रधानमिति। पुरुषोऽशः, प्रधान शक्तिः अतः प्रधानपुरुषावप्येतावेव इत्यर्थः। एव जनकत्वमुक्तम्। नियन्तृत्वमाह– अन्वीयेति। भूतेषु स्थावरजङ्गमशरीरेषु अन्वीय प्रविश्य तेषा भूताना तद्विलक्षणस्य ज्ञानस्य चैतन्यात्मकस्य जीवस्य ईशाते ईशौ नियन्तारौ भवत इत्यर्थः। एव सर्वकारणत्वे नियन्तृत्वे हेतुमाह– इमौ पुराणाविति, अनादित्वादित्यर्थः ॥ ३१ ॥

१ ' अत्युत्कठ' इति क्वचित् पाठ । २ " युवा श्लाघ्यतमौ। स्नेहमभिनद्याविषयस्यालौकिकत्व बोधयती येन माहात्म्यज्ञानपूर्वक सर्वतोऽधिकस्नेहो भवति। युवामिति। प्रथमतोऽभिनन्दन देहिना मध्ये तत्रापि भूमौ युवा यशोदानदौ श्लाघ्यतमौ। सत्कर्मणा श्लाघ्या भवति। ततोऽपि ज्ञानेन ततोपि भक्त्या भक्तावपि परमप्रेमसर्वोत्कृष्टधर्माणा च प्रमेयबलमाधिक स्वतत्राभक्तापेक्षयापीय प्रेमभक्तिरसाला, अत आह–नूनमिति " इति सुबोधिनी।

'यत्कृता मतिरीदृशी' इत्यनेन सूचिता कृतकृत्यतामेवोपपादयति— यस्मिन्निति द्वाभ्याम् । 'यस्मिन्' इत्यस्य 'तस्मिन्' इत्युत्तरेण सम्बन्धः । जनो यः कोऽपि प्राणी क्षण क्षणमात्रमपि विशुद्ध विषयान्तरचिन्तारहित मनो यस्मिन् समावेश्य स्थिरीकृत्य तेन कर्माशय कर्मवासना निर्हृत्य दग्ध्वा ब्रह्ममयः प्राकृतसङ्घातनिवृत्त्या प्राप्तनिजानन्दस्वरूपः अर्कवर्णः प्रकाशमानमूर्तिश्च सन् परा गति तत्पद याति । 'कदाचिदेव तस्मिन् मनोधारणेऽपि पुनरविद्यया शक्त्या तत्पदप्राप्तिर्न भवति' इति सूचयन्नाह— प्राणवियोगकाल इति । ततो विषयासक्त्यसम्भवादित्याशयः ॥ ३२ ॥ तस्मिन् भवन्तौ भावं निरतिशयानुराग नितरा निरन्तर विधत्ता अकुरुताम् । अतो युवयोस्तु कृत्य कर्तव्य किमवशिष्टम्? न किञ्चिदपीत्यन्वयः । तद्भक्तेरेव परम-फलत्वे हेतु सूचयन् विशिनष्टि— महात्मन्निति । महात्मनि पुरुषोत्तमे । तत्र हेतुमाह— अखिलस्य चिदचिदात्मकस्य जगतः आत्मा उपादान हेतुर्निमित्त

यस्मिञ्जनः प्राणवियोगकाले क्षण समावेश्य मनो विशुद्धम् ॥ निर्हृत्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्कवर्ण ॥ ३२ ॥ तस्मिन् भवन्तावखिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ ॥ भाव विधत्तां नितरां महात्मन् किं वाऽवशिष्ट युवयो सुकृत्यम् ॥ ३३ ॥ आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ॥ प्रियं विधास्यते पित्रोर्भगवान् सात्वतापतिः ॥ ३४ ॥ हत्वा कंस रङ्गमध्ये प्रतीप सर्वसात्वताम् ॥ यदाह वः समागत्य कृष्ण सत्य करोति तत् ॥ ३५ ॥

स च तस्मिन्निति । 'तर्हि कथमस्मदादिवत्प्रतीतिः ?' तत्राह— कारणेन भूभारहरणादिनिमित्तेन मर्त्यस्येव मूर्तिर्यस्य तस्मिन्निति ॥ ३३ ॥ यत्पृष्टम् "अप्यायास्यति गोविन्दः स्वजनान् सकृदीक्षितुम्" इति तत्राह— आगमिष्यतीति । अच्युतः कृष्णः अदीर्घेण स्वल्पेन कालेन गच्छता व्रजमाग-मिष्यति । पित्रोर्युवयोः प्रिय दर्शनादिमनोरथ विधास्यति पूर्ण करिष्यति । तत्र कैमुत्यन्यायं सूचयति— सात्वता स्वभक्ताना पतिः पालक इति । यः साधारणसर्वभक्ताना मनोरथ पूरयति, तस्य स्वपितृमनोरथपूरणे कः सन्देह इत्याशयः । तत्र सामर्थ्यमाह— भगवानिति ॥ ३४ ॥ 'न केवल भवन्मनोरथपूरणमेव तदागमनप्रयोजनम्, किन्तु स्वप्रतिज्ञापालनार्थमप्यागमिष्यति' इत्याशयेनाह— हत्वेति । रङ्गमध्ये मल्लयुद्धभूमौ कस हत्वा वो युष्मान्प्रति समागत्य कृष्णः "यात यूय व्रज तात वय च स्नेहदुःखितान् । ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां प्रियम्" इति यदाह तत् सत्य करोति करिष्यत्येव । कसस्य हनने हेतुमाह— सर्वसात्वता प्रतीपमिति । सर्वेषां यादवाना स्वभक्तानां प्रतिकूलमित्यर्थ ॥ ३५ ॥

'तद्दर्शनादौ भक्तेः कारणत्वात्तस्या युवयोर्विद्यमानत्वान्न तत्र सन्देह' इति सूचयन् सम्बोधयति– महाभागाविति । मा खिद्यत खेद मा कुरुतम् । अन्तिके समीपे कृष्ण द्रक्ष्यथः । 'न केवल स मथुरायामेवास्ति, किन्तु सर्वत्र' इत्याहुः– स श्रीकृष्ण. सर्वभूतानामन्तर्हृदि हृदयमध्ये आस्ते । 'तर्हि सर्वैः किमिति न दृश्यते ?' तत्राह– ज्योतिरिवैधासि इति । यथैधसि काष्ठे स्थितमपि ज्योतिरग्निर्मथनाद्युपायमन्तरेण न दृश्यते, तथा सर्वत्र स्थितोऽपि भगवान् भक्तिविना न दृश्यत इत्यर्थ. ॥ ३६ ॥ ननु 'प्रियतरान् पित्रादीन् विहाय कथमत्रागमिष्यति' इत्याशङ्क्याह– नहीति । अस्य कृष्णस्य प्रियादयो नैव सन्ति । तत्र हेतुमाह– समानस्येति । सर्वत्र समदृष्टेरित्यर्थः । तत्रापि हेतुमाह– अमानिन इति । प्राकृतदेहादौ अहममाभिमानशून्यस्य इत्यर्थ. ॥ ३७ ॥ तत्रापि हेतुमाह– प्राकृतदेहोऽपि नैवास्ति इति । तत्रापि हेतुमाह–जन्मापि नास्त्येवेति । एवकारस्य सर्वत्र नञा

मा खिद्यतं महाभागौ द्रक्ष्यथ· कृष्णमन्तिके ॥ अन्तर्हृदि स भूतानामास्ते ज्योतिरिवैधासि ॥ ३६ ॥
न ह्यस्यास्ति प्रिय कश्चिन्नाप्रियो वास्त्यमानिन ॥ नोत्तमो नाधमो वाऽपि समानस्यासमोऽपि वा ॥ ३७ ॥
न माता न पिता तस्य न भार्या न सुतादयः ॥ नात्मीयो न परश्चापि न देहो जन्म एव च ॥ ३८ ॥
न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु ॥ क्रीडार्थं सोऽपि साधूनां परित्राणाय कल्पते ॥ ३९ ॥
सत्त्वं रजस्तम इति भजते निर्गुणो गुणान् ॥ क्रीडन्नतीतोऽत्र गुणै· सृजत्यवति हन्त्यज· ॥ ४० ॥

सह सम्बन्धः । परः शत्रुः ॥ ३८ ॥ जन्माभावे जन्मकारणकर्माभाव हेतुमाह– नचेति । लोके प्राणिसमूहे जन्मादिहेतुः पुण्यपापात्मक यत् कर्म तदस्य नास्ति । 'तर्हि कथ तस्य लोकेऽवतारः ?' तत्राह– स कर्माद्यनधीनोऽपि क्रीडार्थः क्रीडार्थप्रयोजनः सन् साधूना परित्राणाय च सदसन्मिश्रयोनिषु देवतिर्यङ्मनुष्येषु कल्पते स्वेच्छया आविर्भवतीत्यर्थः ॥ ३९ ॥ एव सूचितमेव जीववैलक्षण्य स्पष्टयति– सत्त्वमिति । निर्गुणः सत्त्वादिप्राकृतगुणपारवश्यरहितोऽपि भगवान् सत्त्वादिगुणान् भजते स्वक्रीडोपकरणतया स्वीकरोति । ससारातीतः अजः कर्माधीनजन्मरहितोऽपि क्रीडन् सत्त्वादिभिस्त्रिभिर्गुणैर्विश्व सृजति उत्पादयति, अवति रक्षति, हरति सहरति च ॥ ४० ॥

ननु 'यद्येव ससारातीतः कर्मपारवश्यरहितश्च तदा कथमस्मदादिवज्जन्मकर्मादिमत्तया प्रतीयते ?' तत्राह— यथेति । भ्रमरिका परिभ्रमण तयोपलक्षितया दृष्ट्या यथा मही भ्राम्यतीव ईयते प्रतीयते, तथा स्वचित्ते कर्तरि सति तत्रचित्तेऽहंधिया भ्रान्तस्य जनस्य स्वदोषेण सर्वात्मा भगवानपि कर्तैव कर्माधीनजन्मादिमत्तया स्मृतः प्रतीतो भवतीत्यर्थः ॥ ४१ ॥ युवयोर्यदि तत्र पुत्रत्वाभिमानस्तर्हि युवयोरेवायमात्मजो नैव भवति, कितु सर्वेषामपि पुत्रादिरूप ईश्वरो नियन्ता च स एव । हिशब्दोऽवधारणे, यतो भगवान् हरिरिति हेतुः सूचितः ॥ ४२ ॥ कि बहुना ? दृष्टादिरूप वस्तुतरा वस्तुमात्र अच्युताद्विना तद्भिन्नतया न वाच्य निर्वचनार्हं नैव भवति, यतः स एव सर्वम् । तत्र हेतुमाह—परमार्थभूत इति । परमकारणत्वादित्यर्थः ॥ एवमपि

यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते ॥ चित्ते कर्तरि तत्राऽऽत्मा कर्तेवाहधिया स्मृतः ॥ ४१ ॥
युवयोरेव नैवायमात्मजो भगवान् हरि· ॥ सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वर· ॥ ४२ ॥
दृष्ट श्रुत भूतभवद्भविष्यत् स्थास्नुश्चरिष्णुर्महदल्पकं च ॥ विनाऽच्युताद्वस्तुतरां न वाच्य स एव सर्वं परमार्थभूत· ॥ ४३ ॥ एवं निशा सा ब्रुवतोर्व्यतीता नन्दस्य कृष्णानुचरस्य राजन् ॥ गोप्य समुत्थाय निरूप्य दीपान् वास्तून् समभ्यर्च्य दधीन्यमन्थन् ॥ ४४ ॥ ता दीपदीप्तैर्मणिभिर्विरेजू रज्जूर्विकर्षद्भुजकङ्कणस्रज· ॥ चलन्नितम्बस्तनहारकुण्डलत्विषत्कपोलारुणकुङ्कमाननाः ॥ ४५ ॥

अच्युतपदेन विकाराभावः सूचितः ॥ ४३ ॥ हे राजन्[1] कृष्णानुचरस्य उद्धवस्य नन्दस्य च परस्परमेव ब्रुवतोः सतो· सा निशा व्यतीता, तदा गोप्य· समुत्थाय दीपान्निरूप्य प्रज्वाल्य वास्तून् देहल्यादीन् समभ्यर्च्य गन्धादिभिः सम्पूज्य दधीन्यमन्थन् ॥ ४४ ॥ मथ्नतीस्ता वर्णयति— ता इति । मन्थनरज्जूर्विकर्षत्सु भुजेषु कङ्कणाना स्रजः समूहा यासा ताः । चलन्तो नितम्बाः स्तनाहाराश्च यासाम्, कुण्डलैस्त्विषन्तः कपोला यासाम्, अरुणानि कुङ्कमानि येषु तान्याननानि यासा ताश्च, ताश्च ताश्च गोप्यो दीपैर्दीप्ता ये काञ्च्यादिस्थिता मणयस्तैर्विरेजुरित्यन्वयः ॥ ४५ ॥

१ युवयो "ननु अस्माभिरय पुत्रत्वेन व्यवहृत कथमिदानीमपुत्रत्व स्वस्य च भ्रान्तत्व स्यादित्याशङ्क्याह— युवयोरिति । यद्भगवतो लीलया भगवान् पुत्रो जात इति तथैवाङ्गीक्रियत इति मत तदा युवयोरेवैव नान्येषामिति नास्ति किं तु सर्वेषामयमात्मजादि सर्वात्मा स्वय नैषा पुत्रत्वाद्याकारेण यदि न भवेत् आधिदैविकप्रकारेण वा तदा ससारे प्राणिनामानन्दो न भवेदिति अतो युक्तत्वादेव सर्वेषामात्मज " इति सुबोधिनी ।

तदा दध्नो निर्मन्थनजन्यशब्देन मिश्रित' अरविन्दलोचन श्रीकृष्णमुच्चैर्गायन्तीना व्रजाङ्गनाना ध्वनिर्दिवमस्पृशत् व्याप्तवान्। येन ध्वनिना दिशाममङ्गल निरस्यते अपनुद्यते ॥ ४६ ॥ ततश्च भगवति सूर्ये उदिते सति व्रजौकसो व्रजवासिगोपीजनाः नन्दद्वारि शातकौम्भ सुवर्णालङ्कृत रथ दृष्ट्वा अय रथः कस्येति चकाराद्वक्ष्यमाण चोचुः ॥ ४७ ॥ तदुक्तिमाह— 'अक्रूर' इति सार्धेन । कि वा सोऽक्रूर पुनरागतः ? 'कोऽसौ' इत्यपेक्षायामाह— यः। कसस्यार्थसाधकः प्रयोजनसम्पादकः। प्रयोजनसम्पादनमेव दर्शयति— येनाक्रूरेण कसप्रयोजनसिद्ध्यर्थ कृष्णो मधुपुरीं नीतः प्रापित इति। 'कृष्णदर्शनादिनाऽस्माक सर्वतापनिवृत्तिरासीत् तदपहारेण तु तेन पुनर्वय सन्तप्ता' कृता' इति सूचयन्त्य आहु,— कमललोचन इति ॥ ४८॥ अस्मद्दुःखदातृत्वेनैवास्य फलवैपरीत्यं जातम्, कंस एव मृतः । अत इदानीं तत्प्रयोजनाभावात् किमर्थ पुनरागत' इत्यपेक्षाया प्रयोजन सम्भावयन्ति— किमिति ।

**उद्गायतीनामरविन्दलोचनं व्रजाङ्गनानां दिवमस्पृशद्ध्वनि· ॥ दध्नश्च निर्मन्थनशब्दमिश्रितो निरस्यते येन दिशाममङ्गलम् ॥ ४६ ॥ भगवत्युदिते सूर्ये नन्दद्वारि व्रजौकस· ॥ दृष्ट्वा रथं शातकौम्भ कस्यायमिति चाब्रुवन् ॥ ४७ ॥ अक्रूर आगतः किं वा य· कसस्यार्थसाधक· ॥ येन नीतो मधुपुरी कृष्ण कमललोचन ॥ ४८ ॥ कि साधयिष्यत्यस्माभिर्भर्तुः प्रेतस्य निष्कृतिम् ॥ इति स्त्रीणां वदन्तीनामुद्धवोऽगात् कृताह्निक· ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे राजसनिरोधनिरूपणप्रकरणे नन्दादिसान्त्वननिरूपणं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ तं वीक्ष्य कृष्णानुचरं व्रजस्त्रिय प्रलम्बबाहु नवकञ्जलोचनम् ॥ पीताम्बरं पुष्करमालिन लसन्मुखारविन्दं मणिमृष्टकुण्डलम् ॥ १ ॥**

प्रेतस्य मृतस्य भर्तुः कसस्य निष्कृतिमौर्ध्वदैहिक किमस्माभिः कृत्वा साधयिष्यति ? किमस्मन्मांसैः पिण्डान् कृत्वा तस्मै दास्यतीत्यर्थः। इत्येव स्त्रीणा वदन्तीना सतीना तस्मिन्नेव समये कृताह्निकः कृतस्नानादिनियमः उद्धवोऽगात् ॥ ४९ ॥ इति श्रीवल्लभाचार्य—वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने ॥ षट्चत्वारिंशको यातो नन्दसान्त्वनबोधकः ॥ ३ ॥ ॥ छ ॥ श्रुत्वा भ्रमरगीत तु कृष्णादेशेन गोपिका ॥ बोधिता इति वै सप्त-चत्वारिंशे निरूप्यते ॥ १ ॥ त कृष्णस्यानुचर सेवकमुद्धव वीक्ष्य व्रजस्त्रियः शुचि स्त्रीदर्शनेऽपि कामविकाररहित स्वाभाविक स्मित यस्य, अपीच्य स्त्रीणा मनोहरमतिसुन्दर दर्शन यस्य, अच्युतस्य कृष्णस्येव वेष. पीताम्बरादिभूषणानि च यस्य सोऽय कः कुतश्च देशादागतः कस्य पुत्रभृत्यादिरूपः ?

स्मेति वितर्के । इत्येव वितर्कयन्त्यः उत्सुकाः तत्परिज्ञाने उत्साहवन्त्य. त परिवव्रुः परिवेष्टितवत्य इति द्वयोरन्वय. । अच्युतवेषभूषण इति तत्परिज्ञानोत्साहे हेतुरुक्तः । तमेव विवृणोति— प्रलम्बौ आजानुलम्बिनौ बाहू यस्य तम् । नवकञ्जे सद्योविकसितपद्मदले इव लोचने यस्य तम् । पीते अम्बरे यस्य तम् । पुष्करस्य कमलस्य मालाऽस्यास्तीति पुष्करमालिनम् । लसत् शोभमान मुखारविन्द यस्य तम् । मणियुक्ते मृष्टे परिशुद्धे उज्वले कुण्डले यस्य तम् । उक्त कृष्णानुचरत्वमेव स्पष्टयति— उत्तमश्लोकस्य अविद्यानिवर्त्तकयशसः श्रीकृष्णस्य चरणाम्बुज एवाश्रयो यस्य तमिति ॥ १ ॥ २ ॥ ततश्च त रमापतेः श्रीकृष्णस्य सन्देशहर विज्ञाय रहसि एकान्ते आनीय सव्रीडेन हासेन, ईक्षणेन, सूनृतेन मधुरभाषणेन, आदिशब्देन अर्घ्यादिभिश्च सत्कृत आसने उपविष्ट अवनता कृतप्रणामा सत्यः प्रश्रयेण विनयेनापृच्छन् ॥ ३ ॥ तत्प्रश्नप्रकारमेवाह— जानीम इति

शुचिस्मितः कोऽयमपीच्यदर्शन· कुतश्च कस्याच्युतवेषभूषणः ॥ इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदाम्बुजाश्रयम् ॥ २ ॥ तं प्रश्रयेणावनता सुसत्कृत सव्रीडहासेक्षणसूनृतादिभि· ॥ रहस्यपृच्छन्नुपविष्टमासने विज्ञाय सन्देशहरं रमापते ॥ ३ ॥ जानीमस्त्वां यदुपते· पार्षद समुपागतम् ॥ भर्त्रेह प्रेषित पित्रोर्भवान् प्रियचिकीर्षया ॥ ४ ॥ अन्यथा गोव्रजे तस्य स्मरणीय न चक्ष्महे ॥ स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यज· ॥ ५ ॥ अन्येष्वर्थकृता मैत्री यावदर्थविडम्बनम् ॥ पुम्भि· स्त्रीषु कृता यद्वत्सुमनस्स्विव षट्पदैः ॥ ६ ॥

यदुपते· कृष्णस्य पार्षद सेवक समुपागत त्वा जानीम· । 'किमर्थं समुपागतोऽहम्' इत्याकाङ्क्षायामाहु·— भर्त्रेति । भर्त्रा त्वत्स्वामिना तेन स्वपित्रोर्नन्दयशोदयो· प्रिय कर्तुमिच्छया भवानिह प्रेषितः प्रस्थापितः ॥ ४ ॥ 'कुतोऽय निश्चय' इत्यत आहु — अन्यथेति । पित्रो· प्रियचिकीर्षामन्तरेण तस्य कस हत्वा वशीकृतराज्यस्य यदुपतेर्गोव्रजे पशुपयोग्ये स्थाने स्मरणीय किञ्चिन्न चक्ष्महे न पश्यामः । 'तर्हि पित्रोरपि स्मरण मा भूत्' इत्याशङ्क्याहुः— स्नेहेति । बन्धूना पित्रादीना सम्बन्धी यः स्नेहरूपोऽनुबन्धः पाश स सहजत्वान्मुनेः मननशीलस्य विरक्तस्य सन्यासिनोऽपि दुस्त्यजस्त्यक्तुमशक्य ॥ ५ ॥ अन्यत्र स्नेहस्यौपाधिकत्वमाह— अन्येष्विति । बन्धुव्यतिरिक्तेषु मैत्री स्नेह· अर्थकृता प्रयोजनप्रयुक्ता । अतो यावदर्थविडम्बन यावत् प्रयोजनं

१ "पुम्भि स्त्रीष्विति । पुरुषा स्वतन्त्रा सर्वसमर्था तद्विपरीताश्च स्त्रियस्तासु स्नेह न कुर्युरेव यदि कामो न भवेत्। कामाच्च स्नेहमेव कुर्वंति । अन्यथा सिद्धे गते वा कामे निवर्तते शास्त्रमपि विरागे त्याग विधत्ते यदहरेव विरजेदिति । ननु धर्मोऽप्यस्ति पुत्रादिद्वारा च स्नेहो भवति ततश्चागन्तुकमपि सहजमेवेति भवतीष्वपि तथा भगवत इत्याशङ्क्य तत्परिहारार्थं दृष्टान्तान्तरमाहु — सुमन स्स्विव षट्पदैरिति । गमनक्रियाबाहुल्यार्थं षट्पदशब्दप्रयोग तेषा । मकरन्दग्रहणानन्तर पुष्पनाशे न कापि क्षति । अयमस्माक युक्तो दृष्टान्त । ननु सर्वत्रैव दृष्टान्त सुलभ न तु तावता कार्यं सिद्ध्यति" इति सुबोधिनी ।

तावत् स्नेहानुकरणमात्रम्। प्रयोजनसिद्ध्यर्थं स्नेहप्रदर्शनम् , न तात्विकः स्नेह इत्यर्थः । तत्र दृष्टान्तद्वयमाहुः– पुम्भिः स्त्रीषु कृता यद्वत् यथा कामनिमित्ता मैत्री कामे निवृत्ते तु सापि निवर्त्तते । ' यदहरेव विरजेत्तदहरेव प्रव्रजेत् ' इति शास्त्रेणापि निष्कामस्य स्त्रीपरित्यागविधानात् ॥ सुमनस्सु पुष्पेषु षट्पदैर्भ्रमरैः कृता यथा मकरन्दनिमित्ता, मकरन्दग्रहणानन्तर तदभावदशाया वा तत्परित्यागदर्शनात्। पुष्पनाशेऽपि क्लेशादर्शनाच्च ॥ ६ ॥ उदाहरणान्तरैर्यावदर्थविडम्बनमेवान्यत्र मैत्र्या प्रदर्शयन्ति निःस्वमिति श्लोकद्वयेन। प्रथम धनवन्त पुरुषं स्वदेहमपि तदधीन कृत्वाऽनुवर्तमाना अपि गणिका वेश्यास्तद्धन गृहीत्वा न विद्यते स्व धन यस्य तथाभूत पश्चात्त्यजन्ति । ' समबुद्ध्याऽनुवर्तमानानामेवं त्यागो भवतु , उत्कृष्टभावेनानुवृत्तौ तु स न स्यात् ' इत्याशङ्क्याहुः– अकल्पमिति । पालनपोषणादिसामर्थ्यदशाया नृपतिमनुवर्तमाना अपि प्रजाः पश्चाद्दैवयोगेन अकल्प पालनाद्यसमर्थं त त्यजन्ति । ' लोके एवं कापट्यात्त्यागो भवतु, वैदिके सदाचारे तु स न स्यात् ' इत्याशङ्क्याहुः–अधीतेति । पूर्वमध्ययनदशाया आचार्यं " उपनीय तु यः शिष्य वेदमध्यापयेद्द्विजः । सकल्प सरहस्य च तमाचार्यं प्रचक्षते " इत्युक्तलक्षण गुरुमनुवर्तमाना अपि शिष्याः पश्चात् अधीता

निःस्वं त्यजन्ति गणिका अकल्पं नृपतिं प्रजा ॥ अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥ ७ ॥
खगा वीतफल वृक्ष भुक्त्वा चातिथयो गृहम् ॥ दग्धं मृगास्तथाऽरण्यं जारो भुक्त्वा रतां स्त्रियम् ॥ ८ ॥
इति गोप्यो हि गोविन्दे गतवाक्कायमानसाः ॥ कृष्णदूते व्रज याते उद्धवे त्यक्तलौकिकाः ॥ ९ ॥

विद्या यैस्तथाभूताः सन्तस्त त्यजन्ति । ननु ' शब्दव्यवहारे एव भवतु , अनुष्ठानव्यवहारे स न स्यात् ' इत्याशङ्क्याहुः– ऋत्विज इति । पूर्वं यज्ञादिकर्मानुष्ठानेन यजमानमनुवर्तमाना अपि ऋत्विजः पश्चाद्दत्ता दक्षिणा येन त लब्धदक्षिणा. सन्तस्त्यजन्ति ॥ ७ ॥ तथा खगाः प्रथम सफल वृक्ष सेवमाना अपि वीतफल फलरहित त त्यजन्ति । ' विवेकहीनानामेव एव व्यवहारः, विवेकिनामय न स्यात् ' इत्याशङ्क्याहुः– भोजनात् पूर्वमुपविष्टा अपि अतिथयो भुक्त्वा च गृह त्यजन्ति । तथा हरिततृणेऽरण्ये विचरन्तोऽपि मृगा दग्ध तत्त्यजन्ति । जारः कामान्धः परस्त्रीभोक्ता भोगात् पूर्वं तस्या प्रीतियुक्तोऽपि भुक्त्वा च कामनिवृत्तौ रतामतृप्तामपि ता त्यजति ॥ ८ ॥ तस्य श्रीकृष्णस्य कैशोरबाल्ययोरवस्थयोर्यानि प्रियाणि कर्माणि तानि सस्मृत्य सस्मृत्य गायन्त्यो रुदन्त्यश्च गोप्य कृष्णदूते उद्धवे व्रज याते आगते तमित्येवमपृच्छन् इति पूर्वेणैवान्वयः । ' कथमेव परपुरुष प्रति प्रश्नः सम्भवति ? ' इत्याशङ्क्याह– गतह्रिय इति । परित्यक्तलज्जाः ॥ तत्र हेतुमाह– त्यक्तलौकिका इति । लोकव्यवहारानुसन्धानरहिता इत्यर्थः । तत्रापि हेतुमाह– गोविन्द इति । गोविन्द एव गतानि निविष्टानि वागादीनि तद्व्यापाराश्च याता ताः । हिशब्दो युक्तिसूचकः ।

युक्तश्चायमर्थः । अन्यत्रासक्तमनसामन्यानुसन्धानाभावस्य प्रसिद्धत्वादित्याशयः ॥ ९ ॥ १० ॥ तत्र काचिद्गोपी कृष्णसङ्गम ध्यायन्ती मधुकर भ्रमर दृष्ट्वा त प्रियेण श्रीकृष्णेन प्रेषित प्रस्थापित दूत कल्पयित्वा साक्षादुद्धव प्रत्येव कथनस्यानुचितत्वात् तस्मिन्नुद्धवे दृष्टि कृत्वा तदपदेशेन उद्धवमेव इद वक्ष्यमाणमब्रवीदित्यन्वयः॥ ११ ॥ तद्भ्रमरगीतमेव दर्शयति—मधुपेति दशभिः । तत्र चरणनिकटमागच्छन्त विलोक्याह—हे मधुप भ्रमर ! हे कितवस्य धूर्तस्य वञ्चकस्य बन्धो कार्यसाधक मित्र ! अस्मत्सपत्न्या कुचाभ्या विलुलिता आलिङ्गनदशाया सम्मर्दिता या माला तस्याः कुङ्कुम कुचसम्बन्धात्ततो मालाया प्राप्त यत्कुङ्कुम तद्येषु तैः श्मश्रुभिर्नोऽस्माकमाङ्घ्रि मा स्पृशेत्यन्वय । 'सपत्न्या' इत्यादिना चरणस्पर्शनिषेधे हेतुः सूचितः, ईर्ष्या च प्रदर्शिता । 'आयास्ये' इत्युक्त्वा गतस्य तस्य स्त्र्यन्तरसम्बन्धकथनाद्भगवतो धूर्तत्व स्पष्टीकृतम् । 'मधुप' इति सम्बोधनेन केवल मध्वर्थित्वात्त्वमपि धूर्तोऽविश्वसनीय एवेति सूचितम् । ननु 'युष्मत्प्रसादार्थ कृष्णप्रेषितेन मया युष्मदङ्घ्रिस्पर्शो युक्त एव ' इत्याशङ्क्याह—वहत्विति । मधवो यादवाः तेषा पति कृष्णः यदि व्रजपतित्व विहाय यदुपतिर्जातस्तदा तासा मानिनीना मानवतीना पुरस्त्रीणामेव प्रसादन वहतु करोतु, किमस्माक वनचरीणा प्रसादनेन ? तादृङ्मानाभावादित्याशयः । किञ्च यस्य दूतस्त्वमीदृक् स्त्रीकुचकुङ्कुमयुक्तश्मश्रुवास्तस्य यदुसदसि उपहासास्पदत्वमेव स्यात् ॥ १२ ॥ ननु ' किमिति एवमवजानीथ ? कि वस्तेनापकृतम् ? ' अत आह— सकृदिति । सकृदेकदेव स्वामधरसुधामस्मान् पाययित्वा सद्यः अविलम्बेनैव तत्यजे । त्यागमात्रे दृष्टान्तमाह—सुमनस इवेति । भवादृक् । त्वादृशः कृतघ्नो भ्रमरो यथा रस पीत्वा सुमनसः कुसुमानि त्यजति तद्वत् । अय तु पाययित्वा तत्यजे एतावास्तु विशेषः । ' तस्य तर्हि कोऽपराध ? नहि तेन युष्माक किञ्चिदपि गृहीतम् ' इत्याशङ्क्याह— मोहिनीमिति । लोकवेदमर्यादाविस्मारिकामित्यर्थ । अतो यल्लोभेन लोकद्वय नष्ट तदपि सुख न लब्धमित्यस्माक सर्वस्वहानिर्जातेत्याशयः । आश्चर्यमाह—

गायन्त्यः प्रियकर्माणि रुदन्त्यश्च गतह्रियः ॥ तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः ॥ १० ॥ काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम् ॥ प्रियप्रस्थापित दूतं कल्पयित्वेदमब्रवीत् ॥ ११ ॥ गोप्युवाच ॥ मधुप कितवबन्धो मा स्पृशाङ्घ्रिं सपत्न्याः कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः ॥ वहतु मधुपतिस्तन्मानिनीनां प्रसाद यदुसदसि विडम्ब्य यस्य दूतस्त्वमीदृक् ॥ १२ ॥ सकृदधरसुधां स्वां मोहिनी पाययित्वा सुमनस इव सद्यस्तत्यजेऽस्मान् भवादृक् ॥ परिचरति कथं तत्पादपद्म नु पद्मा ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥ १३ ॥

१ " नु इति वितर्के। सा हि भगवत विना क्षणमपि स्थातुमशक्तेति पद्मेति प्रमाण चोक्तम् । परिचरतीति वर्त्तमानप्रयोगादिदानीमपि सेवा लक्ष्यते। भगवास्तु निर्विवादमेवेति तु निर्विवादम्" इति सुबोधिनी ।

परिचरतीति । वयमनभिज्ञत्वादेव वञ्चिताः । पद्मा सर्वोत्तमा परमचतुरा लक्ष्मीरतस्य कृतघ्नस्य पादपद्मं कथं नु परिचरति सेवते ? । एवमाश्चर्यं कृत्वा स्वयमेव तत्र कारणं तर्कयन्त्याह—अपि बतेति। अपीति सम्भावनायाम् । बतेति वितर्के । एवमेव सम्भवतीत्यर्थः। उत्तमश्लोकाः पुण्यकीर्तिमन्तो ये तद्भक्ता नारदादयस्तेषां जल्पैः श्लाघावचनैर्हृतमाकृष्टं चेतो यस्यास्तथाभूता सत्येव तत्पादपद्मं सेवते इत्यन्वयः। हीत्यवधारणे ॥ १३ ॥ 'बहुधा-झङ्कारं कुर्वाणं तमस्मत्प्रसादलाभार्थं श्रीकृष्णं गायति' इति मत्वाह—किमिति । 'गमनसाधनानां चरणानां बहुत्वादन्यत्र कुतो न गच्छसि' इति सूचयन्ती सम्बोधयति— हे षडङ्घ्रे इति । इह नोऽस्माकमग्रतो यदूनामधिपतिं व्रजाधिपतित्वं विहाय स्वीकृतयदुपतित्वं कृष्णं किमर्थं बहु गायसि ? 'किञ्चिल्लाभार्थम्' इति चेत् 'गृहे स्थिता एव दाने समर्था भवन्ति, वयं तु तदर्थं त्यक्तगृहाः तेन त्यक्ताश्च । अतो न किमपि दातुं समर्थाः' इत्याशयेनाह—अगृहाणामिति । किंच 'नवीनगानश्रवणे आह्लादो भवति, तत्कापट्यस्य तु बहुशोऽनुभूतत्वात् किं तद्गानश्रवणेन' इत्याशयेनाह—पुराणमिति । अतो यदि किंचित् प्राप्तुमिच्छसि तर्हि विजयस्यार्जुनस्य सखा यः कृष्णस्तस्य सखीनामग्रे तस्य कृष्णस्य प्रसङ्गो गीयताम् । ताश्चेष्टास्तद्गानेन सत्कृतास्ते तव

किमिह बहु षडङ्घ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् ॥
विजयसखसखीनां गीयतां तत्प्रसङ्गः क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥ १४ ॥
दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ॥
चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ १५ ॥

इष्टं कल्पयन्ति शीघ्रं सम्पादयिष्यन्ति । शैघ्र्यद्योतनार्थो वर्तमानप्रयोगः। तत्र हेतुमाह— तदालिङ्गनेन क्षपिता दूरीकृता कुचरुक् यासां ता इति । कृष्ण-कृतसन्मानेन सर्वसम्पादने समर्था इत्याशयः ॥ १४ ॥ ननु 'यदि पुरस्त्रियस्तस्य सुलभाः स्युस्तदा तेन सन्मानिता मदिष्टं साधयेयुः, परं तु ता एव तस्य दुर्लभाः, अत एव युष्मान् प्रसादयितुं मां प्रेषितवान्' इत्याशङ्क्याह— दिवीति । दिवि स्वर्गे, भुवि भूलोके, रसायां रसातले, अधोलोके च याः स्त्रियः स्युस्तासां मध्ये काः स्त्रियः तदिति पृथक्पदमव्ययं तस्य श्रीकृष्णस्य दुरापा दुर्लभाः ? न का अपि दुर्लभाः, किन्तु सर्वा अपि सुलभा एवेत्यर्थः । तत्र हेतुं ब्रुवती विशिनष्टि— कपटपूर्वको यो रुचिरो मनोहरो हासस्तत्पूर्वको भ्रूविजृम्भः भोगादिसूचको भ्रूविलासो यस्य तस्येति । भूतिः सर्वोत्तमा सर्वोपास्या सर्वसम्पदधिष्ठात्री लक्ष्मीरपि यस्य चरणरज उपास्ते सेवते, तत्र वयं काः किं दुर्लभाः कथं प्रार्थनीयाः ? 'एवं चेत्तर्हि कथं पूर्वं तेन यूयमङ्गीकृताः' इत्यपेक्षायामाह— अपि चेति । उत्तमस्त्रीणां तत्सुलभत्वेऽपि कृपणपक्षे दीनानुकम्पिनि पुरुषे एव यत उत्तमश्लोकशब्दः प्रवर्तते महायशा इति व्यवहारो भवतीति स्वयशोविस्तारायैवास्मानङ्गीकृतवान्, नास्मत्सुखार्थः । अन्यथा त्यक्त्वा न गच्छेदित्याशयम् ॥ १५ ॥

पादमूले प्रविशन्त क्षमापयिष्यन्तमिव मत्वाह— विसृजेति । बलाच्छिरसि न्यस्त पाद विसृज त्यज । ननु ‘ भवतीभिरुक्तमेव करिष्यामीति, किमेवं तिरस्कारेण ’ इत्याशङ्क्याह— वेद्मीति । मुकुन्दादभ्येत्य शिक्षित्वा आगतस्य दौत्यैर्दूतकर्मभिश्चाटुकारैः प्रियवचनैश्चानुनयविदुषः प्रार्थनाचतुरस्य ते सर्वं कपटमह वेद्मि । मुकुन्दवत् त्वमपि न विश्वसनीय इति भाव । ननु ‘ तेन किमपराद्धम्, येनैव तिरस्क्रियते ? ’ तत्राह— स्वकृत इति । स्वकृते तदर्थमेव विसृष्टानि उपेक्षितानि अपत्यानि पतयोऽन्ये च लोका धर्मसाध्याः स्वर्गादयो याभिस्ता अस्मान् इह व्रजे व्यसृजतत्याज अय महानपराधः । त्यागे हेतुमाह— अकृतचेता इति । न कृते उपकारे चेतो यस्य सः, कृतघ्न इत्यर्थ. । अतोऽस्मिन् कि नु सन्धेय सन्धिना साध्यम् ? नहि कृतघ्ने सन्धिरुचितः । न वा कृतोऽपि स इष्टसाधनमित्याशयः ॥ १६ ॥ ‘ न केवल कृतघ्न एव, अपि तु क्रौर्यादिगुणयुक्तश्च ’ इत्याह— मृगयुरिवेति । मृगयुर्व्याध इव सुग्रीवमग्रे कृत्वा स्वय विलीनः सन् कपीन्द्र स्वापराधरहित वालिन विव्यधे जघान । ननु ‘ मासार्थ हरिणादयो

विसृज शिरसि पादं वेद्म्यह चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् ॥
स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः कि नु सन्धेयमस्मिन् ॥ १६ ॥
मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजित· कामयानाम् ॥
बलिमपि बलिमत्त्वाऽवेष्टयद्ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थ ॥ १७ ॥

राजादिभिर्हन्यन्ते एव, तेन को दोष ’ इत्यत आह— अलुब्धधर्मेति । न लुब्धस्य सम्भावितो धर्मो यस्य सः । लुब्धको हि मासमत्तु मृगान् हन्ति, अय तु न तथा, कपिमासस्याभक्ष्यत्वात । अतो वृथाकाठिन्यादिमानिति भावः॥ तथा स्त्रिय शूर्पणखा विरूपामकृत छिन्नकर्णनासिकामकरोदित्य र्थ । ‘ तथाकरण तस्य अनुचितम ’ इत्याशयेनाह— कामयानामिति । काम एव यान प्राप्तिसाधन यस्यास्तामित्यर्थः । ननु ‘ विरक्तस्य तन्निरासोऽपि युक्त एव ’ इत्याशङ्क्याह— स्त्रीजित इति । सीतापरतन्त्रइत्यर्थः । एव दाशरथीरामरूपेण अनर्थ कृतवान् ॥ तथा वामनरूपेणापि बलि वैरोचनिसमर्पिता भूम्यादिपूजा अत्त्वा परिगृह्य त बलिमावेष्टयत् पाशैर्बबन्धेत्यर्थ. । तत्र दृष्टान्तमाह— ध्वाङ्क्षवदिति । ध्वाङ्क्ष· काकः स यथा किञ्चिद्भुक्त्वापि स्वामिन पुनरावेष्टयति तद्वदित्यर्थः । य इत्थ दुःखदस्तत्तस्य असितस्य कृष्णस्य सख्यैर्मैत्रीभिरलं पूर्णम्, न किञ्चित्प्रयोजनमित्यर्थः । ननु ‘ एव चेत्तर्हि तत्कथयापि किमन्यैव कथा कथनीया ’ इति चेत्तत्राह— दुस्त्यज इति । तस्य कथारूपोऽर्थो दुस्त्यजस्त्यक्तुमशक्य इत्यर्थः ॥ १७ ॥

न केवलं वयमेव तत्कथया विक्षिप्ताः, किंतु बहवो जनाः। यस्यानुचरितमेव लीलापरमानन्दजनकम्। अत एव कर्णयो॰ पीयूषममृत तस्या विप्रुट् कणिका तस्याः सकृत अदन सेवन तेन विधूता निरस्ता द्वन्द्वधर्मा रागद्वेषक्षुत्पिपासादयो येषा ते । अतएव अहकारनिरासाद्विनष्टा॰ असत्तुल्या अचेतनप्राया॰ सपदि शीघ्रमेव दीन दुःखितमपि गृहे स्थित कुटुम्ब विहाय दयारहिता॰ स्वयमपि दीना भोगहीना विहङ्गा॰ पक्षिण इहलोके भिक्षुचर्या चरन्ति प्राणवृत्तिमात्र कुर्वन्तीत्यर्थः। अतो यद्यपि त्याज्य एव तत्कथार्थ॰, तथापि त्यक्तु न शक्नुमः। किं कुर्म इति निन्दापरोऽर्थः॥ पारमार्थिकस्त्वयमर्थ॰— विधूतद्वन्द्वधर्मा इत्यन्त समासः पूर्ववत्, ततस्ते च ते अविनाष्टश्चेति समासः। इतरे तु द्वन्द्वधर्मिणो विनष्टा एवेत्यर्थात्सूचितम्। ते सपदि तत्क्षणमेव दीन तुच्छ गृहसहित कुटुम्ब विहाय किञ्चित्सङ्गहाभावादीना इव 'धीरा' इति पाठान्तरम्, विहङ्गा हसा इव सारासारविवेकचतुरा भिक्षुचर्यां चरन्ति।

यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वन्द्वधर्मा विनष्टा॰ ॥
सपदि गृहकुटुम्ब दीनमुत्सृज्य दीना बहव इव विहङ्गा भिक्षुचर्यां चरन्ति ॥ १८ ॥
वयमृतमिव जिह्मव्याहृतं श्रद्दधाना॰ कुलिकरुतमिवाज्ञा॰ कृष्णवध्वो हरिण्य॰ ॥
ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमन्त्रिन् भण्यतामन्यवार्ता ॥ १९ ॥

तस्मादेव परमपुरुषार्थरूपत्वादुस्त्यज एव तत्कथार्थः, कथ त त्यजाम इति॥१८॥ 'तर्ह्येव विचक्षणा यूय कथ तद्वश गता' इत्यत्राह—वयमिति। जिह्मस्य कुटिलस्य तस्य व्याहृत 'न मयोदितपूर्व वा अनृतम्' इति साधनकाले, 'नपारयेऽह निरवद्यसयुजाम्' इति फलकाले च वाक्यद्वय वस्तुतोऽनृतमपि ऋत सत्यमिति श्रद्दधाना वय तस्य नखस्पर्शैर्नखक्षतैस्तीव्रा स्मररुक् स्मरपीडा यासा तथाभूताः असकृत् पुनःपुनरेतद्दुःखमेव ददृशिम अद्राक्ष्म। तत्र दृष्टान्तमाह—कुलिकरुतमिति। कृष्णस्य हरिणस्य वध्वो हरिण्यो यथा कुलिकस्य व्याधस्य रुत मधुरगान श्रुत्वा मोहितास्तत्समीप गता बाणवधादिदुःखमेवानुभवन्ति तथेत्यर्थ॰। तथामोहे हेतुमाह— अज्ञा इति। 'कृष्णवध्व' इति नाम्नापि साम्यता दर्शिता। 'सुदूतस्य तव अस्मद्धिताचरणमेव युक्तम्' इति सूचयन्ती सम्बोधयति— उपमन्त्रिन्निति। तद्वार्तायास्तत्स्मारकत्वेन दुःखहेतुत्वादन्यवार्ता भण्यता कथ्यताम्॥ १९ ॥

१ 'धीरा' इति पाठातरम्। २ 'ननु किमिति नाशो मान्यते हरिण्यस्तु तेन विद्धा नतु भवत्य इति चेत्तत्र तुल्यार्थतामाहु — ददृशुरिति। एतद्ददृशु स्वावस्थानमभिनयेन प्रदर्शयन्त्य हरिणीना तामवस्थामाहु — हरिण्योऽप्युभयतो भ्रष्टा जाता स्वयमेव हरिणीना बोधने दृष्टातभूता इति पूर्व हरिण्युपक्रमेण निरूप्यमानमप्यर्थ पश्चात्स्वप्राधान्येन निरूपयन्ति-तन्नखस्पर्शेति"। इति सुबोधिनी।

परावृत्य पुनरागत प्रत्याह–प्रियसखेति। हे प्रियस्य सखे! प्रेयसा प्रियतमेन कृष्णेन प्रेषितस्त्व पुनरागाः आगत॰, तर्हि हे अङ्ग! मे मम त्व माननीयोऽसि पूज्योऽसि, अतः यत्किञ्चिदवरुन्धे भवान् प्राप्तुमिच्छति तद्वरय वृणीष्व। 'भगवत्समीपे युष्याक नयनामिच्छामि' इति चेत्तत्राह–नयसीति। 'त्वमपि सौम्यस्वभावोऽसि, अतो विचारय सापत्न्यदु ख कथ सोढव्यम्' इत्याशयेन सम्बोधयति– हे सौम्येति। इहास्मिन्नपि काले दुस्त्यज द्वन्द्व मिथुनीभावो यस्य तस्य पार्श्वं समीपमस्मान् कथ नयसि नेष्यसि ?। 'तत्र को दोष' इत्यपेक्षायामाह– श्रीर्लक्ष्मीर्नाम वधू साक सहैव तत्राप्युरस्येव सतत निरन्तरमास्ते इति ॥ २० ॥ प्रणयकोप विहाय शान्ता सत्याह– अपीति सम्भावनायाम्, बतेति हर्षे, नन्विति वितर्के। उद्धवे स्वस्नेह सूचयन्ती सम्बोधयति–सौम्येति। आर्यस्य पूज्यस्य नन्दस्य पुत्रः भक्तत्वेन स्वीकृतत्वान्नामाग्रहणम्, उपनीत सन् विद्याग्रहणार्थं गत इति श्रुतम्। ततो गुरुगृहादागत्य

प्रियसख पुनरागा॰ प्रेयसा प्रेषितः कि वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ॥ नयसि कथमिहास्मान् दुस्त्यजद्वन्द्व-पार्श्वं सततमुरसि सौम्य श्रीर्वधू॰ साकमास्ते ॥ २० ॥ अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते स्मरति स पितृगेहान् सौम्य बन्धूंश्च गोपान् ॥ क्वचिदपि स कथा न किङ्करीणां गृणीते भुजमगुरुसुगन्ध मूर्ध्न्यधास्यत् कदा नु ॥ २१ ॥ श्रीशुक उवाच ॥ अथोद्धवो निशम्यैवं कृष्णदर्शनलालसा॰ ॥ सान्त्वयन् प्रियसन्देशैर्गोपीरिदमभाषत ॥ २२ ॥ उद्धव उवाच ॥ अहो यूय स्म पूर्णार्था भवत्यो लोकपूजिताः ॥ वासुदेवे भगवति यासामित्यर्पित मन ॥ २३ ॥

अधुना कि मधुपुर्यामास्ते ? पितृभ्या गेहैश्च सहितान् बन्धून् गोपान् किं स्मरति ? क्वचित कदाचिदपि किङ्करीणां नोऽस्माक कथा वार्ता स गृणीते ?। एव वृत्त पृष्ट्वा मनोरथं करोति–कदा वा अगुरुवत् सुगन्ध स्वभुज नो मूर्ध्नि अधास्यत् निधास्यति इति ॥ २१ ॥ एव कृष्णस्य दर्शने लालसा औत्सुक्य यासा तथाभूता गोपीर्निशम्य दृष्ट्वा अथ गोपीवाक्यश्रवणानन्तर प्रियस्य कृष्णस्य सन्देशैस्ताः सान्त्वयन्नुद्धव इद वक्ष्यमाणमभाषत ॥ २२ ॥ तद्भापणमेव दर्शयति– अहो इति षड्भिः। घोषवासिनीनामेवभक्तेर्दुर्लभत्वात्ता दृष्ट्वाऽऽश्चर्य सूचयति– अहो इति। स्मेति निश्चये। पूर्ण अर्थ॰ पुरुषार्थो यासा तथाभूता यूयम्, तथा भवत्यो लोकेषु पूजिता॰ पूजायोग्याः। उभयत्र हेतुमाह–वासुदेव इति। भगवति ऐश्वर्यादिषड्गुणपूर्णे वासुदेवे वसुदेवनन्दने श्रीकृष्णे यासा युष्माकमित्येवमनन्यवृत्तिक मनोऽर्पित स्थिरीकृतम् ॥ २३ ॥

'कथं तदर्पणमात्रेण पूर्णार्थत्वं लोकपूज्यत्व च' इत्यत आह– दानेति। दानादिभिर्या कृष्णे भक्तिः साध्यते सा एव अनुत्तमा न उत्तमा यस्याः सर्वपुरुषार्थश्रेष्ठा भक्तिर्भगवति भवतीभि. प्रवर्तितेति दिष्ट्या महानानन्दो जात इति द्वयोरन्वय'। 'दानादीना भक्तिसाधनत्व सर्वशास्त्रप्रसिद्धम्' इति सूचयति– हीति। दान तुलापुरुषादिदानम्, व्रत एकादश्यादि उपवासः, तपः कृच्छ्रचान्द्रायणादि, होमः अग्निहोत्रादिः, जपः मन्त्रादि 'स्वाध्याय स्वाधिकारानुरूपवेदाध्ययनादि., सयम. इन्द्रियादिनिग्रहः, अन्यानि च विविधानि श्रेयःसाधनानि कूपारामनिर्माणादीनि, तै । भक्तेरुत्तमत्वमेव स्पष्टयति– मुनीनामपि दुर्लभेति । तत्र हेतुत्वेन भगवन्त विशिनष्टि– उत्तमश्लोक इति । उत्तमः अविद्यानिवर्तक. श्लोको यशो यस्य तस्मिन्नित्यर्थः ॥ २४ ॥ ॥ २५ ॥ तासा भक्तिमेव दर्शयति– दिष्ट्येति । यत यस्मात पुत्रादीन् हित्वा त्यक्त्वा पर पुरुषं श्रीकृष्णाख्य अवृणीत वृतवत्यः, अतः पूर्णार्था

दानव्रततपोहोमजपस्वाध्यायसयमै ॥ श्रेयोभिर्विविधैश्चान्यै. कृष्णे भक्तिर्हि साध्यते ॥ २४ ॥
भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ॥ भक्ति प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥ २५ ॥
दिष्ट्या पुत्रान् पतीन् देहान् स्वजनान् भवनानि च ॥ हित्वाऽवृणीत यूयं यत् कृष्णाख्य पुरुषं परम् ॥ २६ ॥
सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे ॥ विरहेण महाभागा महान् मेऽनुग्रह. कृत. ॥ २७ ॥
श्रूयतां प्रियसन्देशो भवतीनां सुखावह. ॥ यमादायागतो भद्रा अह भर्तू रहस्कर ॥ २८ ॥

लोकपूजिताश्चेत्यन्वय ॥ २६ ॥ तासा भक्तिदर्शनेन स्वस्यापि भक्तेरुद्बोधादात्मनः कृतार्थतामाह– सर्वात्मभाव इति । अधोक्षजे विषयाविष्टचित्तानामिन्द्रियजन्यज्ञानाविषयेऽपि श्रीकृष्णे भवतीना सर्वात्मभावः सर्वतोऽधिकस्नेहरूप एकान्तभक्तियोगः अधिकृतः प्राप्त. । 'अतो युष्मद्भाग्य तु किं वक्तव्यम्' इत्याशयेन सम्बोधयति– महाभागा इति । विरहेण हेतुना स्वसर्वात्मभावप्रदर्शनेन भवतीभिर्मे मह्यमपि महाननुग्रहः कृत', तेनाहमपि कृतार्थो जात इत्यर्थः ॥ २७ ॥ हे भद्रा. कृतार्थाः' य सन्देशमादाय अहमागतोऽस्मि, स भवतीना सुखावहः प्रियस्य श्रीकृष्णस्य सन्देश श्रूयतामित्यन्वयः । 'साधारणपुरुष प्रति रहस्योक्त्यसम्भवादिदानीं तेनापि साधारणेनापि सन्देशेन किम्' इति शङ्का वारयन् आत्मान विशिनष्टि– भर्त्तू रहस्कर इति । श्रीकृष्णस्य रहस्यकार्यकर्तेत्यर्थ. ॥ २८ ॥

तत्सन्देशमेवाह—भवतीनामिति सार्धनवभिः। भवतीना मे मया सह वियोग क्वचित् कस्मिन्नपि देशे काले च नहि नास्त्येवेत्यर्थः । तत्र हेतुमाह—सर्वात्मनेति। भावप्रधानोऽय निर्देशः। मम सर्वात्मत्वेनेत्यर्थ' ॥ २९ ॥ एतदेव दृष्टान्तेन स्पष्टयति—यथेति । यथा भूतेषु चराचरेषु महाभूतानि तदाश्रयतया स्थितानि तथाऽहमपि मनआदीनामाश्रय इत्यन्वयः। भूतान्येव दर्शयति—ख आकाश., वायुश्च, अग्निश्च, जल च, मही च ॥ ३० ॥ ननु 'आकाशादीना चराचरसर्वोपादानत्वात्तदाश्रयत्व सम्भवति, तव कथ मनआद्याश्रयत्वम्' इत्याशङ्क्य स्वस्यापि तदुपादानत्वादिकमाह—आत्मन्येवेति । आत्ममायानुभावेन स्वसङ्कल्पमात्रेण आत्मन्येवाधारे आत्मनैव साधनान्तररहितेन आत्मानमेव भतादिरूपेण सृजे

॥ श्रीभगवानुवाच ॥ भवतीनां वियोगो मे न हि सर्वात्मना क्वचित् ॥ २९ ॥ ॥ ॥ ॥ ॥
यथा भूतानि भूतेषु खं वाय्वग्निर्जल मही ॥ तथाऽह च मनःप्राणभूतेन्द्रियगुणाश्रय ॥ ३० ॥
आत्मन्येवाऽऽत्मनाऽऽत्मान सृजे हन्म्यनुपालये ॥ आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ॥ ३१ ॥
आत्मा ज्ञानमय शुद्धो व्यतिरिक्तोऽगुणान्वयः ॥ सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥ ३२ ॥

सृजामि, तदनु अनन्तर पालये पालयामि, हन्मि च इत्यन्वयः। 'बुद्धीन्द्रिय' इति पाठान्तरम् ॥ ३१ ॥ ननु 'एव सर्वस्यैकात्मत्वे जीवात्मनोऽपि जाड्यादिदोषप्रसङ्ग' स्यात् तत्राह—आत्मेति। जीवात्मा तु शुद्धः। तत्र हेतु.—अगुणान्वय इति। न गुणेषु सत्त्वादिषु अन्वेतीति तथा प्राकृतगुणगत—विकारादिदोषरहित इत्यर्थ. ॥ तत्र हेतु.—व्यतिरिक्त इति। गुणकार्याद्व्यतिरिक्त इत्यर्थः ॥ तत्रापि हेतुः—ज्ञानमय इति। ज्ञानस्वरूप इत्यर्थ ॥ ननु 'जाग्रदादिनानावस्था जीवस्य प्रसिद्धैव, कुतः शुद्धता' इति चेत्तत्राह—सुषुप्तीति। मायावृत्तिभिः प्रकृतिपरिणाममनोवृत्तिभि विश्वतैजसप्राज्ञरूपेण

---

१ "भवतीनाम्। वियोग स्वाभाविक औपाधिक अज्ञातश्चेति त्रेधा भवति। आत्मना जीवानामेकत्वात्परस्पर भेदाभावेऽपि औपाधिको भेदोऽस्ति तत्रोपाधय उद्गमो वा माया वा भगवदिच्छा वा अज्ञान वेति वादान्तर जीवब्रह्मणोस्तु भेदे अज्ञानमेव हेतु सुरा वियोगे ब्रह्मणस्तु तदुभयाभावात्। न जीवै सह कथञ्चिद्भेद भगवास्त्यक्त्वागत इति हि ईर्ष्यादौ हेतु स नापि त्यजति नापि त्याग मन्यते। जीवास्तु भगवन्त त्यक्ष्याम इति वदन्तो भ्राता एव। अतोऽयमर्थो निरूपणीय । तत्र द्वेधापि प्रतिजानीते। भवतीना वियोगो मम नास्ति मम च वियोगो भवतीना नास्ति। एकत्र कृतघ्नता अपरत्र दु खं च फलति। वस्तुरूपेण वियोगाभावेऽपि एकदेशेन वृक्षकपिवियोगवत्कालभेदेन च स्त्रीपुरुषवच्च वियोग सभवति। तदुभयं निषेधति। नहि सर्वात्मनेति। क्वचिदिति काले सर्वात्मना केनाप्यशेनेति देशे एव चतुर्धा भवति । अत्र प्रयोगसाधनचतुष्टयप्रतिपादक अधर्म चरितमिति प्रतिभाति आत्मत्वात् भक्तवश्यवात् सत्यवाक्यत्वात् स्वभावत इत्येवरूप गोपिकावियोगो भगवतो नास्ति भगवानात्मेति भगवद्वियोगश्च न गोपिकाना भक्तवश्यत्वात्। कालभेदेनापि न वियोग । न पारयेऽहमिति। न ह्येतावदुक्त्वा एतावदर्थे तासामिच्छा किं न पूरयेत्। भगवतश्चाय स्वभाव यत् स्त्रीषु कृपावान् अत केनाप्यशेन ता न परित्यजति"। इति सुबोधिनी।

प्रतीयते, न स्वत इत्यर्थः । तत्र जाग्रदवस्थापन्नो विश्व , स्वप्नावस्थापन्नस्तैजसः, सुषुप्त्यवस्थापन्नः प्राज्ञः। तथाच देवोऽह मनुष्योऽह काणोऽहं बधिरोऽह सुख्यह दुःख्यह बुभुक्षितोऽहम् ' इत्यादिप्रतीतिरपि देहेन्द्रियान्तःकरणाध्यासादेव, न स्वत इति बोध्यम्॥ ३२ ॥ 'कथं तर्ह्यध्यासानिवृत्त्या कृतार्थता ' इत्याकाङ्क्षायामाह— येनेति । येन मनसा इन्द्रियार्थान् शब्दादीन् ध्यायेत चिन्तयेत् ध्यायश्च सन् इन्द्रियाणि प्रतिपद्यते, इन्द्रियाणीति देहादेरप्युपलक्षणम्, देहेन्द्रियाद्यध्यास प्राप । अतोऽध्यासनिवृत्त्यर्थं तन्मनो निरुन्ध्यात् शब्दादिविषयेभ्यो निवर्त्य वश नयेदित्यर्थ । ननु 'तत्त-द्विषयाणा तद्ग्राहकेन्द्रियान्तःकरणाना च सत्त्वे कथ मनसस्ततो निरोध. सम्भवति' इत्याशङ्क्य 'विविक्तात्मज्ञानेन तत् सम्भवति ' इति दृष्टान्तेनाह— मृषेति । विगतनिद्र स्वापादुत्थितो यथा मृषा मिथ्याभूत स्वप्न ध्यायन्नपि न तत्र सज्जते किन्तु ततो मनोरोधमेव करोति, तथा शब्दादिश्रवणा-देरिन्द्रियधर्मत्वात्तज्जन्यसुखादेरन्तःकरणधर्मत्वाच्चात्मनस्तेन प्रयोजनाभावात् प्रत्युत बन्धहेतुत्वाच्च विविक्तात्मज्ञानवान् विषयेभ्यो मनो निरुन्ध्यादित्यर्थः। ॥ ३३ ॥ ननु ' बहूनि मोक्षसाधनानि महद्भिरुपदिष्टानि, तत्कथ निरोधमात्रेण कृतार्थता इत्युच्यते' इत्याशङ्क्य 'साधनान्तराणा मनोनिरोधे एव

येनेन्द्रियार्थान् ध्यायेत मृषा स्वप्नवदुत्थित ॥ तन्निरुन्ध्यादिन्द्रियाणि विनिद्र प्रत्यपद्यत ॥ ३३ ॥
एतदन्त समाम्नायो योग साङ्ख्य मनीषिणाम्॥ त्यागस्तपो दमः सत्य समुद्रान्ता इवापगा ॥ ३४ ॥
यत्त्वह भवतीनां वै दूरे वर्ते प्रियो दृशाम् ॥ मनस' सन्निकर्षार्थ मदनुध्यानकाम्यया ॥ ३५ ॥
यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते ॥ स्त्रीणां च न तथा चेत सन्निकृष्टेऽक्षगोचरे ॥ ३६ ॥

पर्यवसानात् मनोनिरोध एव साक्षात्साधनम् ' इत्याह—एतदन्त इति। समाम्नायो वेदः वेदोक्तसाधनकलापः, योगो यमनियमाद्यष्टाङ्गः, साङ्ख्य साङ्ख्यो-क्तात्मानात्मविवेक., त्यागो दानम्, तपः अनशनादि, दमः इन्द्रियनिग्रह., सत्य यथार्थभाषणम्। समाम्नायादयः सत्यान्ता एतदन्ताः एतमनोनि-यमन अन्तः अवधिः फल येषा तथाभूता इत्यर्थः । तत्र दृष्टान्तमाह—आपगा नद्यो यथा समुद्रान्ता इति ॥ ३४ ॥ ननु ' न वय ससारविमुक्तिमात्रकामा , किन्तु सर्वसुन्दरसकलगुणगणालङ्कृतत्वत्प्राप्तिकामा एव, अतस्तदुपायोपदेश एवोचित ' इति चेत्तत्राह—यत्त्विति । यत्तु भवतीना दृशा दूरेऽह वर्ते तन्मदनुध्यानकामनया मनसः सन्निकर्षार्थमेव । 'वै' इत्यवधारणे । दूरस्थितावपि 'कथ मन.सन्निकर्षः स्यात' इत्याशङ्क्याह—प्रिय इति ॥ ३५ ॥ उक्तमेवोपपादयति—यथेति । प्रसङ्गात् स्त्रीणामित्युक्तम् । चकारादन्येषा च मनो यथा दूरचरे प्रेष्ठे आविश्य निश्चल सद्वर्तते तथा सन्निकृष्टेऽक्षगोचरे न वर्तते, सदा सन्निधानस्य अनादरकारणत्वात् ॥ ३६ ॥

‘ त्वयि मनआवेशेऽपि किम् ’ इत्यपेक्षायामाह—मय्यावेश्येति । विमुक्ता अशेषा वृत्तयो व्यापारा यस्मात् तत् । अतएव कृत्स्न सम्पूर्ण मना मय्यावश्य स्थिरीकृत्य मामेव नित्यमनुक्षण स्मरन्त्यः अचिराच्छीघ्रमेव मामुपैष्यथ प्राप्स्यथ ॥ ३७ ॥ ‘ नच मामुपैष्यथेति मधुरवचनमात्रम्, तथा जातत्वात् ’ इत्याशयेनाह—या इति । ‘ युष्माक तु मत्प्राप्तिः सुलभैव ’ इति सूचयन् सम्बोधयति—कल्याण्य इति । अस्मिन् वृन्दावने रात्र्या क्रीडता मया सह अलब्धरासा या गोप्यस्ता मद्वीर्याणा मल्लीलाना चिन्तया मामेवापुरित्यन्वय । अतो यूयमपि मच्चिन्तनेन मा प्राप्स्यथेति न सन्देहः । तासा रासालाभे हेतुमाह— व्रज आस्थिता इति । भर्त्रादिभिः प्रतिबन्धादिति भाव. ॥ ३८ ॥ एव प्रियतमस्य कृष्णस्यादिष्ट श्रुत्वा तस्य सन्देशेनागता तल्लीलाविषयिका स्मृतिर्यासा ता व्रजयोषित. प्रीता हृष्टा सत्य उद्धव प्रत्यूचु । ‘ आगतस्मृतीः ’ इति द्वितीया प्रथमार्थे ॥ ३९ ॥ तासामुक्तिमाह—दिष्ट्येति चर्तुदशभि. ।

**मय्यावेश्य मन' कृत्स्न विमुक्ताशेषवृत्ति यत् ॥ अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथ ॥ ३७ ॥**
**या मया क्रीडता रात्र्यां वनेऽस्मिन् व्रज आस्थिता ॥ अलब्धरासा कल्याण्यो माऽऽपुर्मद्वीर्यचिन्तया ॥ ३८ ॥**
**श्रीशुक उवाच ॥ एव प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ॥ ता ऊचुरुद्धव प्रीतास्तत्सन्देशागतस्मृती· ॥ ३९ ॥**
**गोप्य ऊचु· ॥ दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽघकृत् ॥ दिष्ट्याऽऽप्तैर्लब्धसर्वार्थै· कुशल्यास्तेऽच्युतोऽधुना ॥४०॥**
**कच्चिद्गदाग्रज' सौम्य करोति पुरयोषिताम् ॥ प्रीति न· स्निग्धसव्रीडहासोदारेक्षणार्चित ॥ ४१ ॥**
**कथ रतिविशेषज्ञः प्रियश्च वरयोषिताम् ॥ नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजित· ॥ ४२ ॥**

‘ दिष्ट्या ’ इति आनन्दे । यदूनामघकृत दु.खद सानुगो भ्रातृमल्लादिसहितो कसो हत एतद्दिष्ट्या, तेनास्माक महानानन्दो जात· । लब्धा अर्था धनादि—सम्पदो यैस्तैराप्तैर्वृष्णैर्वसुदेवादिभिः सह अच्युतः कृष्णोऽधुना कुशल्यास्ते एतदपि दिष्ट्या ॥ ४० ॥ ‘ त्वद्दर्शनेनास्माक महानानन्दो जात ’ इति सूचयन्त्य· सम्बोधयन्ति—सौम्येति । कच्चिदिति प्रश्ने । किंचित् पृच्छाम इत्यर्थ ॥ नोऽस्माक गदाग्रज श्रीकृष्ण पुरयोषिता स्निग्ध च तत्सव्रीडहासेनोदार मनोरथपूरक च यदीक्षण तेनार्चितः सत्कृत· सन् तासां प्रीति करोति ॥ ४१ ॥ अन्या ऊचुः—कथमिति । रतिविशेष जानानीति रतिविशेषज्ञ', अत एव च पुरयोषिता प्रियः, अत एव तासा मधुरवाक्यैर्विभ्रमैर्नानाविलासैश्चानुभाजित सत्कृत. कथ न अनुबध्येत वशवर्ती भवेदित्यन्वय· ॥ ४२ ॥

'सत्यमेव त्वया वक्तव्यम्,एतदेव तवोचितम्' इति सूचयन्ती सम्बोधयति—साधो इति। पुरस्त्रीणा गोष्ठीमध्ये सभामध्ये तत्रापि स्वैरकथान्तरे यथेष्टविहार-कथामध्ये प्रस्तुते कस्मिश्चित प्रसङ्गे क्वचिदपि नः अस्मान् गोविन्दः अपि कि स्मरति ? । ननु 'विदग्धाना पुरस्त्रीणा विलासैराकृष्टचित्तस्य तस्य कथमविदग्धाना युष्माक स्मरण स्यात्' इत्याशङ्क्य 'वैलक्षण्यस्यापि प्रतियोगिविधया स्मारकत्वात् स्मरण सम्भवति' इत्याशयेनाहुः—ग्राम्या इति । अविदग्धा अस्मानित्यर्थ॰ ॥ ४३ ॥ तदा व्रजस्थितिकाले कुमुदै॰ कुन्दैः शशाङ्केन च रम्ये वृन्दावने क्वणन्ति चरणनूपुराणि यस्या तस्या रासगोष्ठ्या राससभायामस्माभि प्रियाभिः सह यासु निशासु रेमे ता॰ कि कदाचिदनुस्मरतीत्यन्वयः । 'स स्मरतु मा वा, अस्माक तु तत्स्मरण सर्वदैव भवति' इत्यत्र हेतु सूचयन्त्यो विशिनष्टि—ईडितेति । ब्रह्मादिभि॰ कविभि॰ ईडिता स्तुता मनोज्ञा मनोहरा कथा यस्य स इत्यर्थ॰ ॥ ४४ ॥ अन्या ऊचुः—कि स्मरणप्रश्नेन ?

अपि स्मरति नः साधो गोविन्द प्रस्तुते क्वचित् ॥ गोष्ठीमध्ये पुरस्त्रीणां ग्राम्या स्वैरकथान्तरे ॥ ४३ ॥
ता॰ कि निशा॰ स्मरति यासु तदा प्रियाभिर्वृन्दावने कुमुदकुन्दशशाङ्करम्ये ॥ रेमे क्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथ कदाचित् ॥ ४४ ॥ अप्येष्यतीह[1] दाशार्हस्तप्ता॰ स्वकृतया शुचा ॥ सञ्जीवयन्नु नो गात्रै र्यथेन्द्रो वनमम्बुदैः ॥ ४५ ॥ कस्मात् कृष्ण इहायाति प्राप्तराज्यो हताहित॰ ॥ नरेन्द्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृत॰ ॥ ४६ ॥

स्वकृतया शुचा स्वनिमित्तशोकेन सन्तप्ता नोऽस्मान् गात्रैर्मुखकरप्रदर्शनस्पर्शादिभि॰ सञ्जीवयन् सम्यक् सुखपूर्वक जीवयितु दाशार्हः कृष्णः अपि कि नु इह व्रजे एष्यति आगमिष्यतीत्यन्वय॰ । तत्र दृष्टान्तमाहुः—यथेति । इन्द्रो यथा अम्बुदैर्मेघैः शुष्क वन सञ्जीवयन्नायाति तद्वत् ॥ ४५ ॥ अन्या ऊचुः—कस्मादिति । पूर्व त्वनन्यगतिकत्वेनात्र उषितवान् सोऽधुना चेन्नागतस्तर्हि इतोऽग्रे उत्तरोत्तर प्रतिबन्धकबाहुल्यात् कस्माद्धेतोः कृष्ण इह आयाति आगमिष्यति ? । प्रतिबन्धकानेव सूचयन्त्यो विशिषन्ति—प्राप्त राज्य येन स , हताः अहिताः शत्रवः कसादयो येन सः, नरेन्द्रकन्या उद्वाह्य सर्वैः सुहृद्भि॰ पितृपुत्रपौत्रादिभिर्वृत॰ प्रीतश्च भविष्यति ॥ ४६ ॥

[1] "अप्येष्यतीह । उपदेशेन वय तथा भविष्यामस्तथापि पूर्ववत्पुन कि कृपा करिष्यति इत्यभिप्रायेणाहु—अप्येष्यतीति । अन्यथा नो चेद्वयमिति वाक्य श्रुत्वा किमिति भोगमगीकृतवान् ? तस्मादुत्कट काम दूरीकृत्य कोमलजाते पश्चादुपदेशफल भविष्यतीति पुन पूर्ववदाकाक्षा तत्रगमने तु सुख न भविष्यतीति ज्ञात स्वच्छदाभावात् "। इति सुबोधिनी ॥

अन्यास्तु परमार्थमूचुः— किमिति । वनौकोभिः वनवासिनीभिरस्माभिरनिपुणाभि , अन्याभिर्विदग्धाभिः पुरवासिनीभिर्वा आप्तकामस्य पूर्णमनोरथस्य कृष्णस्य कि को वाऽर्थ' प्रयोजन क्रियेतेत्यन्वय । आप्तकामत्वे हेतुमाहुः— महात्मन इति । महान् सर्वमनोरथपूरक आत्मा अन्तःकरण यस्य तस्येत्यर्थ । सर्वमनोरथपूरकत्वे हेतुमाहुः— श्रीपतेरिति । सर्वसम्पदधिष्ठात्र्या लक्ष्म्याः पतित्वादित्यर्थः । ' पूर्णवैराग्यवत्त्वादपि तस्यान्येनानुपयोग ' इत्याशयेनाहुः— कृतात्मन इति । वशीकृतान्तःकरणस्येत्यर्थः ॥ ४७ ॥ आशाया' परम दुःखम्, नैराश्य आशाराहित्यमेव पर सौख्य परमसुखसाधनम् । हीति प्रसिद्धमेतत् । तामेव दर्शयति— स्वैरिणीति । प्रसिद्धा वेश्या पिङ्गलाख्याप्येवमेवाह । ' तर्हि सा आशा कुतो न त्यज्यते ? ' तत्राहु.— तदिति । तथा तत् आशाया. दुःखहेतुत्व जानतीनामपि नोऽस्माक कृष्णे दुरत्यया दुस्त्यजा आशा वर्तते ॥ ४८ ॥ आशाया दुस्त्यजत्वमेवोपपादयन्ति—क इति । उत्तमैः ब्रह्मादिभिः श्लोक्यते स्तूयते स उत्तमश्लोक. तस्य सविद एकान्तवार्ता सन्त्यक्तु क' प्राणी उत्सहेत न ? कोपीत्यर्थ. ।

किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मन' ॥ श्रीपतेराप्तकामस्य क्रियेतार्थ. कृतात्मन. ॥ ४७ ॥
पर सौख्य हि नैराश्य स्वैरिण्यप्याह पिङ्गला ॥ तज्जानतीनां न' कृष्णे तथाऽप्याशा दुरत्यया ॥ ४८ ॥
क उत्सहेत सन्त्यक्तुमुत्तमश्लोकसविदम् ॥ अनिच्छतोऽपि यस्य श्रीरङ्गान्न च्यवते क्वचित् ॥ ४९ ॥
सरिच्छैलवनोद्देशा गावो वेणुरवा इमे ॥ सङ्कर्षणसहायेन कृष्णेनाचरिता प्रभो ॥ ५० ॥
पुन.पुन' स्मारयन्ति नन्दगोपसुत बत ॥ श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुम ॥ ५१ ॥
गत्या ललितयोदारहासलीलावलोकनै' ॥ माध्व्या गिरा हृतधिय' कथ तद्विस्मरामहे ॥ ५२ ॥

तत्सवित्त्यागानुत्साहमेव कैमुत्यन्यायेन दृढयति— अनिच्छतोऽपि तामकामयमानस्यापि यस्याङ्गात् उदरस्थलात् श्री. लक्ष्मीः क्वचित् कदाचिदपि न च्यवते न प्रचलति ॥ ४९ ॥ किंच ' तद्विस्मृतौ तु नास्माक दुःख स्यात्, परतु सापि न सम्भवति, स्मारकाना बहुत्वात् ' इत्याहु.— सरिच्छैलेति त्रिभि. । ' तद्दासत्वेनान्यविस्मरणे समर्थोऽपि तद्विस्मरणे तु त्वमपि न समर्थ ' इति सूचयन्त्यः सम्बोधयन्ति— प्रभो इति । सरिच्छैलादयो नन्दगोपसुत पुनः पुनः स्मारयन्ति । अतस्त विष्णु कृष्ण विस्मर्तुं नैव शक्नुम इति द्वयोरन्वयः । ' बत ' इति स्वखेद सूचयन्ति । स्मारणे हेतुमाहुः—सङ्कर्षणसहायेन रामसहितेन कृष्णेन आचरिताः सेविता', अत' श्रिय सौन्दर्यसम्पदो निकेतैराश्रयैस्तस्य पदकैस्तत्तद्देशे चिह्नतया स्थितै स्मारयन्तीत्यन्वयः । सरिच्छैलादिदर्शनादीनामपि जलाहरणाद्यर्थमप्यावश्यकत्वमेवेति ध्येयम् ॥ ५० ॥ ५२ ॥ किञ्च सावधानया बुद्ध्या विचारेण परित्यज्य गतत्वात् कृतघ्नतादिदोषदर्शनेन

तद्विस्मरण भवेदपि, वय तु तस्य गत्यादिभिर्हृता आकृष्टा धीर्यासा तथाभूता', अतः कथ त विस्मरामहे विस्मराम ? । ललितया मनोहरया गत्या, उदारेण मनोरथपूरकेण हासेन, लीलया कटाक्षेण अवलोकनै., माध्व्या मधुरया गिरा वाण्या च ॥ ५२ ॥ 'भगवद्विरहज दु.ख भगवानेव निवर्तयितु शक्तः' इति निश्चित्य तमेव प्रार्थयन्ते—हे नाथ स्वामिन् ! वृजिनार्णवे दुःखसमुद्रे मग्न गोकुलवासिजन तस्मादुद्धरेत्यन्वय. । ननु 'असङ्गस्य कथ स्वामित्वम्' इत्याशङ्क्य 'लक्ष्मीपतित्व तव प्रसिद्धमेव' इत्याशयेन सम्बोधयति—हे रमानाथेति । रमापतित्वेऽपि गोकुलोद्धार' कथ सङ्गच्छते तत्राहुः—व्रजनाथेति । 'व्रजनाथत्व कथम' इत्यपेक्षायाम् 'इन्द्रसुरभिभ्या तथात्वेनाभिषेकात्' इत्याशयेन पुन' सम्बोधयति— गोविन्देति । स्वभावतोऽपि त्व भक्तदु.खहर्ता कुतोऽस्मानुपेक्षसे' इत्याशयेन पुनः सम्बोधयति— आर्तिनाशनेति ॥ ५३ ॥ एव तासा कृष्णविरहेण व्याकुलता दृष्ट्वा पुन र्भवतीना वियोगो मे नास्तीत्यादि तद्वाक्यान्युक्तवास्ततस्तै. कृष्णसन्देशैरधोक्षज श्रीकृष्ण स्वात्मानं ज्ञात्वा व्यपेत. अपगतो विरहकृतः ज्वरः सन्तापो यासा ता गोप्यो गुरुतयोद्धवमेव

हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ॥ मग्नमुद्धर गोविन्द गोकुल वृजिनार्णवे ॥ ५३ ॥

॥ श्रीशुक उवाच ॥

ततस्ता· कृष्णसन्देशैर्व्यपेतविरहज्वरा· ॥ उद्धवं पूजयाञ्चक्रुर्ज्ञात्वाऽऽत्मानमधोक्षजम् ॥ ५४ ॥
उवास कतिचिन्मासान् गोपीनां विनुदन् शुचः ॥ कृष्णलीलाकथां गायन् रमयामास गोकुलम् ॥ ५५ ॥
यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत् स उद्धव· ॥ व्रजौकसां क्षणप्रायाण्यासन् कृष्णस्य वार्तया ॥ ५६ ॥
सरिद्वनगिरिद्रोणीर्वीक्षन् कुसुमितान् द्रुमान् ॥ कृष्ण सस्मारयन् रेमे हरिदासो व्रजौकसाम् ॥ ५७ ॥
दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लवम् ॥ उद्धव· परमप्रीतस्ता नमस्यन्निद जगौ ॥ ५८ ॥

पूजयाञ्चक्रुरित्यन्वयः ॥ ५४ ॥ गोपीना शुचः शोकान् विनुदन् अपनयितु कतिचिन्मासान् स उद्धवो व्रजे उवास । 'कथदु.खापनोद कृतवान्' इत्यपेक्षायामाह— कृष्णलीलाकथा गायन् गोकुल गोकुलवासिजन रमयामास सुखयामासेति ॥ ५ ॥ स उद्धवो यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत्तावन्त्यहानि कृष्णस्य वार्तया कालाद्यनुसन्धानाभावाद्व्रजौकसा व्रजवासिजनाना क्षणप्रायाणि क्षणतुल्यानि आसन् बभूवु ॥५६ ॥ ननु 'भगवन्त परित्यज्य कथ परार्थ बहुकाल व्रजेऽवात्सीत्' इत्यपेक्षायामाह—सरिदिति । सरिदादीन् वीक्षन् विशेषत ईक्षमाणस्तेषु कृष्णलीलाप्रश्नादिभिर्व्रजौकसा कृष्ण सस्मारयन् हरिदास उद्धवो रेमे स्वयमप्यानन्दानुभव कृतवानित्यर्थ· ॥५७॥ एव प्रदर्शितप्रकार आदि यस्य तद्गोपीना कृष्णावेशेनात्मनो मनसो विक्लव व्याकुलता दृष्ट्वा परमप्रीत उद्धवस्ता गोपीर्नमस्यन् नमस्करिष्यन् उत्तमस्य स्वस्य गोपस्त्रीनमस्कृतिरयुक्ता न भवतीति दर्शयितु प्रथम तासा महत्त्वमिद वक्ष्यमाण पञ्चभिर्जगौ ॥ ५८ ॥

तद्वाक्यान्याह— एता इति षड्भिः। एता गोपवध्वः पर केवल तनुभृतः सफलजन्मान.। तत्र हेतुमाह— एवमुक्तप्रकारो गोविन्दे रूढो भावः प्रेमात्मको यासा ता इति। 'कृष्णप्रेमवत्त्वेन कथमेतासा कृतार्थत्वम्' इत्याकाङ्क्षाया 'तस्य सर्वात्मत्वेन तत्सत्कारेणैव ब्रह्मादिसकलसत्कार-सिद्धेर्नात परमन्यत् कृत्यमस्ति' इत्याशयेनाह—अखिलात्मनीति। अत एव तत्प्रेम्णो दुर्लभत्वमाह— यत् प्रेम भवात् भीः येषा ते मुमुक्षवो वाञ्छन्ति मुक्तिहेतुत्वात्, तथा वय भक्ता अपि यद्वाञ्छाम. ससारदु.खविस्मृतिपूर्वकपरमानन्दजनकत्वात्। 'तथापि जन्मना त्वेतासा निकृष्टत्व-मेव' इत्याशङ्क्याह— किमिति। अनन्तस्य अनन्तमूर्तेर्भगवतः कथासु रसो रागो यस्य तस्य प्राणिनो ब्रह्मजन्मभि. ब्राह्मणसम्बन्धिभि' शौक्र-सावित्रयाज्ञिकैस्त्रिविधैरपि जन्मभि यद्वा चतुर्मुखजन्मभिरपि कि कोऽतिशयः? यत्रतत्रापि जातो भगवद्भक्तिमानेव सर्वोत्तम इत्यर्थः ॥ ५९ ॥ गोपीना

एतां पर तनुभृतो भुवि गोपवध्वो गोविन्द एव निखिलात्मनि रूढभावा ॥
वाञ्छन्ति यद्भवभियो मुनयो वय च कि ब्रह्मजन्मभिरनन्तकथारसस्य ॥ ५९ ॥
केमा स्त्रियो वनचरीर्व्यभिचारदुष्टा कृष्णे क्व चैष परमात्मनि रूढभाव· ॥
नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्त ॥ ६० ॥
नाय श्रियोऽङ्ग उ नितान्तरते· प्रसाद· स्वर्योषितां नलिनगन्धरुचां कुतोऽन्या· ॥
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद्व्रजसुन्दरीणाम् ॥ ६१ ॥

प्रेमातिशय दृष्ट्वा स्वयमाश्चर्य करोति—केति। स्त्रियो जन्मतो दुष्टा., वनचरी. वनचर्यः स्थानतोऽपि दुष्टाः सत्सङ्गरहिताश्च, व्यभिचारो नाम कामसङ्कल्प-स्तेनापि लोकदृष्ट्या शास्त्रदृष्ट्या च दुष्टा. इमा गोप्य क्व? एषोऽतिदुर्लभ. परमात्मनि कृष्णे रूढभाव. निश्चलस्नेहश्च क्व? असम्भावित एवे-त्यर्थः। 'आसा स कथ जात' इत्यपेक्षाया 'प्रकारान्तरेणासम्भवाद्भगवदनुग्रहादेव' इति निश्चिनोति— नन्विति निश्चये। ईश्वरः सर्व कर्तु समर्थ. अनु निरन्तर भजतो जनस्य अविदुषः स्वप्रभावमजानतोऽपि साक्षात् स्वयमेव श्रेयः फल तनोति विस्तरतो ददात्येवेत्यर्थः। अविदुषोऽपि फल-सम्पादने दृष्टान्तमाह— अगदेति। अगदराज ओषधिश्रेष्ठ. अमृत उपयुक्त. उपभुक्तः स्वप्रभावमजानतोऽपि यथा आरोग्य तनोति तद्वदित्यर्थ·। ॥ ६० ॥ 'अन्येऽपि भक्ता भगवत्प्रसाद लेभिरे, परन्त्वय गोपीपु भगवत्प्रसादस्तु अत्यपूर्व' इत्याह— नायमिति। रासोत्सवे रासक्रीडायामस्य कृष्णस्य

१ "केमा स्त्रियो वनचरीति। अत पर पुरुषेभ्याप्युत्कर्षमाह कृष्ण इति। सन्ति नारदब्रह्मादयो भक्ता भगवति भाववन्त, तथाप्येष भाव क तेषु वर्तत इत्यर्थ। चकाराद्वा व्यभि-चारदोपराहिताया लक्ष्म्यामपि नाय भाव। एष हि स्वानुभव उक्त। तेनान्यत्रैतत्सजातीयभावश्रवणस्याप्यभावात्कथमन्यत्रैषाऽप्यस्तीति मन्तव्यमिति भाव। अथवा बर्हापीडेति श्लोके गोपिकानामेवरूपस्तदर्थमेव कोटिकन्दर्पलावण्य प्रकटीकृत्य तद्भोग्यत्वेन तदर्थं प्रकट इति भाव" इति सुबोधिनी। २ व्रजबल्लवीनामिति क्वचित्पाठ।

भुजदण्डाभ्या गृहीत आलिङ्गितः कण्ठस्तेन लब्धा आशिषो मनोरथा याभिस्तासा व्रजसुन्दरीणा गोपीना योऽय भगवत्प्रसाद. उदगात् आविर्बभूव सोऽय प्रसाद. स्वर्योषिता नाभूत् । तासा प्रसादयोग्यताया सौन्दर्याद्यतिशये हेतु सूचयति— नलिनस्येव गन्धः, रुक् कान्तिश्च यासा तासामिति । कि बहु वक्तव्यम् ? अङ्गे वक्षसि नितान्तरतेः एकान्तरातिमत्याः श्रियो लक्ष्म्या अप्यय प्रसादो नाभूत्, अन्या. स्त्रियस्तु कुत एव प्रसादविषयाः स्युरित्यन्वय. । 'आश्चर्य भगवदिच्छाया' इत्याह— उ इति ॥ ६१ ॥ तासा भाग्यातिशय मत्वा स्वयोग्य प्रार्थयते— आसामिति । आसां गोपीना चरणरेणुजुषा गुल्मलतौषधीनां मध्येऽह किमपि वृन्दावने स्या भवेयम् । 'एतदपि यदि मम स्यात्तदा दुर्लभत्वादाश्चर्यमेव' इत्याह— अहो इति । ननु 'कथमासा चरणरेणुर्दुर्लभ' इत्यपेक्षाया ता विशिनष्टि— या इति । या गोप्यः दुस्त्यजं स्वजन पतिपुत्रादिरूपमार्याणा पन्थान च हित्वा श्रुतिभिर्विमृग्यामतिदुर्लभा मुकुन्दस्य मुक्तिप्रदस्य श्रीकृष्णस्य पदवीं प्राप्तिमार्ग भेजु' कृष्णैकचिन्तनपरा बभूवुरित्यर्थः । अनेन लौकिकालौकिक-

आसामहो चरणरेणुजुषामह स्यां वृन्दावने किमपि गुल्मलतौषधीनाम् ॥ या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ ६२ ॥ या वै श्रियाऽर्चितमजादिभिराप्तकामैर्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ॥ कृष्णस्य तद्भगवतश्चरणारविन्द न्यस्त स्तनेषु विजहु' परिरभ्य तापम् ॥ ६३ ॥ वन्दे नन्दव्रजस्त्रीणा पादरेणुमभीक्ष्णश· ॥ यासां हरिकथोद्गीत पुनाति भुवनत्रयम् ॥ ६४ ॥

॥ श्रीशुक उवाच ॥

अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च ॥ गोपानामन्त्र्य दाशार्हो यास्यन्नारुरुहे रथम् ॥ ६५ ॥

सर्वव्यवहारपरित्यागेन "यदा यस्यानुगृह्णाति भगवानात्मभावितः । स जहाति मति लोके वेदे च परिनिष्ठिताम्" इत्युक्तपूर्वो भगवदनुग्रहस्तासु दर्शित' ॥ ६२ ॥ पुनश्चाश्चर्येण तासु भगवदनुग्रहमेव दर्शयति— या इति । 'वै' इति निश्चये । नात्र कश्चित् सन्देहः । भगवत ऐश्वर्यादिगुणपूर्णस्य कृष्णस्य श्रिया लक्ष्म्याऽर्चित पूजित, तथा आप्तकामैः प्राप्तैश्वर्यैरजादिभिश्चतुर्मुखादिभिरपि पूजित, तथा योगेश्वरैः सिद्धैरप्यात्मनि मनसि चिन्तित यच्चरणारविन्द तत्तेनैव रासगोष्ठ्या स्तनेषु न्यस्त या गोप्य' परिरभ्य आलिङ्ग्य कामसन्ताप विजहुः परितत्यजुः ॥ ६३ ॥ एव गोपीना नमस्कारयोग्यता प्रतिपाद्य नमस्करोति— वन्दे इति । यासा हरिकथया सहोत्कर्षेण गीत चरित भुवनत्रय भूरादिलोकत्रयस्थान् श्रवणकीर्तनादिपरान् जनान् पुनाति, तासा नन्दव्रजस्त्रीणा पादरेणुमहमभीक्ष्णशः पुनःपुनर्वन्दे इति त्रयाणामन्वयः ॥ ६४ ॥ अथ गोपीना विरहतापनिवृत्त्यनन्तर दाशार्ह उद्धवो गोप्यादीननुज्ञाप्य अनुज्ञा सम्प्रार्थ्य गोपाश्चामन्त्र्य पृष्ट्वा यास्यन् मथुरा गन्तु रथमारुरुहे ॥ ६५ ॥

नानाविधानि उपायनानि रामकृष्णाद्यर्हाणि वस्तूनि पाणिषु येषा ते तथा अनुरागेण अश्रूणि लोचनयोर्येषा ते नन्दादयो गोपा निर्गत व्रजान्निष्क्रान्त तमुद्धव समासाद्य सादरमागत्य प्रावोचन्नित्यन्वयः ॥ ६६ ॥ तदुक्तिमेवाह—मनस इति द्वयेन । उपदेष्टृत्वादुद्धवमेव गुरु मत्वा प्रार्थयन्ति— नोऽस्माक मनसो वृत्तयः कृष्णपादाम्बुजविषयाः स्यु॰ । वाचस्तु तन्नाम्नामभिधायिन्यः स्युः । कायो देहस्तु तन्नम स्कारादिष्वस्तु ॥ ६७ ॥ कर्मभि॰ पुण्यपापात्मकैस्तदनुगुण्या ईश्वरेच्छया च यत्र क्कापि भ्राम्यमाणाना देवमनुष्यादिषु जायमानाना नोऽस्माक मङ्गलाचरितैर्दानैस्तज्जनितैः पुण्यैरीश्वरे कृष्णे रतिरनुरागोऽस्त्वित्यन्वय॰ ॥ ६८ ॥ हे नराधिप[1] एव कृष्णभक्त्या गोपैः सभाजितः सम्पूजितः ‘ सम्प्रार्थित ’ इति तु पाठान्तरम्,

तं निर्गतं समासाद्य नानोपायनपाणय ॥ नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचना ॥ ६६ ॥
मनसो वृत्तयो न स्यु॰ कृष्णपादाम्बुजाश्रया ॥ वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ॥ ६७ ॥
कर्मभिर्भ्राम्यमाणानां यत्र क्कापीश्वरेच्छया ॥ मङ्गालाचरितैर्दाने रतिर्न॰ कृष्ण ईश्वरे ॥ ६८ ॥
एव संभाजितो गोपैः कृष्णभक्त्या नराधिप ॥ उद्धव पुनरागच्छत् मथुरां कृष्णपालिताम् ॥ ६९ ॥
कृष्णाय प्रणिपत्याऽऽह भक्त्युद्रेक व्रजौकसाम् ॥ वसुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥ ७० ॥
इति श्रीमद्भा॰ महा॰ द॰ राजसनिरोधनिरू॰ भ्रमरगीतानिरूपण नाम सप्तचत्वारिंशोऽध्याय॰ ॥ ४७ ॥

उद्धवः पुनर्मथुरामागच्छदित्यन्वयः । ननु ‘ कृष्णविहारस्थल व्रज विहाय कुतो मथुरामागत ’ इत्याशङ्क्य ‘ भगवतो मथुराया वर्तमानत्वात्तत्र गमनं तद्दासस्योचितमेव ’ इत्याशयेनाह— कृष्णपालितामिति ॥ ६९ ॥ ततश्च कृष्णादिभ्यः प्रणिपत्य यथोचित व्रजौकसा भक्त्युद्रेकमाह, नन्दादिभिर्दत्तान्युपायनानि चादात् ॥ ७० ॥ इति श्रीवल्लभाचार्य—वश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने ॥ सप्तचत्वारिंशकोगाद्भृङ्गगीतनिरूपकः ॥ ३ ॥ ॥ छ ॥ छ ॥

[1] ‘ सप्रार्थित ’ इति क्वचित् पाठो दृश्यते ।

अष्टचत्वारिंशके हि कुब्जया रमण हरेः ॥ अक्रूरसान्त्वन चापि विशेषेण निरूप्यते ॥ १ ॥ अथ नन्दादिव्रजवासिजनसान्त्वनानन्तर भगवान् कृष्णः कामतप्तायाः सैरन्ध्या कुब्जायाः कामसन्ताप विज्ञाय कामपूर्त्या तस्याः प्रिय सुखमिच्छन् तस्या गृह ययौ । सन्तापज्ञाने हेतुमाह— सर्वदर्शन इति । सर्वसाक्षीत्यर्थः ॥ एव परस्त्रीकामपूरणे दोषमाशङ्क्याह— सर्वात्मेति ॥ १ ॥ तदा भगवदिच्छया जाता तद्गृहसम्पत्तिमाह— महार्हेति सार्धेन । महार्हैरमूल्यैरुपस्करैः पात्रादिभिराढ्यमन्वितम् । कामोपायैः कामशास्त्रोक्तैः कामोद्दीपकैः सुरतबन्धादिलेख्यैरुपबृहित समृद्धम् । मुक्तादामभिः, पताकाभिर्ध्वजैः, वितानैश्चन्द्रातपत्रैः, शयनैः शय्याभिः, आसनैरुपवेशनार्थं सुखस्पर्शास्तरणैः, सुरभिभिरगरुसम्भवैर्धूपैः, दीपैश्च, मणिमयैः स्रग्भिः, गन्धैश्चन्दनादिभिश्च मण्डितमलङ्कृतम् ॥ २ ॥ एवविध गृह प्रति आयान्त त कृष्णमवेक्ष्य जात सम्भ्रमो यस्याः सा सैरन्ध्री सद्यस्तत्क्षण एव आसनात्

श्रीशुक उवाच ॥ अथ विज्ञाय भगवान् सर्वात्मा सर्वदर्शन ॥ सैरन्ध्याः कामतप्तायाः प्रियमिच्छन् गृह ययौ ॥ १ ॥
महार्होपस्करैराढ्य कामोपायोपबृंहितम् ॥ मुक्तादामपताकाभिर्वितानशयनासनैः ॥ धूपैः सुरभिभिर्दीपैः स्रग्गन्धैरपि मण्डितम् ॥ २ ॥ गृह तमायान्तमवेक्ष्य साऽऽसनात्सद्यः समुत्थाय हि जातसम्भ्रमा ॥ यथोपसङ्गम्य सखीभिरच्युत सभाजयामास सदासनादिभिः ॥ ३ ॥ तथोद्धव साधुतयाऽभिपूजितो न्यषीददुर्व्यामभिमृश्य चासनम् ॥ कृष्णोऽपि नूत्नं शयनं महाधनं विवेश लोकाचरितान्यनुव्रत ॥ ४ ॥ सा मज्जनालेपदुकूलभूषणस्रग्गन्धताम्बूलसुधासवादिभिः ॥ प्रसाधितात्मोपससार माधव सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥ ५ ॥

समुत्थाय सखीभिः सह यथा यथोचित उप सङ्गम्य अभिमुखमागत्य समीचीनैरासनादिभिः आदिशब्दादर्घ्यादिभिश्च सभाजयामास पूजयामासेत्यन्वयः । 'युक्त चैवकरणम्' इति सूचयति— हीति ॥ ३ ॥ तथोद्धवश्च साधु सम्यक् यथा भवति तथा तया सैरन्ध्याभिपूजितस्तत्र भगवता साम्यस्यानुचितत्व मत्वा तया दत्तमासन हस्तेनाभिमृश्य सस्पृश्य उर्व्यामेव न्यषीदत् उपविवेशेत्यन्वयः । कृष्णोऽपि नूत्न नवीन कैश्चिदप्यनधिरूढ महाधन अनर्घ्य शयन पर्यङ्क विवेश । ननु 'परमेश्वरस्य कथमेव कामिवत् परस्त्रीशयनारोहण घटते' इत्याशङ्क्याह—भक्तमनोरथपूर्त्यर्थ लोकाना चरितानि चेष्टितान्यनुव्रतः अनुसरन्नित्यर्थः ॥ ४ ॥ मज्जनादिभिः प्रसाधित भगवता सह रमणयोग्यतामापादितः आत्मा देहो यया तथाभूता सती सव्रीड लीलया उद्गत स्मित येषु विभ्रमेषु तद्युक्तैरीक्षितैरवलोकनैरुपलक्षिता सा कुब्जा माधवमुपससार उपजगाम ॥ ५ ॥

नवसङ्गमे विषये या ह्रीर्लज्जा तया शङ्किता स्वयमागमनमकुर्वतीं ता कान्ता सुन्दरीमाहूय कङ्कणेन भूषिते हस्ते प्रगृह्य शय्यामधिवेश्य तया रामया स्त्रिया सह भगवान् रेमे इत्याशय'। 'अहो भवगत्सेवामाहात्म्य येन चन्दनार्पणमात्रेण कसदास्यपि तेन सह विजहार, तदन्यभक्ताना सुख तु कि वक्तव्यम्' इत्याशयेनाह— अनुलेपार्पणमेव पुण्यलेशो यस्यास्तयेति ॥ ६ ॥ सा अनन्तस्य अनन्तशक्ते कृष्णस्य चरण जिघ्रन्ती अनङ्गेन कामेन तप्तेषु कुचादिषु तच्चरण निधाय तेन चरणेन कुचादीना रुजः कामपीडा मृजन्ती अपनयन्ती स्तनान्तरगतं कुचमध्यगत कान्त प्रियतम कृष्ण दोर्भ्यां भुजाभ्या परिरभ्य आलिङ्ग्य दीर्घं बहुकालानुवृत्त कामसन्तापमजहात् तत्याज। आलिङ्गनमात्रेण सन्तापनिवृत्तौ हेतु सूचयन् विशिनष्टि— आनन्दमूर्तिमिति ॥ ७ ॥ सा सैरन्ध्री एवमङ्गरागार्पणमात्रेण दुष्प्राप्यमपि त श्रीकृष्ण प्राप्येद वक्ष्यमाणमयाचतेत्यन्वय.। केवल कामभोगपरैव सा,

आहूय कान्तां नवसङ्गमह्रिया विशङ्कितां कङ्कणभूषिते करे॥ प्रगृह्य शय्यामधिवेश्य रामयो रेमेऽनुले-
पार्पणपुण्यलेशया ॥ ६ ॥ साऽनङ्गतप्तकुचयोरुरसस्तथाऽक्ष्णोर्जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती ॥
दोर्भ्यां स्तनान्तरगत परिरभ्य कान्तमानन्दमूर्तिमजहादतिदीर्घतापम् ॥ ७ ॥ [1]सैव कैवल्यनाथ त
प्राप्य दुष्प्रापमीश्वरम् ॥ अङ्गरागार्पणेनाहो दुर्भगेदमयाचत ॥ ८ ॥ आहोष्यतामिह प्रेष्ठ दिनानि
कतिचिन्मया ॥ रमस्व नोत्सहे त्यक्तु सङ्गं तेऽम्बुरुहेक्षण ॥ ९ ॥ तस्यै कामवर दत्त्वा मानयित्वा च
मानदः ॥ सहोद्धवेन सर्वेश स्वधामागमदर्चितम् ॥ १० ॥

न गोप्य इव तदेकनिष्ठेति ता निन्दति— दुर्भगेति। 'निष्कामाणा मोक्षप्रदत्वात्तदेकनिष्ठात्वमेव युक्तम्' इति सूचयन् दुष्प्राप्यत्वे हेतुमाह— कैवल्यनाथमिति। तत्रापि हेतुमाह—ईश्वरमिति। तन्मायामोहस्याश्चर्य द्योतयति— अहो इति ॥ ८ ॥ तद्याचनमेवाह— आहेति। तत्सङ्गत्यागानुसाहे प्रेमातिशय हेतुं वदन्ती सम्बोधयति— प्रेष्ठेति। प्रेष्ठत्वे सौन्दर्यातिशय हेतु सूचयन्ती सम्बोधयति—अम्बुरुहेक्षणेति। ते तव सङ्गमह त्यक्तु नोत्सहे न प्रभवामि, अतो मया सह कतिचिद्दिनानि रमस्व इह मद्गृहे त्वया उष्यतामित्याहेत्यन्वय ॥ ९ ॥ एव याचितो मानदो भक्तसम्माननाचरणशीलः कृष्णस्तस्यै याचमानायै सैरन्ध्र्यै कामवर दत्त्वा तथास्त्वित्युक्त्वा मानयित्वा च किञ्चिद्दिननिवासेन मधुरभाषणभूषणदानरमणादिभिस्तन्मनोरथ पूरयित्वोद्धवेन सह अर्चित सर्वसम्पत्समृद्ध स्वधाम आगमत्। सर्वमनोरथपूरणसामर्थ्ये हेतुमाह— सर्वेश इति ॥ १० ॥

---

१ "सैवम्। एवमनुलेपार्पणफलमुक्त्वा फलानुभावार्थं या सेवा कृता रतिरुत्पादिता तस्या फल वक्तव्यमिति तन्निरूपयति—सैवमिति त्रिभि। इदं हि पूर्वत्वादुत्कृष्टमिति परत्वेन पर्यव सितम्। तथा सति न फले काचिन्मर्यादा इयदेवेति तथापि भाग्यमेवाल्पमिति बुद्धिस्ताद्दश्येवेति अल्पमेव याचितवतीति शुकस्ता निन्दति— दुर्भगेदमयाचतेति। दातरि समर्थे प्रसन्नेऽपि अल्पयाचन भाग्याभावादेव भवति" इति सुबोधिनी ॥

न केवल सैव दुर्भगा, किन्तु अन्योऽपि य. कश्चित् दुराराध्य भक्तिप्रतिपात्त्व्यतिरिक्तोपायसहस्रैरप्याराधयितुमशक्य विष्णु सम्यग्भक्त्या आराध्य मनोग्राह्य मनःप्रिय विषयसुख वृणीते सोऽसौ कुमनीषी कुबुद्धिरेवेत्यन्वयः। मनोग्राह्यस्य विषयस्य वरणायोग्यत्वे हेतुमाह— असत्त्वादिति। तुच्छत्वाद्दुःखहेतुत्वाच्च सर्वेश्वरा ब्रह्मरुद्रकालकर्मादयस्तेषामपीश्वरो नियन्ता भगवान्, "अतस्तत' कालाद्यतिक्रमणेन विमोक्ष एव प्रार्थनीयः, न विषयभोग" इति सूचयन्नाह— सर्वेश्वरेश्वरमिति ॥ ११ ॥ प्रकरणान्तरमारभते— अक्रूरेति। किञ्चिच्चिकीर्षयन् हस्तिनापुरप्रस्थान कारयितुमिच्छन्नक्रूरस्य प्रियकाम्यया प्रिय कर्तुमिच्छया च रामोद्धवाभ्या सहितो भगवान् कृष्णः अक्रूरभवन प्रति प्रागादित्यन्वयः। 'कुतः पाण्डवाक्रूरादीना प्रिय चिकीर्षति' इत्यपेक्षायामाह— प्रभुरिति। स्वामीत्यर्थ. ॥ १२ ॥ तान् नरवरेभ्यः श्रेष्ठान् स्वबान्धवान् रामकृष्णोद्धवान् आराद्दूरादेव वीक्ष्य प्रमुदितः सोऽक्रूर' प्रत्युत्थाय

दुराराध्य समाराध्य विष्णु सर्वेश्वरेश्वरम् ॥ यो वृणीते मनोग्राह्यमसत्त्वात् कुमनीष्यसौ ॥ ११ ॥
अक्रूरभवन कृष्ण. सहरामोद्धवः प्रभु' ॥ किञ्चिच्चिकीर्षयन् प्रागादक्रूरप्रियकाम्यया ॥ १२ ॥
स तान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबान्धवान् ॥ प्रत्युत्थाय प्रमुदितः परिष्वज्याभिनन्द्य च ॥ १३ ॥
ननाम कृष्णं राम च स तैरप्यभिवादितः ॥ पूजयामास विधिवत् कृतासनपरिग्रहान् ॥ १४ ॥
पादावनेजनीरापो धारयन् शिरसा नृप ॥ अर्हणेनाम्बरैर्दिव्यैर्गन्धस्रग्भूषणोत्तमैः ॥ १५ ॥
अर्चित्वा शिरसाऽऽनम्य पादावङ्क गतौ मृजन् ॥ प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत ॥ १६ ॥

परिष्वज्य तदागमनमभिनन्द्य च ॥ १३ ॥ राम कृष्ण च ननामेति द्वयोरन्वयः। ततश्च तै रामकृष्णादिभिरभिवादितो वाचा कृतप्रणामः सोऽक्रूर कृत. आसनस्य परिग्रह. स्वीकारो यैस्तान् रामादीन् विधिवत् पूजयामासेत्यन्वय. ॥ १४ ॥ पूजादिप्रकारमेवाह— पादावनेजनीरिति। 'भक्तिमार्गरसज्ञस्त्वम्' इति सूचयन् सम्बोधयति— नृपेति। आ अप इति च्छेदः। पादाववनिज्येते प्रक्षाल्येते याभिस्ता अपः आ सर्वतः शिरसा धारयन् अर्हणेन अर्घ्यादिना अम्बरादिभिश्चार्चित्वा शिरसा आनम्य अङ्कगतौ उत्सङ्गे निधापितौ पादौ मृजन् सम्मर्दयन् प्रश्रयेणावनतः अक्रूरः कृष्णरामौ अभाषतेति द्वयोरन्वयः ॥ १५ ॥ १६ ॥

तद्भाषितमेवाह—दिष्ट्येति । भवद्भ्या सानुगो मल्लादिसहितः पापात्मा कसो हतः । वा युवयोरिद कुल दुरन्तादपारात् कृच्छ्रात् दुःखादुद्धृत समेधितं सम्यग्वर्धित चेति दिष्ट्या, तेन महानानन्दो जात इत्यर्थः ॥ १७ ॥ ननु 'एव कष्टादुद्धारे सवर्धने च मम कि सामर्थ्यम्' इत्यत आह—युवामिति । युवा जगतो हेतू । 'हेतुत्वमपि न निमित्तत्वमात्रं, किन्तु उपादानत्वमपि' इत्यभिप्रेत्याह— जगन्मयाविति । तत्र हेतुमाह—प्रधानपुरुषाविति । पुरुषोत्तमावा-त्यर्थः । जगन्मयत्वमेव स्पष्टयति— पर कारण अपर कार्य च भवद्भ्या विना व्यतिरिक्त किञ्चिदपि नास्तीति ॥ १८ ॥ ननु 'प्रत्यक्षादिसिद्ध कार्यकारणभेदः कथ नास्तीत्युच्यते?' तत्राह— आत्मसृष्टमिति । 'ब्रह्मवादश्रुतिप्रसिद्धोऽयमर्थ इति सूचयन् सम्बोधयति—ब्रह्मन्निति । रजआदिभिः

दिष्ट्या पापो हत· कस· सानुगो वामिद कुलम् ॥ भवद्भ्यामुद्धृत कृच्छ्राद्दुरन्ताच्च समेधितम् ॥ १७ ॥ युवां प्रधान-पुरुषौ जगद्धेतू जगन्मयौ ॥ भवद्भ्यां न विना किञ्चित् परमस्ति न चापरम् ॥ १८ ॥ आत्मसृष्टमिद विश्वमन्वाविश्य स्वशक्तिभि· ॥ ईयते बहुधा ब्रह्मन् श्रुतप्रत्यक्षगोचरम् ॥ १९ ॥ यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भान्ति नाना ॥ एव भवान् केवल आत्मयोनिष्वात्माऽऽत्मतन्त्रो बहुधा विभाति ॥ २० ॥ सृजस्यथो लुम्पसि पासि विश्व रजस्तम·सत्त्वगुणै· स्वशक्तिभिः ॥ न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बन्धहेतु· ॥ २१ ॥

स्वशक्तिभिरात्मनैव सृष्टमिद विश्वमन्वाविश्य उपादानत्वात्तद्रूपोऽप्यन्तर्यामितया प्रविश्य श्रुतप्रत्यक्षगोचर यथा भवति तथा बहुधा भवानेव ईयते प्रतीयते इत्यन्वयः ॥ १९ ॥ एकस्यैवात्मनो बहुधा भान दृष्टान्तेनोपपादयति— यथा हीति । हीति प्रसिद्धमेतत् । योनिषु स्वकारणकेषु चराचरेषु यथा मह्यादीनि कारणान्येव नाना तत्तद्रूपेण भान्ति एव केवलमेक एव भवान् आत्मयोनिषु स्वकारणकेषु भूतभौतिकेषु कार्यमात्रेषु बहुधा तत्तद्रूपेण भाति । ननु 'पुरुषोत्तमस्य तत्स्वरूपग्रहणे को हेतुः?' इत्यपेक्षायामाह—आत्मतन्त्र इति । कालकर्मादिपारतन्त्र्यरहितोऽपि स्वेच्छया लीलार्थं नानारूपो भवतीत्यर्थ· ॥ २० ॥ एवमुपादानत्वमुक्त्वा तस्यैव निमित्तत्व वदस्ततो जीववद्बन्धमाशङ्क्य निराकरोति— स्वशक्तिरूपै रजआदिगुणै.

१ "सृजस्यथो । ज्ञानात्मन इति ज्ञानेनापि बन्धाभाव इति सर्वशास्त्राणि भवास्तु ज्ञानस्याप्यात्मा त्वत्सामर्थ्यादेव ज्ञान तथा करोतीत्यथात्मपदेन सूचितम् । अतए व बन्धहेतुना निराकृत-त्वात्ते सर्वसमर्थस्य को वा बन्धहेतुर्भवतीत्याह—क्व चेति । चकाराद्देशे काले अवस्थाया च" इति सुबोधिनी ।

विश्व सृजसि, अथ अनन्तर पासि, लुम्पसि सहरासि च, तथापि तै रजआदिगुणै' सृष्ट्यादिकर्मभिर्वा न बध्यसे । तत्र हेतुमाह—ज्ञानात्मनस्ते क्व च बन्धहेतुरिति । कस्मिन्नपि देशे कस्मिन्नपि काले कस्यामप्यवस्थाया तव बन्धकारण नास्ति, ज्ञानस्वरूपत्वात् । मायायास्तु स्वाश्रयानावरकत्वात् ॥ जीवस्य तु त्वदिच्छया बन्धो भवतीत्याशयः ॥ २१ ॥ ननु 'जीववद्देहादिदर्शनात् द्विधाग्रहणादिबन्धमोक्षोपायदर्शनाच्च कुतो न बन्धादि' इत्याशङ्क्याह—देहाद्युपाधेरिति । आदिपदेनेन्द्रियान्त.करणप्राणादिग्रहणम् । देहादेरनिरूपितत्वात् प्राकृतत्वेन निरूपयितुमशक्यत्वात् साक्षादानन्दस्वरूपस्य आत्मनस्तव भवो जन्म नास्ति, तथा देहादिप्रयुक्ताभिदा भेदोऽपि नास्ति, अतो बन्धोऽपि नास्ति, मोक्षोऽपि नास्ति। 'तर्हि कथ मयि केषाचिद्बन्धमोक्षादिव्यवहार' इत्यपेक्षायामाह—निकाम इति । स्वाभिप्रायानुरूपस्त्वयि त्वद्विषयको नोऽस्माकमविवेक एव तथाव्यवहारहेतुरित्यर्थः ॥ २२ ॥ ननु

देहाद्युपाधेरनिरूपितत्वाद्भवो न साक्षान्न भिदाऽऽत्मन स्यात् ॥ अतो न बन्धस्तव नैव मोक्ष स्यातां निकामस्त्वयि नोऽविवेक ॥ २२ ॥ त्वयोदितोऽय जगतो हिताय यदा यदा वेदपथः पुराण ॥ बाध्येत पाखण्डपथैरसद्भिस्तदा भवान् सत्त्वगुण बिभर्ति ॥ २३ ॥ स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्ण स्वांशेन भारमपनेतुमिहासि भूमे' ॥ अक्षौहिणीशतवधेन सुरेतरांशराज्ञाममुष्ये च कुलस्य यशो वितन्वन् ॥ २४ ॥ अद्येश नो वसतय' खलु भूरिभागा य सर्वदेवपितृभूतनृवेदमूर्ति ॥ यत्पादशौचसलिलं त्रिजगत् पुनाति स त्वं जगद्गुरुरधोक्षज या प्रविष्टः ॥ २५ ॥

'एवभूतस्य पुरुषोत्तमस्य ममावतारे कि प्रयोजनम्' इत्यपेक्षायामाह—त्वयेति । जगत' प्राणिमात्रस्य हिताय त्वयोदितो योऽय पुराणः चिरतनो वेदपथः वेदबोधितो धर्ममार्गः स यदा यदा असद्भिः नरकादिदुःखहेतुभूतैर्पाखण्डपथैर्वेदविरुद्धमार्गैर्बाध्येत पीड्येत तदा तदा भवान् सत्त्वगुण शुद्धसत्त्वमय विग्रह बिभर्तीत्यर्थः ॥ २३ ॥ एव सर्वावतारसाधारणप्रयोजनमुक्त्वा श्रीकृष्णावतारप्रयोजनमाह—सत्त्वमिति । हे प्रभो दुष्टसहारे सता पालने च समर्थ ! स विश्वपालनादिकर्ता त्व सुरेतराणामसुराणामशभूता ये राजानः कसादयस्तेषामक्षौहिणीना यानि शतानि तेषा वधेन हेतुना भूमेर्भारमपनेतु निराकर्तु तथा अमुष्य यादवकुलस्य यशो विनन्वन् विस्तारयितु चेह भूलोके वसुदेवगृहे स्वाशेन बलभद्रेण सहावतीर्णोऽसीत्यन्वयः ॥ २४ ॥ एवं भगवन्त स्तुत्वा तदागमनेनात्मनः स्वानुबन्धिना च कृतार्थतामाविष्करोति—अद्येति । हे ईश ! अद्य नोऽस्माक सर्वेषा वसतयो गृहाः खलु निश्चयेन

भूरिभागाः महापुण्याः । 'वसतय' इति तत्रत्याना प्राणिनामप्युपलक्षणम् । तत्र हेतु वदन् भगवन्त वसतीश्च विशिनष्टि— हे अधोक्षज अतीन्द्रिय ' सर्वे देवाः ब्रह्मरुद्रेन्द्रादयश्च पितरश्च भूतानि च नृदेवा राजानश्च मूर्तयो यस्य स , यस्य च तव पादयोः शौचसलिलं क्षालनोदक गङ्गारूप त्रिजगत् त्रिलोकीं पुनाति स जगता गुरुः पूज्यस्त्वं या वसती प्रविष्ट इत्यन्वयः ॥ २५ ॥ 'आयास्ये भवतो गेहम्' इति यद्भगवतोक्त तत्सत्य कृतमिति परितुष्यन् 'त्वमेव शरणयोग्यः, नान्य' इति आह—क इति । पण्डितो विवेकी चेत्त्वत्तः अपर शरण कः समीयात् व्रजेत् । भगवतः शरणयोग्यताया हेतून् वदन् विशिनष्टि— भक्ता. प्रियाः यस्य तस्मात्, ऋता सत्या गीर्यस्य तस्मात्, सुहृदो हितकारिणः, कृतज्ञात् कृत भक्तकृत भजन दुष्टकृत द्रोह वा जानाति स्मरतीति तथा तस्मात्, किञ्च सुहृदः शुद्धान्तःकरणस्य भजतो भक्तस्य सर्वानभिकामान् वाञ्छितान् धर्मादीन् ददाति । किं बहुना ? आत्मानमपि तदधीन करोति ॥ ननु 'एव पराधीनतायामपकर्षः स्यात्' इत्याशङ्क्याह— यस्य तवउपचयापचयौ उत्कर्षापकर्षौ न स्त इति ॥ २६ ॥ तद्दर्शनमभिनन्दति—दिष्ट्येति । हे जनार्दन मायानिवर्तक ' योगेश्वरैः सनकादिभिः सुरेशैरिन्द्रादिभिरपि दुरापा दुर्लभा दुर्ज्ञेया वा

> क॰ पण्डितस्त्वदपर शरणं समीयाद्भक्तप्रियादृतगिर सुहृद॰ कृतज्ञात् ॥ सर्वान् ददाति सुहृदो भजतोऽभिकामानात्मानमप्युपचयापचयौ न यस्य ॥ २६ ॥ दिष्ट्या जनार्दन भवानिह न॰ प्रतीतो योगेश्वरैरपि दुरापगति सुरेशै ॥ छिन्ध्याशु न सुतकलत्रधनाप्तगेहदेहादिमोहरशनां भवदीयमायाम् ॥ २७ ॥ इत्यर्चित संस्तुतश्च भक्तेन भगवान् हरि॰ ॥ अक्रूरं सस्मितं प्राह गीर्भि सम्मोहयन्निव ॥ २८ ॥ श्रीभगवानुवाच ॥ त्व नो गुरु॰ पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा ॥ वयं तु रक्ष्याः पोष्याश्च अनुकम्प्या॰ प्रजा हि व॰ ॥ २९ ॥ भवद्विधा महाभागा निषेव्या अर्हसत्तमा॰ ॥ श्रेयस्कामैर्नृभिर्नित्य देवाः स्वार्था न साधवः ॥ ३० ॥

गति र्यस्य स भवान् नोऽस्माकमिह गृहे प्रतीत॰ चाक्षुषसाक्षात्कारात्मकप्रतीतिविषयो जात इति दिष्ट्या, तेन महानानन्दो जात इत्यर्थः । स्ववाञ्छित प्रार्थयते— छिन्धीति । सुतकलत्रादिषु मोहः आसक्तिरेव रशना पाशः तद्रूपा नोऽस्माक भवदीया माया त्वमाशु छिन्धि विनाशयेत्यर्थः । कलत्र स्त्री । आप्ता मातापित्रादयो वृद्धाः ॥ २७ ॥ इत्येव भक्तेन अक्रूरेणार्चितः सस्तुतश्च भगवान् हरिः सस्मित स्मितेन सहित यथा भवति तथा गीर्भिरक्रूर सम्मोहयन्निव प्राहेत्यन्वय. । 'हासो जनोन्मादकरी च माया' इति वचनात्तत्स्मितस्य मायारूपत्वात्तन्मोहनार्थं स्मित साहित्य ज्ञेयम् । 'तथापि तस्य परमभक्तत्वान्न तथा मोह' इति सूचयितुमिवशब्दप्रयोगः ॥ २८ ॥ तदुक्तिमेवाह— त्वमिति सप्तभिः । त्व नोऽस्माक गुरु. पूज्य., यत. पितृव्यः पितुर्भ्राता च । श्लाघ्य. प्रशसनीयो बन्धुश्च । वय तु नित्यदा भवता रक्ष्या. कुमार्गत. शत्रुभ्यश्च निवर्तनीयाः, पोष्या वर्धनीयाः अनुकम्प्याः, कृपायोग्याश्च । हि यस्माद् वो युष्माक प्रजा. पुत्रादिरूपाः ॥ २९ ॥ 'न केवलमस्माकमेव यूय पूज्या, अपि तु सर्वेषामपि' इति सहेतुकमाह— भवद्विधा इति ।

श्रेयस्कामैर्मोक्षादिफलार्थिभिर्नृभिर्भवादृशा नित्य निषेव्याः । तत्र हेतुमाह– अर्हसत्तमा इति । उत्कृष्टतमा इत्यर्थः । तत्रापि हेतुमाह– महाभागा इति । अनेकजन्मानुष्ठितपुण्यवन्त इत्यर्थः ॥ ननु ' देवाना सेव्यत्व प्रसिद्धम् ' इत्याशङ्क्याह– देवा इति । देवाः स्वार्थाः स्वार्थमपेक्ष्य उपकार कुर्वन्ति । साधवः भागवतास्तु न तथा, किन्तु केवल परमार्थसाधनपरा. ॥ अतो देवाद्यपेक्षयापि साधूना सेव्यत्वमिति भाव' ॥ ३० ॥ हेत्वन्तरेणापि देवादिभ्यः साधूनामुत्कर्षमाह– नहीति । साधूनामपेक्षया न अम्मयानि जलमयानि गङ्गादितीर्थान्युत्कृष्टानि, न वा मृच्छिलामया देवा उत्कृष्टाः । ' कुत ' इत्यपेक्षायामाह– हि यस्मात्ते मृच्छिलामया देवा उरुकालेन सेविताः पुनन्ति, साधवस्तु दर्शनात्तत्क्षण एव ज्ञानभक्त्याद्युपदेशमात्रेण पुनन्तीति साधव एव सेव्या इत्यर्थः ॥ ३१ ॥ ' किञ्चित् चिकीर्षयन् प्रागात् ' इत्युक्त तदेव कार्यमादिशति– स उक्तविध साधुर्भवान् नोऽस्माकं ये सुहृदस्तेषा

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामया· ॥ ते पुनन्त्युरुकालेन दर्शनादेव साधव· ॥ ३१ ॥
स भवान् सुहृदां वै न श्रेयान् श्रेयश्चिकीर्षया ॥ जिज्ञासार्थं पाण्डवानां गच्छस्व त्वं गजाह्वयम् ॥ ३२ ॥
पितर्युपरते बाला सह मात्रा सुदुःखिताः ॥ आनीता· स्वपुरं राज्ञा वसन्त इति शुश्रुम ॥ ३३ ॥
तेषु राजाऽम्बिकापुत्रो भ्रातृपुत्रेषु दीनधी· ॥ समो न वर्तते नून दुष्पुत्रवशगोऽन्धदृक् ॥ ३४ ॥
गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा ॥ विज्ञाय तद्विधास्यामो यथा श सुहृदां भवेत् ॥ ३५ ॥
इत्यक्रूर समादिश्य भगवान् हरिरीश्वर ॥ सङ्कर्षणोद्धवाभ्यां वै ततः स्वभवन ययौ ॥ ३६ ॥

मध्ये श्रेष्ठः, अतः पाण्डवाना श्रेयश्चिकीर्षया तद्वृत्तजिज्ञासार्थ गजसाह्वय हस्तिनापुर गच्छस्व गच्छेत्यन्वय' ॥ ३२ ॥ पितरि पाण्डावुपरते मृते सति बालास्तत्पुत्रा युधिष्ठिरादयो राज्ञा धृतराष्ट्रेण स्वपुर प्रत्यानीतास्तत्र मात्रा पृथया सह आतिदुखिताः वसन्ते निवसन्ति इति शुश्रुम श्रुतवन्तो वयम् ॥ ३३ ॥ दुःखे हेतुमाह–तेष्विति । अम्बिकापुत्रो राजा धृतराष्ट्र. तेषु भ्रातृपुत्रेषु सम' स्वपुत्रतुल्यतया न वर्तते । नून निश्चितमेतत् ॥ तत्र हेतुमाह– दुष्पुत्रेति । दुष्टो यः पुत्र. दुर्योधनस्तद्वशग इत्यर्थः । तत्र हेतु'– अन्धदृगिति । अन्धा दृक् नेत्ररूपा यस्य सः ॥ न केवल नेत्राभ्यामेवान्धः, किंतु दीना विवेकहीना धीर्यस्य तथाभूतोऽपीति ॥ ३४ ॥ अतस्त्व हस्तिनापुर गच्छ । अधुना तेषा पाण्डवाना वृत्त वर्तन साध्वसाधु वेति तद्वृत्त विज्ञाय सुहृदा तेषा शं सुख यथा भवेत्तथोपाय विधास्यामः करिष्याम ॥ ३५ ॥ इत्येवमक्रूर समादिश्याज्ञाप्य सङ्कर्षणोद्धवाभ्या सहितस्ततः अक्रूरभवनात्

१ " न ह्यमयानि । किंच निवृत्तिमार्गेऽपि तीर्थानि सेव्यानि तदपेक्षयाप्येत एव सेव्या इत्याह । न ह्यम्मयानि तीर्थानीति । शिलामया न भवति स्थानस्य देवतात्वपक्षे मृण्मयता प्रतिमाया देवतात्वपक्षे तु शिलामयत्वम् । उभयमपि लोकप्रसिद्ध निवार्यते शास्त्रार्थप्रामाण्यात् । अन्यथा शास्त्रमनुवादक सत्प्रमाणमेव भवेत् । किंच अत एव पावित्र्यमपि तत्कृतमुत्तम न भवति यतस्ते उरुकालेन पुनन्ति महता कालेन विध्युक्तानुसारेण तीर्थसेवाया चित्तशुद्धेरैक्यत्वात् । साधवस्तु ज्ञानोपदेष्टार भक्तिपूर्वका वा दर्शनमात्रेणैव ज्ञानभक्त्यो साधितत्वात् फलित उत्कर्ष " इति सुबोधिनी ।

स्वभवन ययौ । आज्ञापने सामर्थ्यमाह—ईश्वर इति । तत्र हेतुमाह—भगवानिति । ऐश्वर्यादिगुणपूर्णत्वादित्यर्थः ॥ ३६ ॥ इति श्रीवल्लभाचार्य-वश्यगोपाल-सूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने ॥ गतोऽष्टचत्वारिंशोऽपि कुब्जारतिनिरूपकः ॥ ३ ॥ ॥ ७ ॥ ॥ पाण्डववृत्तमाज्ञाय कृष्णायावर्णयत् सुधीः ॥ अक्रूर इति ह्येकोनपञ्चाशे विनिरूप्यते ॥ १ ॥ सोऽक्रूर. कौरवेन्द्राणा यशोभिः कीर्तिहेतुभिः कृतदेवब्राह्मणाद्यायतनादिभिरङ्कित हास्तिनपुर गत्वा तत्र भीष्मेण सहितमाम्बिकेय धृतराष्ट्र विदुरादींश्च ददर्शेत्यन्वयः । तत्र पृथा कुन्ती ॥ १ ॥ बाह्लीकपुत्रः सोमदत्तः। भारद्वाजो द्रोण. । गौतम. कृपः । द्रौणिरश्वत्थामा ॥ २ ॥ गान्दिनीसुतोऽक्रूरो यथावत् यथायोग्य हास्यहस्तग्रहणालिङ्गननमस्कारादिपूर्वक बन्धुभिः सह उपसङ्गम्य मिलित्वा तैश्च

इति श्रीमद्भा० महापु०दशमस्कन्धे राजस०नि० कुब्जारमणादिनि० नामाष्टचत्वारिंशोऽध्याय· ॥४८॥

॥ श्रीशुक उवाच ॥

स गत्वा हास्तिनपुर पौरवेन्द्रयशोऽङ्कितम् ॥ ददर्श तत्राम्बिकेय सभीष्म विदुर पृथाम् ॥ १ ॥
सहपुत्र च बाह्लीक भारद्वाज सगौतमम् ॥ कर्णं सुयोधन द्रौणि पाण्डवान् सुहृदोऽपरान् ॥ २ ॥
यथावदुपसङ्गम्य बन्धुभिर्गान्दिनीसुत· ॥ सम्पृष्टस्तैः सुहृद्वार्तां स्वय चापृच्छदव्ययम् ॥ ३ ॥
उवास कतिचिन्मासान् राज्ञो वृत्तविवित्सया ॥ दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिन· ॥ ४ ॥
तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् ॥ प्रजानुरागं पार्थेषु न सहद्भिश्चिकीर्षितम् ॥ ५ ॥
कृत च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम् ॥ आचख्यौ सर्वमेवास्मै पृथा विदुर एव च ॥ ६ ॥

सुहृद्वार्ता सम्पृष्टः स्वयमपि तेषामव्यय कुशलमपृच्छदित्यन्वयः ॥ ३ ॥ राज्ञो धृतराष्ट्रस्य वृत्तस्य विवित्सया ज्ञातुमिच्छया कतिचिन्मासांस्तत्रोवास । 'तत्र किञ्चित्कालावस्थानेनैव तद्वृत्त ज्ञातु शक्यते, न झटित्यनायासेनैव ' इत्याशयेन राजान विशिनष्टि— दुष्टाः प्रजा· पुत्रा दुर्योधनादयो यस्य तस्य । अल्पो मन्दः सार· बुद्धिर्यस्य तस्य । तथा खला दुष्टाः कर्णादयस्तेषा छन्दमिच्छामनुवर्तितु शील यस्य तस्य ॥ ४ ॥ तेजः पराभिभव-सामर्थ्यम् । ओजः इन्द्रियसामर्थ्यम् । बलं शारिरसामर्थ्यम् । वीर्य शौर्यम् । प्रश्रयः विनयः । पार्थानां तेजआदिगुणास्तथा तेषु प्रजानुराग च न सहद्भिरसहमानैर्धार्तराष्ट्रैर्दुर्योधनादिभिः यद्गरदानादि विषप्रदानादिक अपेशल दुष्ट कर्म कृत, यच्चाग्रे चिकीर्षित तत् सर्वमस्मै अक्रूराय पृथा विदुरश्च आचख्याविति द्वयोरन्वयः ॥ ५ ॥ ६ ॥

एव प्रसङ्गात् पृथा सर्वमाचख्यौ इति उक्तम् । तत पूर्वं तत्सम्मीलनप्रकारमाह–पृथा त्विति । तुशब्देनान्येभ्यस्तस्याः स्नेहाधिक्य व्याकुलताधिक्यं च सूचयति । पृथा तु भ्रातरमक्रूर प्राप्तमाश्रुत्य तमुपसृत्य तत्समीप गत्वा उवाच । व्याकुलता दर्शयन्नाह–अश्रूणा कला लेशा ययोस्ते ईक्षणे यस्याः सा । तत्र हेतुमाह–जन्मनिलय पितृगृह स्मरन्तीति ॥ ७ ॥ तदुक्तिमेवाह–अपीति षड्भिः । 'त्वद्दर्शनादेव मम महानानन्दो जात' इत्याशयेन सम्बोधयति–सौम्येति । अपि किं नोऽस्मान् मे पित्रादय. स्मरन्ति ? जामयः कुलस्त्रियः ॥ ८ ॥ 'अन्ये स्मरन्तु मा वा, अस्मद्दुःखनिवृत्तिस्तु रामकृष्णस्मरणेनैव' इत्याशयेन पृच्छति–भ्रात्रेय इति । मम भ्रातृपुत्रः कृष्णो रामश्च पैतृष्वस्रेयान् पितृभगिन्या मम सुतान् युधिष्ठिरादीन् किं स्मरति ? अनेन देहसम्बन्धेनापि स्मरण सम्भवतीति सूचितम् । 'सम्बन्धविनापि स एव शरणयोग्य' इति आह– शरण्य इति । तत्र हेतुमाह–भक्तवत्सल

पृथा तु भ्रातर प्राप्तमक्रूरमुपसृत्य तम् ॥ उवाच जन्मनिलय स्मरन्त्यश्रुकलेक्षणा ॥ ७ ॥
अपि स्मरन्ति न सौम्य पितरौ भ्रातरश्च मे । भगिन्यो भ्रातृपुत्राश्च जामय. सख्य एव च ॥ ८ ॥
भ्रात्रेयो भगवान् कृष्ण' शरण्यो भक्तवत्सल ॥ पैतृष्वस्रेयान् स्मरति रामश्चाम्बुरुहेक्षणः ॥ ९ ॥
सपत्नमध्ये शोचन्तीं वृकाणां हरिणीमिव ॥ सान्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान् ॥ १० ॥
कृष्णं कृष्ण महायोगिन् विश्वात्मन् विश्वभावन ॥ प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम् ॥ ११ ॥

इति । 'रक्षायामसमर्थेन स्मरणेऽपि किम्' इत्याशङ्क्याह– भगवानिति । तथापि रक्षायामायासमाशङ्क्य दृष्टिमात्रेण सन्तापनिवर्तकत्व सूचयन्त्याह– अम्बुरुहेक्षण इति ॥ ९ ॥ वृकाणा घातकाना मध्ये हरिणीमिव सपत्नाना शत्रूणा दुर्योधनादीना मध्ये शोचन्तीं मा बालकान् मत्पुत्राश्च किं वाक्यै. सान्त्वयिष्यतीत्यन्वयः । सान्त्वने दीनत्व हेतु सूचयन्त्याह– पितृहीनानिति ॥ १० ॥ एवमक्रूर प्रत्युक्त्वा प्रेमवेगेन समीपमागत मत्वा भगवन्तमेव प्रार्थयते–कृष्ण इति । कृष्ण कृष्णेति आदरे वीप्सा । अत्र प्रपन्ना शरणमागता मा पाहि । शरणागमने हेतुमाह– शिशुभिर्बालकैः सहावसीदन्तीं क्लिश्यन्तीमिति 'अस्मद्रक्षा तव युक्तैव' इत्याशयेन सम्बोधयति । विश्वभावनेति । सर्वपालकेत्यर्थः । तत्र सामर्थ्ये हेतु सूचयन्ती सम्बोधयति– गोविन्देति । गावः इन्द्रियाणि नियम्यतया विन्दत इति तथा । 'उपादानत्वात् सर्वात्मकत्वेनापि रक्षाया त्व समर्थ' इत्याशयेन पुनः सम्बोधयति–

[1] "कृष्णकृष्ण । एव मनोरथमुक्त्वा तदानीमेव समागत भगवन्त मन्यमाना समुखतया प्रार्थयते–कृष्ण कृष्णेति । आदरे वीप्सा । अकस्मादागते वा न त्वहमन्यत्र तव दृष्टिभ्रमो भविष्यतीत्याशक्य महायोगिन्निति" इति सुबोधिनी ।

विश्वात्मन्निति । विश्वरूपधारणसामर्थ्ये तथात्वेऽपि विकाराभावे च हेतु सूचयन्ती पुनः सम्बोधयति— महायोगिन्निति । महान् योगः उपायः मायाख्योऽस्यास्तीति तथा ॥ ११ ॥ ननु ' ब्रह्मरुद्रादीना रक्षकाणा सत्त्वात्तान् विहाय मामेव शरण कुतो गच्छसि ' इत्याशङ्क्याह— नान्यदिति । मृत्योः ससारात् उत्पत्तेश्च बिभ्यता नृणा तव पदाम्भोजादन्यत् शरण रक्षक न पश्यामि । ब्रह्मादीनामपि तुल्ययोगक्षेमत्वादित्याशयः ॥ तव चरणाम्भोज तु रक्षक भवत्येव । तत्र हेतुमाह— आपवर्गिकात् मोक्षप्रदात्। मोक्षप्रदत्वे हेतु सूचयन्त्याह— ईश्वरस्येति ॥ १२ ॥ एव शरणमागता प्रणमति— नम इति । कृष्णाय सदानन्दमूर्तये नमः । शुद्धाय रागद्वेषादिदोषरहिताय । ब्रह्मणे वेदान्तप्रतिपाद्याय । परमात्मने अन्तर्यामिणे । योगेश्वराय योगफलदात्रे । युज्यत इति योग फल तस्मै योगादिफलरूपाय नमः ॥ १३ ॥ हे राजन् ' भवता प्रपितामही कुन्ती इत्येव स्वजन वसुदेवादिबन्धुवर्ग जगदीश्वर कृष्ण चानुस्मृत्य तद्वियोगादिदुःखिता सती प्रारुददित्यन्वयः ॥ १४ ॥ कुन्त्या सह समं सुख दुःख च यस्य सोऽक्रूरो महायशा प्रख्यातकीर्तिः

नान्यत्तव पदाम्भोजात् पश्यामि शरण नृणाम् ॥ बिभ्यतां मृत्युससारादीश्वरस्यापवर्गिकात् ॥ १२ ॥ नम कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ॥ योगेश्वराय योगाय त्वामह शरणं गता ॥ १३ ॥ श्रीशुक उवाच ॥ इत्यनुस्मृत्य स्वजन कृष्ण च जगदीश्वरम् ॥ प्रारुदद्दुःखिता राजन् भवतां प्रपितामही ॥ १४ ॥ समदुःखसुखोऽक्रूरो विदुरश्च महायशाः ॥ सान्त्वयामासतु कुन्ती तत्पुत्रोत्पत्तिहेतुभिः ॥ १५ ॥ यास्यन् राजानमभ्येत्य विषम पुत्रलालसम् ॥ अवदत् सुहृदां मध्ये बन्धुभिः सौहृदोदितम् ॥ १६ ॥ अक्रूर उवाच ॥ भो भो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन ॥ भ्रातर्युपरते पाण्डावधुनाऽऽसनमास्थितः ॥ १७ ॥

विदुरश्च तस्याः पुत्रोत्पत्तिहेतुभिः ' धर्मानिलेन्द्रादिभ्यो जाता महाप्रभावास्तव पुत्राः, अतस्त्वया खेदो न कार्य ' इति कथनैः कुन्तीं सान्त्वयामासतुरित्यन्वयः ॥ १५ ॥ यास्यन् मथुरा प्रति गमिष्यन्नक्रूर एकान्ते कथने तस्य लज्जा न स्यात् अतः सुहृदा बन्धूना मध्ये राजान धृतराष्ट्रमभ्येत्य बन्धुभिः कृष्णरामादिभिः यत्सौहृदेन प्रेम्णा उदितं कथित तदवददित्यन्वयः । तथाकथने हेतुमाह— विषममिति । भ्रातृपुत्रेषु स्वपुत्रेषु च विषमबुद्धियुक्तम् । तत्र हेतुमाह— पुत्रलालसमिति । पुत्रेष्वासक्तबुद्धिमित्यर्थः ॥ सौहृदोदितमित्युक्त्या पूर्वमनुक्तमपि तैरुक्तमित्युक्त ज्ञेयम् ॥ १६ ॥ अक्रूरोक्तिमेवाह— भो भो वैचित्रवीर्येति । ' राज्यासनस्थितेन त्वया कीर्तिरेव वर्धनीया, वैषम्ये तु तद्विनाशः स्यात्, तन्नोचितम् ' इत्याशयेन सम्बोधयति— कुरूणां कीर्तिवर्धनेति । भ्रातरि पाण्डौ उपरते मृते सति त्वमधुना नृपासनमास्थितः अधिष्ठितवान् ॥ १७ ॥

अतो धर्मेण धर्मशास्त्रोक्तप्रकारेण उर्वी पृथ्वीस्थान् जनान् पालयन् शीलेन सुस्वभावेन प्रजा रञ्जयन् स्वामिस्तासा रागमुत्पादयन् स्वेषु भ्रातृपुत्रेषु स्वपुत्रेषु च समतया वर्तमानः श्रेयो धर्मार्थादिफल कीर्तिं चावाप्स्यसि ॥ १८ ॥ अन्यथा यथोक्तविपरीतमाचरन् कुर्वंस्तु लोके जनैर्गर्हितो निन्दितः सन् तमो नरक यास्यसे प्राप्स्यसि । यस्मादेव तस्मात् पाण्डवेषु आत्मजेषु च विषये समत्वे वर्तस्व ॥ १९ ॥ ननु 'आत्मजानात्मजेषु कथ समत्व स्यात्' इत्याशङ्क्याह— नेहेति । इहलोके कस्यचित् केनचित् साकमत्यन्त नित्य सवासः सम्यक्स्थितिर्नास्ति । तत्र कैमुत्यन्यायमाह— हे राजन्! स्वेन देहेन सहापि नात्यन्तसवासः, भार्यापुत्रादिभि. सहात्यन्तसवासो नास्तीति किमु वक्तव्यमित्यर्थः ॥ २० ॥ एतदेव स्पष्टयति— एक इति । जन्तुः शरीरी एक एव प्रसूयते जायते, नतु जायादिभिः सहितः । तथा एक एव प्रलीयते म्रियते, नहि म्रियमाणेन सह तत्पुत्रादयोऽपि

धर्मेण पालयन्नुर्वी प्रजा शीलेन रञ्जयन् ॥ वर्तमान सम स्वेषु श्रेय कीर्तिमवाप्स्यसि ॥ १८ ॥ अन्यथा त्वाचरँल्लोके गर्हितो यास्यसे तमः ॥ तस्मात् समत्वे वर्तस्व पाण्डवेष्वात्मजेषु च ॥ १९ ॥ नेह चात्यन्तसवासः कर्हिचित् केनचित् सह ॥ राजन् स्वेनापि देहेन किमु जायात्मजादिभि· ॥ २० ॥ एकः प्रसूयते जन्तुरेक एव प्रलीयते ॥ एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ २१ ॥ अधर्मोपचित वित्त हरन्त्यन्येऽल्पमेधस ॥ सम्भोजनीयापदेशै-र्जलानीव जलौकस ॥ २२ ॥ पुष्णाति यानधर्मेण स्वबुद्ध्या तमपण्डितम् ॥ तेऽकृतार्थं प्रहिण्वन्ति प्राणा राय सुतादय ॥ २३ ॥ स्वय किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः ॥ असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तम· ॥ २४ ॥

म्रियन्ते । तथा एक एव सुकृत स्वकृतपुण्यफल सुख भुङ्क्ते, तथा एक एव च दुष्कृत पापफल दुःख भुङ्क्ते ॥ २१ ॥ किञ्च 'यदा च सह सवसन्ति तदापि क्लेशोपार्जितवित्तापहारितया विचारेण पुत्रादयः शत्रव एव' इत्याह— अधर्मोपचितमिति । सम्भोजनीयाः 'पोष्याः पुत्रादय' इति व्यपदेशैः कथनैरल्पमेधसः मूढस्याधर्मेणार्जित वित्त ते हरन्ति । तत्र दृष्टान्तमाह— यथा जलौकसो मत्स्यस्य जीवनहेतुभूतानि जलानि तत्पुत्रादयो हरन्ति, तद्वदिति ॥ २२ ॥ किञ्च स्वबुद्ध्या स्वकीयबुद्ध्या यान् अधर्मेणापि पुष्णाति ते प्राणादयस्तमपण्डित मूर्ख अकृतार्थं अप्राप्तमनोरथमेव प्रारब्धवशान्मृतं जीवन्तमेव वा प्रहिण्वन्ति त्यजन्ति । आदिपदेन देहकलत्रादिग्रहणम् ॥ २३ ॥ स्वय तु असिद्धार्थः अपूर्णमनोरथ एव तै· पुत्रादिभिस्त्यक्तः किल्बिषं तत्पोषणार्थं कृत पापमादाय अन्ध तमः घोरतामिस्रादिनरक प्रविशति

१ "पुष्णाति यान् । ननु लौकिक वैदिक नित्य कर्म कर्तव्यमिति तदर्थं ते भोजिता इति चेत्तत्राह—अकृतार्थमिति । 'सभोजनीयमपिशाचभिक्षा' इति वाक्यान्न तेषा दान परलोकाय इहलोके भवत्युपकार । यदि ते उपकार मन्येरन् तदपि नास्तीत्यकृतार्थत्वेनैव । किञ्च अवसरे प्राप्ते प्रकर्षेण हिन्वन्ति सकटस्थाने त्यजन्तीत्यर्थ" इति सुबोधिनी ।

किल्बिषमादायेत्युक्तमेव नरकप्राप्तिहेतु स्पष्टयति— स्वोचितवर्णाश्रमधर्मविमुख इति । तत्र हेतुमाह— नार्थकोविद इति । स्वार्थे मूर्ख इत्यर्थः। ॥ २४ ॥ उपदेशमुपसहरति— तस्मादिति। 'हे राजन्' हे प्रभो'' इति सम्बोधनद्वयेन 'तव विचारपूर्विकैव स्थितिर्युक्ता' इति सूचयति— तस्मात् पुत्राद्यासक्तेरनर्थमूलत्वादिम लोक धनपुत्रादिसर्वं स्वप्नमनोरथश्च तत्तेन तुल्यमनित्य वीक्ष्य निश्चित्य आत्मना बुद्ध्या आत्मान मन आयम्य वशीकृत्य शान्तः रागद्वेषादिरहित. सन् सर्वत्र समो भवेत्यन्वयः ॥ २५ ॥ एव प्रतिबोधितो धृतराष्ट्रः प्राह— यथेति। 'अत्युदारस्य तव मूढेऽपि मय्येव ज्ञान-प्रदानमुचितमेव' इति सूचयन् सम्बोधयति— दानपते इति । यथा भवान् कल्याणीं शुभावहा वाच वदति, तथा अनया वाचा न तृप्यामि । तत्र दृष्टान्तमाह— मर्त्य इति । मरणधर्मकः अमृत प्राप्य अशित्वा यथा न तृप्यति तद्वदित्यर्थ ॥ २६ ॥ 'उदासीनो माभूत्' इत्याशयेन प्रेमातिशय सूचयन्

तस्माल्लोकमिमं राजन् स्वप्नमायामनोरथम् ॥ वीक्ष्यायम्याऽऽत्मनाऽऽत्मान सम· शान्तो भव प्रभो ॥२५॥

॥ धृतराष्ट्र उवाच ॥

यथा वदति कल्याणी वाच दानपते भवान् ॥ तथाऽनया न तृप्यामि मर्त्य· प्राप्य यथाऽमृतम् ॥ २६ ॥
तथाऽपि सूनृता सौम्य हृदि न स्थीयते चले ॥ पुत्रानुरागविषमे विद्युत् सौदामनी यथा ॥ २७ ॥
ईश्वरस्य विधि को नु विधुनोत्यन्यथा पुमान् ॥ भूमेर्भारावताराय योऽवतीर्णो यदो[1] कुले ॥ २८ ॥

सम्बोधयति— सौम्येति। यद्यपि भवतो वाक् सूनृता मधुरा हिता च तथापि चले व्याकुले मम हृदि न स्थीयते प्रतिष्ठिता न भवति। तत्र दृष्टान्तमाह— विद्युदिति। सुदामा पर्वतस्तत्र भवा सौदमिनी, सा यथा स्फटिकमये स्फुरिता झटित्येव लीयते तद्वदित्यर्थः। सुदामा माला तदाकारा वा॥ हृदश्चाञ्चल्ये हेतुमाह- पुत्रानुरागविषम इति ॥२७॥ ननु 'एव जानतोऽपि तव कथमय सम्मोह., मनः समाधीयताम्' इत्यत्राह— ईश्वरस्येति। ईश्वरस्य विधि चिकीर्षित को नु पुमान्

---

१ "तर्हि यत्न कथ न क्रियते चित्तवृत्तिनिरोधस्य योगस्य विद्यमानत्वादिति चेत्तत्राह— ईश्वरस्येति । ईश्वरेण कश्चन प्रकारो विहित एव प्रकारेणैवैतत्कर्तव्यामिति उक्तोऽन्यथा कर्त्तु शक्त एतद्विज्ञानमापोद्वाभ्या परिश्रमेण भवति तस्मिन् कृते न काप्यनुपपत्ति । एव ज्ञात्वा को वा पुमान् विवेकी समर्थोऽपि ईश्वरविचारित प्रकार धुनोति दूरीकरोति कापित करोति। नन्वीश्वर उदासीन "नादत्ते कस्यचित्पाप न चैव सुकृत विभु" इति वाक्यादज्ञानेनैव तथा चित्त जायते। नन्वीश्वरस्तथा करोतीति चेत्तत्राह— भूमेर्भरावतारायेति। भगवान् हि भूभारहरणार्थमवतीर्ण, अन्यथावतारमेव न कुर्यादतो ज्ञायते भगवता अन्य प्रकारो विचारित इति । नन्वेतदपि नागीकर्त्तव्य वाक्यविरोधादतोऽवतारस्य प्रयोजनातरमनवतरण वा कल्पनीयमितिचेन्न, तथा सति शास्त्रवैकल्यात्सर्वमुक्तिर्वा प्रसज्येति अधिकारि पर शास्त्रमित्यपि पक्षे यथा सर्वगुणसपत्तिर्मयि तथा कस्यापीति सर्वेषामनाश्वास एव स्यादतो व्यभिचारादीश्वरेच्छा स्वतत्रेति वक्तव्यम् । एवमपि शास्त्रवैकल्यमिति चेत्सत्य, न सर्वत्र शास्त्र प्रमाण किंतु क्वचिदेव यत्रेश्वरेच्छा यथोक्तसाधनेऽप्यजननात् अत शास्त्रमेव प्रमाण यदि शास्त्रानुसारेणापि कदाचिन्न भवति तदेश्वरविधिरिति कल्प्यते । यथा मण्यादिप्रतिबन्धे दाहाभावाच्छक्ति परिकल्प्यते सा अग्नौ मणौ चेत्यत्र वयमुदासीना तदा तादृशस्थले ईश्वरेच्छा नियामिकेति ज्ञातव्यम् । ईश्वरत्वादेव न पर्यनुयोग लोके च महाराजाज्ञादिषु सामान्यविशेषभाव श्रूयते । सर्वतो निरुपद्रुतेऽपि देशे कस्यचिदुपद्रवो महाराजेच्छया भवतीति न चैतावता सामान्याज्ञया निष्कटक राज्य विरुध्यते अतो निमित्त-भूतानस्मदादीन मर्यादाया स्थापयतीति युक्तमेव ज्ञातेऽपि शास्त्रे वैषम्यम् । अन्यथा भगवान् यदो कुलेऽवतीर्णो भवेत्" इति सुबोधिनी ।

अन्यथा विधुनोति अन्यथा कर्तुं शक्नोतीत्यर्थः । 'कोसावीश्वरः, किं च तच्चिकीर्षितम्' इत्यपेक्षायामाह— भूमेरिति । मत्पुत्रादिवधेन भूमिभारस्यावताराय अपनयनाय यो यदोः कुलेऽवतीर्णोऽस्ति स श्रीकृष्ण एवेश्वरः । तथाच तद्भक्तद्रोहस्य तच्चिकीर्षितदुर्योधनादिवधानुगुणत्वात्तादिच्छयैव अय मम मोह इत्याशय' ॥ २८ ॥ 'कथ तदिच्छयापि मोहः सम्भवति' इती इत्यपेक्षाया तस्यान्तर्यामित्व वदन् प्रणमति— य इति । दुर्विमर्शपथया अवितर्कमार्गया निजमायया स्वशक्तिरूपया प्रकृत्या इद ब्रह्मादिशरीरजाल सृष्ट्वा तस्मिन्नन्तर्यामितया प्रविष्टः सन् गुणान् विभजते सत्त्वादिगुणकार्य— शान्तिरागद्वेषादीनुत्पादयति तस्मै परमेश्वराय नमः । ननु 'परमेश्वरस्य विश्वसर्गादिना किं प्रयोजनम्' इत्याशङ्क्य 'स्वविहार एव' इत्याशयेनाह— दुरवबोधो यो विहार. क्रीडा स एव तन्त्र मुख्य कारण यस्य तस्य ससारचक्रस्य गतिर्भ्रमण यस्मात्तस्मा इति ॥ २९ ॥ स यादवोऽक्रूरो नृपतेर्धृतरा-

यो दुर्विमर्शपथया निजमाययेदं सृष्ट्वा गुणान् विभजते तदनुप्रविष्ट ॥ तस्मै नमो दुरवबोधविहारतन्त्रससारचक्रगतये परमेश्वराय ॥ २९ ॥ श्रीशुक उवाच ॥ इत्यभिप्रेत्य नृपतेरभिप्राय स यादव· ॥ सुहृद्भि· समनुज्ञात· पुनर्यदुपुरीमगात ॥ ३० ॥ शशस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् ॥ पाण्डवान् प्रति कौरव्य यदर्थं प्रेषित स्वयम् ॥ ३१ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां सहितायां दशमस्कन्धे राजसनिरोधनिरूपणप्रकरणे पाण्डववृत्तनिरूपण नाम एकोनपञ्चाशत्तमोऽध्याय· ॥ ४९ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥

॥ पूर्वार्ध समाप्तिमगमत् ॥

ष्ट्रस्याभिप्रायमित्येव परस्पर सम्भाषणेनाभिप्रेत्य ज्ञात्वा सुहृद्भिः पाण्डवादिभिः सम्यगनुज्ञातः पुनर्यदुपुरीं मथुरामगादित्यन्वयः ॥ ३० ॥ 'तव कुलेऽप्येवविधा दुर्जना जाता' इत्याशयेन सम्बोधयति— कौरव्येति । यदर्थ धृतराष्ट्रवृत्तविज्ञानार्थ भगवता स्वय प्रेषितस्तत्पाण्डवान्प्रति धृतराष्ट्रस्य विचेष्टित विषप्रदानादि कृत सर्व रामकृष्णाभ्या शशस कथयामासेत्यन्वय' ॥ ३१ ॥ इति श्रीवल्लभाचार्य—वंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणा पादसेवाधिकारिणा ॥ १ ॥ श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येय टीका बालप्रबोधिनी ॥ २ ॥ रचिता दशमे तत्र राजसरोधवर्णने ॥ ऊनपञ्चाशत्तमोऽगात पाण्डववृत्तबोधक' ॥ ३ ॥ इति दशमपूर्वार्धटीका बालबोधिनी समाप्तिमगात् ॥

